

# कुमुदिनीचन्द्रः ।

## उपन्यासः ।

महर्षिदयानन्ददिग्विजयमहाकाव्यकारेण
श्रीदिव्यानन्दमुनिना मेधाव्रताचार्येण प्रणीतः ।

[ संवत् २००८ । शाकः १८७३ । ई० सन १९५२ ]

मूल्यं रूप्यकचतुष्टयम् ।

# हर्षसमाचारः ।

वार्ता च कौतुकवती विमला च विद्या लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रयं प्रसरति स्वयमेव लोके ॥

न च न जानन्ति प्रेक्षावन्तो भवन्तो यत्सुरगिरि कविवरैर्विरचितानि विपुललभ्यमान समासजटिलानि दुरवगाहश्लिष्टपदानि विबुधैकगम्यानि सन्ति रम्याणि गद्यपद्यमधुराणि मनोहराणि काव्यानीति । तानीदानीन्तनैः सम्यैराङ्गलभाषापारीणैः पुरपधुरीणैः समासपरुषाणि क्लिष्टानीति कृत्वाऽवलोकयितुं निरुत्सह्यते । तदिदं विदुषा विदुषा नितरामावश्यकी संस्कृत भाषोन्नतिकरी सरलसरससुरगिरा ग्रन्थरचनचातुरी ।

किञ्च प्रेक्ष्यते निपुणं निपुणैर्विद्वद्गणैर्यत्प्रतिविषयं तत्तद्भाषानिष्णाताः स्वस्वभाषासाहित्य-सदनं प्रतिदिनमहमहमिकया रुचिररुचिरैर्ग्रन्थमणिभिः समलङ्कर्तुं प्रकामं प्रयतन्त इति ।

इत्यालोच्य साहित्यामृतसरोवरविहारिणा सूक्तिमौक्तिकाम्यवहारिणा श्रीलक्ष्मीमेधाव्रत-कविहंसेन गुर्जरदेशभाषारचिताश्चर्यकथामाश्रयीकृत्य ' कुमुदिनीचन्द्रो ' नामोपन्यासो व्यरचि सुरगिरि सरलललितवाचा ।

उपन्यासमिमं प्रकाशयाऽत्रभवता गुणपक्षपातिना सहृदयविपश्चितां करकमलेषु सादरं समर्प्यार्थ खलु वयं सर्वानन्दानामुपरि वर्तामहे । यत कस्य नानन्दं जनयति साहित्य-सेवोन्मुखी परिश्रमप्रवृत्तिः । तद्गुणगृह्यैर्गुणज्ञवरैः सहृदय काव्योपहारममुं परिगृह्य प्रोत्साहनीयोऽयं काव्यप्रणेता । येनाधिकमसौ सोत्सुकमना भवेदन्यग्रन्थप्रणयनै साहित्य-सेवां विधातुम् ।

इत समाहतोऽयं ग्रन्थो यदि साहित्यप्रणयिभिस्तदाऽन्यान्यपि तत्कृतानि प्रकाश-यिष्यन्ते काव्यानि ।

किम्बहुना सुज्ञेषु—
विदुषां वशंवद —
आद्यप्रकाशकोऽयं येवलार्यसमाजमन्त्री
सत्यव्रतः ।

संवत् १९७६
येवला नि नाशिक

विद्यादेवीमुपास्महे ।

वानप्रस्थाश्रमार्थं प्रस्थितेभ्य श्रीमन्मेधाव्रताचार्येभ्य ·

# परमादरपत्रम् ।

अयि मेधाव्रताचार्या ! धन्यं हि भवतां व्रतम् ।
समाप्य पुण्यं गार्हस्थ्यं वानप्रस्थाश्रमे मति ॥ १ ॥
वर्णिकल्पा नु भवता व्यतीता सुगृहस्थता ।
अध्यापने महान् कालो नीतो हि नवयौवने ॥ २ ॥
विद्वत्त्वं भवता भव्यं कवित्वं नरदुर्लभम् ।
वटोदरार्यशिष्याभि सर्वदा पूजितो भवान् ॥ ३ ।
विशाल आर्यधर्मोऽपि विवेकेन प्रचारित ।
श्रीदयानन्दशिष्याणां भवत पुरत स्थिता ॥ ४ ।
भवता जनक पुण्यो जगतो जीवनं खलु ।
जगज्जीवननाम्नैव सार्थं सज्जनसमत ॥ ५ ॥
गतो गृहं परित्यज्य पिता सन्यासमाश्रयत् ।
" पितॄन् समनुवर्तन्ते नरा " न्यायोऽद्यसार्थक ॥ ६ ॥
महाकाव्यप्रणेतारो वेदवेदाङ्गपारगा ।
पुण्यशीला विशेषाभा सम्मानार्हा कथं न हि ॥ ७ ॥
आदर्शशिक्षालयत काशीनाथेन दीयते ।
मेधाव्रताय सानन्दं परमादरपत्रकम् ॥ ८ ॥

मार्गशीर्ष शु ८
शक १८६९ ( तिलक )
दिनांक २१ ११ ४७

प्रणेता काशीनाथशर्मा
प्रदाता– येवलानगरस्थ
आदर्शशिक्षणमण्डलीयविद्यालय

तत्र तेषामयाथार्थ्येन वर्णने कवि सकलाभिरूपाणामीक्षायामुपहास्य न भजति। शाब्दिकाद्यश्च पदे पदे तमनुरुन्धन्ते। उक्तञ्च केनाप्यभियुक्तेन।

" अग्रे तार्किककेशरी प्रचलति क्रोधेन रक्तेक्षण ।
पश्चाद् याति च शब्दचारचतुरः कालापशार्दूलक ।
तन्मध्ये कवित ? कुरङ्गदयिते शक्नोषि चेज्जीवितुम् ।
हार रत्नमय गले तव तदा दास्याम्यह सादरम् ॥ १ ॥ '

सकविनाश्चैरत्र वनिताकामिनी अलङ्कारैरलङ्कर्त्तव्या, अपरत्र पदार्था आदर्त्तव्या, अन्यत्र गम्भीरपदानि निक्षेप्तव्यानि। सर्वमेतदतिदुष्करमत कियदसुकर कविकर्मेति किमु वक्तव्यम्। तत्रापि गद्यकाव्यनिर्माणमतिकठिन प्रजायताम्। पद्ये ह्येकस्यापि शब्दस्य चमत्कारकारित्वे विस्फुरतीव सकलमपि पद्यम्। गद्ये तु वाक्यान्तर्गतप्रतिशब्दस्यैव मनोहारित्व वाक्यविच्छित्ते प्रयोजकम्। अभियुक्ता अपि ' गद्यं कवीना निकष वदन्ति। ' इत्याद्यु ।

सत्यप्येवमतिदुष्करे काव्यविरचने महामहिमशालिन सरस्वतीप्रणयिन पुनरपि सर्वमान्याया गीर्वाणवाण्या अभ्युदयससाधनार्थं प्रयतन्ते। श्रीवृन्दावनगुरुकुलाधीतविद्य कवितानिर्माणचातुरीलब्धवर्णं बहुशो निजकविताकौमुदीसमाह्लादितरसिकजननिकर श्रीमेधाव्रतकविप्रकाण्डोऽप्यतएव कुमुदिनीचन्द्रमिममुपन्यासमुपन्यस्य भवदीक्षणलक्ष्यता निनाय।

अत्र हि मनोहारिकथावर्णनपूर्वकमनीतिकुशलेभ्यो नीतिरुपदिश्यते, सतीभ्य समुज्वलमुदाहरणमुदाह्रियते, त्रिविधार्तिविपन्नेभ्यस्तत्तद्दु खार्णवमुत्तरीतु कर्त्तव्यतासरणि संसूच्यते, काव्यकलाभवनान्त प्रवेष्टुकामेभ्यो नि श्रेणिरातन्यते, किञ्चात्र कविना प्रासङ्गिकनगरोद्यानविहारादीना वर्णनेषु सदर्शितमात्मन साहित्यशास्त्रावगाहनपाटवम्। किम्बहुना नास्ति साम्प्रतमेतादृक् सकलगुणगुम्फित संस्कृतवाग्युपन्यासान्तरम्। तदिममादित समाप्तिपर्यन्तं सम्यगवलोक्यामन्दानन्दसन्दोहेन प्रियन्तामात्मनश्चेतासि प्रेक्षावद्भिर्भवद्भि। सफलीक्रियताश्चास्य प्रणेतुर्महान् प्रयास। गुणावगुणविचारस्तु विद्वदधीन। नास्माभिस्तत्र किमप्युच्यते केवलं दिग्दर्शनार्थं पञ्चषा शब्दा लिख्यन्ते।

उपन्यासेऽस्मिन् परैरजितस्यानिलदुर्गाधीश्वरस्य वीरवरस्य श्रीकेसरिसिंहस्य तनूजन्मा शूराग्रणी श्रीचन्द्रसिंह प्रधानो नायक। नायिका चाखिलसीमन्तिनीसीमन्तमौक्तिकीभूता धीमती कुमुदिनी। केसरिसिंहस्यैवापत्यान्तरं बाल्भाव एवातिमतिवैभवेनावधीरितसुरगुरु, रणकोविद श्रीरणवीरसिंह उपनायक। उपनायिका च सार्वभौमस्य निर्जितानेकशत्रुसमरपण्डिताधीशस्य नन्दिनी श्रीमती रत्नप्रभेव रत्नप्रभा। अन्येऽपि शूरसिंहयोगीन्द्रप्रभृतय पुरुषा विमलाप्रभृतयश्च स्त्रिय पात्रत्वे बिभ्रति।

सर्वथा प्रशस्यतममिममुपन्यास नयापथातिथीकृत्य सफलयन्तु भवन्त प्रणेतु परिश्रममित्यभ्यर्थ्यते।

## ग्रन्थकर्तुः परिचयः ।

अस्ति महाराष्ट्रेषु श्रीरामचन्द्रपदारविन्दपवित्रितपुलिनप्रदेशाया जनकनन्दिनीकौतुककेलि-करपुण्यपरिसरारण्याया सरितां वरेण्याया गोदावर्यास्तीरे तपोधनानां शरण्यमिव पुण्यं नासिकाभिधं तीर्थमित्रं महाक्षेत्रस्थानम् । यदन्तर्गतमगस्त्यमुनिरचिताश्रमपदरमणीयस्य नीलमेघश्यामलशिखरस्यागस्त्यशैलस्यानतिदूरेऽन्वगस्तितीरं चकास्ति महाहर्म्यरुचिरं येवलाख्यं नगरम् । यत्र वसति स्म पुरा खलु--

श्रीरामचन्द्रलवनन्दनवंशसिन्धोरुद्भूतरत्नमतिचारुचरित्रबन्धोः ।
श्रेयःश्रियोः पदममन्दनिरस्ततन्द्रः ' श्रीक्षेमचन्द्र ' इति विश्रुतकीर्तिचन्द्रः ॥१॥
योऽजीजनच्चारुमतिः स्वगङ्गादेव्यां जगज्जीवनमार्यशीलम् ।
ज्येष्ठं गुणैस्तैर्वयसाऽपि मन्ये पुत्रं त्रयाणामनुजन्मभाजाम् ॥ २ ॥
सरस्वतीमात्मगुणानुरूपामसौ स्वभार्यां परिगृह्य तस्याम् ।
लेभे बहूनां चतुरः सुतानां चिरायुषौ द्वौ तनयौ सुते द्वे ॥ ३ ॥
पुत्रौ तावुपनीय वेदविधिना श्रीमज्जगज्जीवनो
विद्याभ्यासकृतेऽमले गुरुकुले संप्राहिणोद् वर्णिनौ ।
यत्रैकः स्वगुणानुरूपमभजत् ख्यातिं स मेधाव्रतः
सत्येनात्मगुणेन चापरसुतः सत्यव्रतो विश्रुतः ॥ ४ ॥
हृद्यैः सुगद्यैरनवद्यपद्यैः सद्यः समाह्लादितपारिषद्यः ।
विद्यावतां द्योतितचित्तसद्मा विद्योतते योऽद्य कविप्रकाण्डः ॥ ५ ॥
तस्यैव मेधाव्रतपण्डितस्य प्रशस्तवाग्गुम्फितपद्यकान्ते ।
विहृत्य शान्ते कवितावनान्ते प्रीणातु चेतः सुमनःसमूहः ॥ ६ ॥

गुरुकुलमधिवसतैवामुना वर्णिता महीमण्डलमण्डनायमानां विधातुरनुपमसृष्टिसौन्दर्य-रचनाकौशलादिस्पदभवनभूतां काश्मीरभुवमवलोकयितुं गतवता निसर्गसुन्दरी प्रकृतिदेवी निर्दोषं वर्णिता वर्णनीयया वाचा । सैव वर्णना प्रकृतिसौन्दर्यरूपकरूपेण विराजते । नैसर्गिकवर्णने निर्विवर्णयिषूणां भावुकजनानां तत् ' प्रकृतिसौन्दर्य ' नाम नाटकमनिमात्रं मनःसंतोषमा-पादयिष्यतीति मन्ये ।

अन्यान्यपि प्रसन्नभाषाणि प्रणीतान्यमुना कविना रुचिराणि काव्यानि । विन्यस्तानि कानिचिद्दर्शनार्थमस्योपन्यासस्य प्रारम्भे । यान्यवलोक्य विज्ञायेत विज्ञवरैः ' कीदृगस्य कवेःकविकर्मेति ' । तदलमतिवाग्विलसितेन ।

तथाप्यन्ते- ' मानवी कृतिर्निर्दोषेति ' न संभाव्यते इति विभाव्य विबुधैर्हंसक्षीरन्यायेन सारं परिगृह्य हेयमस्मारमिति प्रार्थ्य विरमतीति शम् ॥

१-१-२०. } विदुषामाश्रवः
वृन्दावनगुरुकुले } पाठकोपाह्वः शङ्करदेवोपाध्यायः ।
काव्यतीर्थः ।

# ग्रन्थप्रशंसा



१७-येवला-जिला नासिक-के म्युनिसिपल हाईस्कूल के हेडमास्टर एवं संस्कृतशिक्षक दोनों के सम्मिलित अभिप्राय संस्कृत में हैं।

" श्रीमन्मेधाव्रतमहोदयाः ! ता० २२-२-३९ हाईस्कूल येवला

भवत्प्रणीतं-प्रकृतिसौन्दर्यं कुमुदिनीचन्द्रः सचित्रदयानन्ददिग्विजय साहित्यसुधायां मागद्वयञ्चेति ग्रन्थपञ्चकमापाततोऽप्यालोच्योद्दाममुल्लसत्यानन्दमहोदधिरविदग्धस्यापि किं पुनर्विद्वद्वृन्दस्य सविशेषमधीयानस्य। विषमेऽस्मिन् काले म्लेच्छभाषासस्कृतिसंगतिभिर्विपरीतदोषोपसर्जनीभूतबुद्धिभिर्भारतीयैरपि गीर्वाणभाषा मृतभूयिष्ठेयवगण्यते किं पुनरभारतीयैः! उद्दामसटोद्धूनन केसरिणा स्तनितगभीरगर्जितैरापूरितपूर्वे गिरिगह्वरे शिवारुतकल्कल इव गीर्वाणवाण्येकास्पदीभूतेऽस्मिन् भारते श्रूयन्ते सद्यस्तदितरासा विरावा। सुदुष्करमेवगतेऽक्षरेणापि श्रुतिपथमासादयितुं भारत्या कुतस्तदध्ययनम्? समवल्प्यध्ययने सुदूरः शास्त्रपरिचय सत्यपि तस्मिन् दवीयाँस्तैल्यनवरतावगाहः।

भवाँस्तु सर्वाण्येतान्यतीत्य विविधरसालकारोपबृंहितम गोपादने कौशल प्रकटयन् कथं स्तुतिपदानामभाजनं भविष्यति। फलोन्मुखो ह्यङ्कुरस्य परिपाक। ग्रन्थपञ्चकद्रूपेण ह्यत्रभवति फलितमध्ययनमुपलभ्य स्याने खलु सोढ्यते भवाँस्तैस्तैर्विपश्चिद्भि। आत्मन आधपाञ्चाल्यानुस्मरता यद् भवताऽमी ग्रंथा उपायनं प्रेषितास्तदाविष्करोति भवतो महामनस्वताम्।

मोदामहे खलु वर्तमानेन भवतो मेधोत्कर्षेण। अनुभवितोऽप्यधिकमुत्कर्ष यथार्थनाम्नो मेधाव्रतस्य भवतो मेधेप्यामहे "

विदुषां वशंवद

कुलकर्णीकुलोत्पन्नो भार्गवसूनु - शङ्करशर्मा मुख्याध्यापक

दाहाळकरकुलालंकारस्य पुरुषोत्तमस्यौरसो विष्णु

संस्कृत-शिक्षकः

# सम्मतियाँ

## कुमुदिनीचन्द्रः

तर्कवाचस्पति विद्यासागर चतुस्तंत्रस्वतंत्र राजपण्डित श्रीबदरीनाथ त्र्यंबकनाथ शास्त्री बड़ौदा—

" अवलोकितः खल्वस्माभिः पण्डितमेधाव्रतविरचितः कुमुदिनीचन्द्राख्यो ग्रन्थः। गीर्वाणवाण्यां खलु गद्यप्रबन्धाः पद्यप्रबन्धापेक्षया अल्पीयांस इति सुप्रसिद्धमेव। पण्डितवर्यैश्च महता प्रयत्नेनायं ग्रन्थो व्युत्पित्सूनां बालानामुपकाराय निर्मितः। अयं ग्रन्थो विनोदेन सह संस्कृतभाषापरिचयं कारयितुं क्षमः। अथ चाङ्गलभाषाध्ययनप्रवृत्तानां बालानां सरलत्वाद् महत उपकाराय भविष्यतीत्यस्माकं मतम्। "

श्रीमान् पं० अमृतलाल त्रिभुवन शर्मा व्यास, संस्कृत प्रोफेसर एम्. टी. बी. कॉलेज, सुरत—

पण्डितश्रीमेधाव्रतकविरत्नसंदृब्धं कुमुदिनीचन्द्राख्यमुपन्यासमवलोकयतो मे मनसि परमः प्रमोदः प्रादुरासीत्। यस्मिन् काले गीर्वाणवाग् विरलप्रचाराऽनादरकदर्थिता च वर्तते तस्मिन्नेतादृशग्रन्थनिर्माणे रचयितुः संस्कृतवाचि निरतिशयप्रेमाणं प्रदर्शयति। प्राच्यकविनिर्मितगद्येषु प्रायोऽनुपलभ्यमानमृजुत्वमत्र विद्यमानं संस्कृतसाहित्यमन्दिरान्तः प्रविविक्षूणामतीवोपकारकं भविता। एष चोपन्यासः सांप्रतिकनूत्नकथाप्रणेतृभिः समाश्रितां सरणिमनुसृत्य रचित इति विशेषत इदानींतनानां रुचिकरो भविष्यतीत्यहं मन्ये। अत्र च सुजनानां सौजन्यावधिः क्रूराणां क्रूरत्वकाष्ठा सतीनां च पातिव्रत्यसीमा हृदयंगमवर्णनपुरस्सरमुपनिबद्धाः। मम्मटभट्टोक्तकाव्यप्रयोजनं 'कान्तासम्मिततयोपदेशयुजे' इत्येतदत्र नीत्युपदेशपरायणेन कविना मनसि कृतं विभाव्यते। चेतश्चमत्कृतिकारमीदृशमुपन्यासमवलोक्य कः सहृदयो न तुष्येत्?। एतादृशोपन्यासरचयितारः संस्कृतविद्यारसिकैरवश्यं प्रोत्साहनीया इति शिवम्।

जैनमुनि श्रीन्यायविजयजी, न्यायतीर्थ-न्यायविशारद—

उपन्यासस्वरूपोऽयं 'कुमुदिनीचन्द्र' नामा प्रबन्धस्तत्कर्तुः कविरत्नमेधाव्रतस्य संस्कृतवाणीनिपुणिमानं तत्र चारु कथाऽऽलेखनप्रौढिमानं च सम्यगावेदयति। मनोरंजनीयं च कथा संस्कृतव्युत्पत्तिमादधाति सानन्दविलासं तद्व्युत्पित्सूनां विनोदस्थानं च भवति पण्डितानाम्। भवति चात्र आबालाद् या च विदुष उपयोगिनीयं कथा।

गुजरात के सुप्रसिद्ध संस्कृतकवि श्रीवल्लभदास भगवानजी गणात्रा

सावित्रीव सत्यविचारभरिता, लक्ष्मीरिव विबुधपतिचेतोहारिणी, गुरुकुलस्नातिकेव परमादर्शदर्शनधारिणी, रमणीव सुवर्णालंकारभूषिता, सुमनोमनोवृत्तिरिव धर्मकर्मोपदेशदानदक्षा, संगीतकलेव सान्द्रानन्दसन्दोहजननी, कविरत्नपण्डितश्रीमेधाव्रतेन विरचिता 'कुमुदिनीचन्द्राभिधाना कथाचन्द्रिका' नूनं संस्कृतसाहित्यगगने पूर्णकलया लसन्ती चिरस्थायिनी भविष्यतीति मन्ये। रचनयाऽनया ग्रन्थकारेण गीर्वाणवाण्या महती सेवा कृतेति निःशंकं कथ्यते मया।

श्रीमान् प. कमलाशंकर सुंदरलाल त्रिवेदी, संस्कृतप्रोफेसर, एम्. टी. बी. कॉलेज, सुरत

पण्डितमेधाव्रतनिर्मितां कुमुदिनीचन्द्राख्यामद्भुतां कविताख्यायिकां वाचयतो मे हृदि महानानन्दः समजनि। अस्यामाश्रमप्रकृतिजनिकायां आख्यायिकायां प्रणयने पण्डितप्रवरेण स्वकीयातिमहती मेधा प्रकटीकृता इति व्यक्तमेव सुधियाम्। अस्यां कथायां भाषा हृदयंगमा, प्रसादवतीच, व्याकरणप्रयोगा अतीव सरला सुपरिचिताश्च विद्यन्ते। कविरत्नकृतप्रकृतिसौन्दर्यवर्णनेन क्वचिद् क्वचिद् बाणदण्डिकालिदासादीनां सुप्रसिद्धानां कवीश्वराणां वर्णनं सादृश्योऽद्भुतमिव्यैरास्ति महती प्रशस्तिर्ग्रन्थकृतः। नवीनानां कथाप्रणेतॄणां सरणिरनल्पचातुर्येण पण्डितवर्येण स्वग्रन्थे स्वीकृता पूर्णताच नीतेति मे प्रतिभाति। संस्कृतभाषाध्येतॄणां सर्वेषामस्युत्तमनीत्युपदेशसमन्वितोऽयं ग्रन्थो महते-उपकारायानन्दाय च प्रभविष्यतीति नास्त्यत्र संशीतिलेशोऽपि। एतादृशो निपुणो लेखकः सहृदयैरवश्यमाश्रयदानेन प्रोत्साहनीय। मादृशां हितैषिणां वाचकानां प्रशस्तिरचासि-अन्यग्रन्थनिर्माणे कारणतां व्रजन्तु-इति-आशास्य विरम्यते मया।

संस्कृतप्रोफेसर श्रीयुत भास्कर रामचन्द्र आर्ते एम. ए बडोदा कॉलेज—

"श्रीमेधाव्रतकविरत्नानां कुमुदिनीचन्द्राभिधां कृतिमेकामादितोऽन्तं यावत्सकलामवलोक्य परं सन्तोषमुपागमम्। प्रातःसन्ध्यादिकालवसंतवर्षादि-ऋतुवर्णनानि दृष्ट्वा सुतरां हृदि मे हर्षःसमभूत। सर्वथा ग्रन्थकृद्भिः संस्कृतभाषाया परं प्रावीण्यं समपादीति सम्प्रधार्यते मया ग्रन्थकृदभ्युदयकाङ्क्षिणा।"

श्रीयुत प्रो. भालचंद्र चिन्तामण लेले. एम्. ए बडोदा कॉलेज.

"I have read with pleasure the Sanskrit novel 'कुमुदिनीचन्द्रः' by Pandit Medhavrat. The author has received his education at Vrindavana Gurukul, where Sanskrit Language is free from the stamp of being considered as a dead Language. On account of the simple and easy style of the book, the interest of the

story has not suffered in the least by the sanskrit rendering The book would prove to be very useful to the High-school and College students It also deserves to be read by all lovers of Sanskrit "

श्रीयुत हीरालाल ब्रजभूषणदास सराफ बी ए प्रिन्सिपल सयाजी हाईस्कूल.

" I have looked through ' कुमुदिनीचन्द्र ' a Sanskrit novel by Pandit Medhavrat The book is written in a very readable style and can be safely placed to the hands of the young students preparing in the S M Examination of the Bombay University. I strongly recommend the book for general-reading in the higher forms of High-schools, and I can say that the labour bestowed upon it was not to be thrown away "

श्रीयुत नवनीतलाल डी शुक्ल बी ए संस्कृताध्यापक बडोदा हाईस्कूल

I have very great pleasure in giving my opinion on sanskrit novel entitled ' कुमुदिनीचन्द्र ' It is undoubtedly an excellent composition of its kind and will, I am sure, be very useful to students of the Matriculation and College classes in mastering sanskrit idiom and in making them-selves acquainted with many very apt-expressions and phrases of the Language The beauty of the language of the book has specially appealed to me. The composition will, I feel confident, serve as a pleasnt reading for leisure hours to all those that are conversant with the " Language of the Immortals, " I sincerely hope that the author's attempt may meet with every possible encouragement on the hands of all interested in Sanskrit Literature "

श्रीयुत नरहर नारायण वापट बी ए संस्कृताध्यापक बडोदा हाईस्कूल

" I have gone through the novel ' कुमुदिनीचन्द्र ' by Pandit मेधाव्रत It is indeed an excellent work of its kind The author has indeed a *real* command over Sanskrit language and the novel can very well help the High-school and the college

students and also general readers to pick up the sanskrit idiom very easily. In the hand of learned writer sanskrit ceases to be the dead language. The work deserves indeed a warm encouragement from every devotee of Sanskrit Literature."

श्रीयुत पं श्रीपाद दामोदर सातवलेकर वेदाचार्य, साहित्यवाचस्पति, गीतालंकार, अध्यक्ष स्वाध्यायमण्डल आनन्दाश्रम 'पारडी' (सूरत)

[रचयिता- श्री प० आचार्य मेधाव्रतमुनि। प्रकाशक श्री शरच्चन्द्र सत्यव्रत तीर्थ आर्यसमाज येवला (नासिक)। मूल्य ४ रु डा० व्य० पृथक्]

यह संस्कृत भाषा में उपन्यास है। मैंने प्रथम इस पुस्तक को सन १९२१ में देखा। वैदिकधर्म मासिक में समालोचनार्थ इसका पाठ मैंने बडे रसके साथ किया। एक वार के पाठ से मेरी तृप्ति नहीं हुई, इसलिये मैंने इसके भाषामाधुर्य में लुब्ध होकर इसका तीन वार पाठ किया। प्रत्येक वार भाषाका लालित्य, सौंदर्य और सुखबोधत्व अधिकाधिक अनुभवमें आता गया। जिसको संस्कृत में अपनी प्रगति करने की इच्छा होगी, उसको इसका पठन करना योग्य है। इसकी भाषा सरल बोधप्रद तथा हृदयंगम है। व्यवहारकी भाषासी दीखती है। यही इसकी विशेषता है। श्रीआचार्य मेधाव्रतजी आशुकवि हैं और संस्कृत भाषा पर विशेष प्रभुत्व रखते हैं। इनका संस्कृत भाषा प्रभुत्व इस पुस्तकसे हरएक को ज्ञात हो सकता है। इस समय ऐसे उपन्यास प्रकाशित होते हैं इसलिये संस्कृत को मृत भाषा कहनेका साहस किसी को भी नहीं हो सकेगा। हम चाहते हैं कि इस पुस्तक का प्रचार सर्वत्र हो और इसको कईवार छापना पडे।

श्रीयुत विष्णुभास्कर केलकर एम, ए एल टी संस्कृत प्रोफेसर राजाराम कॉलेज कोल्हापुर —

श्रीमेधाव्रतकविरत्नलिखित 'कुमुदिनीचन्द्र' नाम की आख्यायिका भाव, रस, रूपक तथा घटनादि के सुन्दर वर्णनों से परिपूर्ण हैं। संस्कृत में ऐसी रोचक कथाओं की अत्यन्त आवश्यकता थी। इसकी विशेषता यह है कि बाण का समस्तपदबाहुल्य तथा दण्डीका अश्लील शृङ्गार इसमें नहीं हैं। इस कारण यह पुस्तक गुरुकुल तथा अन्य-विश्वविद्यालयों में पाठ्य पुस्तक रखने के योग्य है। संस्कृत में एक तो गद्य साहित्य ही बहुत कम है, जो है, वह भाषा की दृष्टि से अति क्लिष्ट है तथा विचारोंकी दृष्टिसे हीन है। अतः ऐसी पुस्तकोंको आवश्यकता संस्कृत पढनेवालोंको बहुत रही। संस्कृत के प्रेमियों को इसे एक वार अवश्य पढकर अपने विद्यार्थियों को पढाना चाहिए। यह प्रीव्हीयस इन्टर क्लास में पढाने योग्य पुस्तक है।

**श्रीयुत कविवर महाशंकरदत्त** संपादक आर्यजीवन, बड़ोदा " कुमुदिनीचंद्रः " नामक संस्कृत नॉवेल ( उपन्यास ) लिखकर पं. मेधाव्रतजीने संस्कृतज्ञ विद्वानों में अपना नाम अच्छी प्रकार प्रसिद्ध किया है। पण्डितजीका संस्कृत भाषापर बहुत अच्छा अधिकार है। संस्कृत भाषा में व्यवहारोपयोगी बोलचालके लिये गद्य साहित्यकी अतीव आवश्यकता है। पं. अम्बिकादत्तजी के ' शिवराजविजयः ' नामक उपन्यास के तुल्य पं. मेधाव्रतजी का यह उपन्यास भी आदरणीय है।

**प्रोफेसर धर्मेन्द्रनाथ तर्कशिरोमणि** संपादक आर्यमित्र आगरा— " संस्कृत में उपन्यासों की कमी है और उनमें अश्लीलतायुक्त बातें होनेसे वे विद्यार्थियों के पढने के योग्य नहीं है। आज हमें यह संस्कृतका उपन्यास देखकर बहुत प्रसन्नता हुई। पुस्तक गुरुकुलों के लिये तो उपयोगी है ही, कॉलेजों की संस्कृत श्रेणियों के लिये भी उपयोगी है।

**श्रीमती विद्यावती सेठ बी. ए.** आचार्या, कन्यागुरुकुल देहरादून— " कुमुदिनीचन्द्रः " नामक संस्कृत उपन्यास भाषा की सरलता, लालित्य तथा अश्लील भावों के अभाव के कारण संस्कृत शिक्षा ग्रहण करनेवाले बालक और बालिकाओं के लिये अति उपयोगी है। यही नहीं, संस्कृत भाषाका साधारण ज्ञान रखनेवाले नर और नारी भी इससे मनोविनोद तथा शिक्षा ग्रहण कर सकते हैं। "

**श्रीयुत दिनकरराय आदित्यराय वैष्णव,** प्रोफेसर संस्कृत तथा आंग्ल साहित्य, राष्ट्रीय महाविद्यालय सुरत—जब अंग्रेजी भाषा इस आर्यभूमि पर इतनी अधिक दृढता-पूर्वक जड जमा रही है कि उस भाषा के मिश्रण विना संस्कृत पुस्तकें आजकल कमही दिखाई देती हैं, तब पहले पृष्ठ से अन्तिम पृष्ठ तक शुद्ध संस्कृतमें लिखा हुआ ' कुमुदिनीचन्द्र ' नवीन ग्रन्थ अपनी पुरानी गीर्वाणभाषा की उन्नति चाहनेवाले हरएक मनुष्य को आनंद देगा, यह मेरा विश्वास है। पुस्तककी कथा सरस, भाषा अतीव मधुर तथा सरल है; प्रशंसनीय वर्णनचातुरी एवं मनोभावोंका प्रदर्शन मार्मिकतासे किया गया है। इस युगके अनुकूल संस्कृत उपन्यास किस प्रकार लिखा जा सकता है, इसका यह सुन्दर उदाहरण है।

**श्रीयुत प्रो. इन्द्र** विद्यावाचस्पति संचालक ' अर्जुन ' दिल्ली—" ' कुमुदिनीचन्द्र ' नामक उपन्यासमें पद पद पर कविका पाण्डित्य तथा शब्द शब्द में उसकी प्रतिभा प्रकट होती है। संस्कृतभाषाको जो लोग निर्जीव कहते हैं, उनके लिये यह नॉवेल एक उचित उत्तर है। "



[ वृन्दावन गुरुकुल विश्वविद्यालय के ४० वें वार्षिक महोत्सव के प्रसंगपर किये गये कविसम्मेलन में दयानन्ददिग्विजयकार, आर्यकविशिरोमणि, पण्डितप्रवर श्रीमन्-मेधाव्रताचार्यजीसे विरचित समस्यापूर्तियाँ निम्न रूपसे प्रकाशित हुई हैं । ]

"दिनमणिः"

प्रनष्टा मोहाख्या रजनिरजनि प्राज्ञमलयः
  श्रिया हीनः काशीविबुधविधुरार्याब्जमदसत् ।
यदा ब्रह्मावर्तोदयगिरिमितो ब्राह्मरुचिरो
  दयानन्दस्वामी श्रुतिगगनगामी दिनमणिः ॥ १ ॥

विलीनं पाखण्डैः कृतसुकृतखण्डैर्यदुदये
  महाम्भोजैरम्यैर्बुधमधुपकाम्यैर्विकसितम् ।
दयानन्दाचार्यैर्विहितशुभकार्यैर्निगदितो-
  ऽहताज्ञानध्वान्तो जयति निगमान्तो दिनमणिः ॥ २ ॥

"चित्रं न सा चातुरी"

[ १ ]

योऽसंख्यार्कमृगांकसृष्टिमतनोद् ब्रह्माण्डभव्याम्बरे
  सूर्यान् गा अभितो महीश्च शशिनो यो भ्रामयन् रंह:...
रम्यां रात्रिमहश्च काम्यमसृजन् नित्यं ययाऽसन्मुदे
  तस्यानन्तगुणेश्वरस्य रुचिरा चित्रं न सा चातुरी ॥ ३ ॥

[ २ ]

देहान् देहभृतां रथानिव सुखानम्भोधिपृथ्वीखगान्
  निर्मायाद्भुतसुन्दरान् वरकलान् ब्रह्मा कलाकृन्महान् ।
जीवांस्तेषु निवेश्य कर्मफलतो दुःखं सुखं भापयन् ।
  यद्यान् स्वस्य ययाऽस्य संवितनुते चित्रं न सा चातुरी ॥४॥

[ ३ ]

बाल्ये सिंहपराक्रमो निहतवान् कंसं करीन्द्रं यया
  दृप्तं व्याघ्रनिभं ययाऽसुरकुलं यो यौवनेऽनाशयत् ।
निरशस्त्रोऽपि ययाऽर्जुनेन सयलान् व्यपादयत् कौरवाँ
  स्तस्यासीद् वसुदेवसूनुनृमणे श्चित्रं न सा चातुरी ॥ ५ ॥

[ ४ ]

नीतिज्ञ नृपभक्तनन्दसचिवं मौर्येन्दुमन्त्रीश्वरं
  कर्तुं राक्षसमात्मनः प्रणिधयस्तग्मिग्रतां प्रापिताः
चाणक्येन यया कृतश्च कलहो राज्ञा समं कृत्रिमः
  श्रीमद्राक्षसनिग्रहे विजयते चित्रं न सा चातुरी ॥ ६ ॥

[ ५ ]

योऽहन्नात्मसहोदराञ्जनकमप्याजीवनं प्राग्रहीद्
दिल्लीराडवरंगजीवयवनस्यामुष्य कारागृहात् ।
आत्मानं ससुतं विमोच्य लघु यो राष्ट्रं समापादयत्
तस्यच्छत्रपतेः शिवाजिनृपतेश्चित्रं न सा चातुरी ॥ ७ ॥

[ ६ ]

शृङ्गाराम्बुनिधौ क्षणान्मुनिवरं या मज्जयेन्मञ्जुला
दीप्ता वीररसे नपुंसकमहो ! शान्ते रसे रागिणम् ।
या वीरं करुणे रसे विरहिणं हास्ये च रौद्रादिके
वाचो वश्यगिरां वरस्य सुकवेश्चित्रं न सा चातुरी ॥ ८ ॥

[ ७ ]

श्रीरूसीयबलं यया रणरसाम्भोधौ द्रुतं पातितं
पातालस्य वरूथिनी निजमतिं नीता यया संयुगे ।
जापानोदयजर्मनप्रलययोर्मानं समानं कृतं
श्रीमच्चर्चिलमन्त्रिराजकृतिनश्चित्रं न सा चातुरी ॥ ९ ॥

[ ८ ]

धग्धग्धग्ज्वलिताग्निचुल्लिनिकटासीनः प्रसह्य क्षणात्
कृत्वाच्छाः करपट्टिकाः करगतैर्वैल्लैश्च चर्पे च य ।
संताप्य क्रमशो ययाऽग्निचयतो निस्सार्य नृणां करे
राति श्यामसुवल्लवस्य सुतरां चित्रं न सा चातुरी ॥ १० ॥

[ ९ ]

माता यस्य सरस्वती गुरुकुलं वृन्दावनीयं पिता
श्रीविद्यापरिपन्ममोपजननी शास्त्रीयदुग्धप्रदा ।
वेदोक्ता विषयास्सहोदरनिभा मेधाव्रतोत्साहदा-
स्तस्य श्लोककृतौ यदीह विलसेच्चित्रं न सा चातुरी ॥ ११ ॥

[ १० ]

विश्वेषां मतवादिनां मतभवान् दोषान्धकारान् दलन्
सद्धर्मामृततो ययाऽखिलनृणां वादप्रभातोदये ।
शास्त्रोद्यप्रभयाऽनिशं दिनमणिः श्रीमद्दयानन्दसन्
रेजे तस्य वचोरुचामिह जयेच्चित्रं न सा चातुरी ॥ १२ ॥

[ ता. २५-१२-४४ सोमवार पौष शु० ११ संवत् २००१ प्रभातकाल। ]

ओ३म्

# समर्पणम् ।

[ १ ]

विद्याविलासिनि सुवासिनि ! पुण्यशीले !
गीर्वाणगी प्रणयिनि ! श्रुतिधर्मलीने ! ॥
चन्द्रप्रभे ! रुचिरस्मितनिन्दितेन्दो !
याता दिवं द्रुतमये ! हृदयेश्वरि ! त्वम् ॥

[ २ ]

साहित्यलेखनकलासुरुचिप्रदात्री
काव्यप्रकाशनकृते निजभूषणानि ॥
मह्यं वितीर्य कवितारसरागिणीनां
यादृग्विलीन रसदा समभूः प्रजानाम् ॥

[ ३ ]

योऽयं कुमुदिनीचन्द्रश्चन्द्रकान्तानने ! त्वया ।
स्वाङ्गालङ्कारसद्द्रव्यै रुपन्यासः प्रकाशितः ॥

[ ४ ]

द्वितीयावृत्तिरेतस्य त्वत्स्मारकतयाऽधुना ।
प्रकाश्यैषार्प्यते तुभ्यं धर्मपत्न्यै पतिव्रते ! ॥ ४ ॥

[ ५ ]

शाययोरार्यदम्पत्यो कवितार्थीसिंमन्दिरम् ।
काव्यमर्मज्ञहृदयानां विश्रान्त्यै वसतां चिरम् ॥

— त्वद्गुणैकस्पृहः स्वामी —
सरस्वतीनन्दनो मेधाव्रतः ॥

## कुमुदिनीचन्द्रः ।



### स्वर्गस्थ अ. सौ. श्री चन्द्रप्रभादेवी ।

ये येवलानिवासी दिवंगत आर्यवर्य श्री एकनाथ श्यामलालजी की ज्येष्ठपुत्री और आचार्य श्री पं. मेधाव्रतजी की विदुषी धर्मपत्नी थी । जालन्धर-कन्यामहाविद्यालयमें इनकी शिक्षा दीक्षा हुई थी । यह देवी साहित्य एवं संगीतविद्यामें प्रवीण थी । इसी सन्नारीने इसी उपन्यास के प्रकाशनार्थ अपने पतिदेव को स्वसुवर्णालङ्कार प्रदान कर दिये थे । अतः यह उपन्यास ग्रन्थ इन्हें समर्पित किया गया है ।

# कुमुदिनीचन्द्रः ।

## ( उपन्यासः[1] )

### प्रथमा कला ।

" उपकारिणि विस्रब्धे[2] शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसन्धं[3] भगवति वसुधे कथं वहसि ? ॥ "

" शीलं[4] परं भूषणम् । " ( हितोपदेशे )

" परोपकाराय सतां विभूतयः । " ( रघुवंशम् )

---

मासोऽयं चैत्रः । भगवान् [5]भुवनभास्करः प्रखरकिरणैर्ज्वलयन्निवाखिलं [6]भूवलयं गगनवेदिकामारुरोह । रविकिरणानलदन्दह्यमानतनव इव वायवः परितः सरिदधिष्ठित-निबिडतरुवरशोभिततरं विपिनमवजगाहिरे । [7]विहङ्गमकुलानि [8]निदाघकरतेजःपुञ्जमसहमानानीव निजनिज[9]कुलायेषु निलिलियिरे । ईदृशे समये कस्मिंश्चिदनवलोक्यमानप्राणिसंचारे परितःप्रचण्डचलदनिलकम्पितशुष्ककिसलयध्वनिवारे कान्तारे कश्चिदध्वगमनखेदपरिश्रान्तः स्वेदोदबिन्दुवृन्दमौक्तिकजाललसितभालस्थलो विश्रमितुं प्रच्छायशीतलं स्थलमन्विष्यन्निवेतस्ततश्चक्षुषी क्षिपन्नेकः पथिकयुवकः प्रयाति स्म । स्तोकमन्तरं व्यतीत्यासौ पान्थ एकं घनच्छायशिशिरं [10]न्यग्रोधवृक्षमाससाद । अस्य शीतलां छायां निरीक्ष्यायम्[11]अध्वनीनोऽतितरां जहर्ष; विसस्मार च मुहूर्तमेकमात्मनः खेदम् । सहोपनीतं त्रिविधवर्णरुचिरं [12]राङ्कवास्तरणमास्तीर्यासौ तस्य वटतरोः प्रच्छायशीतले तले समुपाविशत् । अथ स्वसन्निहितजलपात्रस्थजलेन मुखं प्रक्षाल्य निपीय च किञ्चिन्नीरं स्वल्पचिरमस्तत्र विश्रान्त्यै सुखं सुष्वाप ।

एष षोडशवर्षदेशीयः रुचिराङ्गसौष्ठवदर्शनीयशरीरः, पूर्णेन्दुसौन्दर्यविजित्वररमणीय-मुखमण्डलोऽप्यधुना ग्रीष्म[13]तपनतापमुकुलितवदनकमलः, [14]आलक्ष्यश्मश्रुकन्दलः परिहित-

---

१ उपन्यासो प्रबन्धः । २ विस्रब्धे-विश्वस्ते " समौ विस्रम्भविश्वासौ " । ३ सन्धा-प्रतिज्ञा संधा विधौ प्रतिज्ञायाम् । ४ शीलं स्वभावे सद्वृत्ते । ५ सूर्यः । ६ पृथ्वीमण्डलम् । ७ पक्षिसमूहः । ८ निदाघकरः सूर्यः । ९ नीडेषु । १० वटम् । ११ अध्वनीनः पान्थः । १२ मृगरोमनिर्मितमासनम् । १३ तपनः-सूर्यः । १४ ईषदुद्गच्छमानोत्तरोष्ठभूरुहश्मश्रुकुरः ।

महार्हविमलाम्बरश्चास्ति । वेषेण चाय कश्चिद् राजयोगीव दृश्यते, किन्तु सूक्ष्मेक्षणेन निरीक्षितोऽसौ युवा सधृताभ्यन्तरसुन्दरवीर[1]राजन्योचितनेपथ्यशाली विलोक्यते । तथाहि [2]कमनीय कौशेयवस्त्रनिर्मितम[3]धोंऽशुकमस्य चरणयो कामपि कान्ति कलयति । सौवर्ण सूत्रग्रथितलताकुसुमगुच्छालङ्कृताङ्ग[4]रक्षोऽङ्गे शोभते । वक्षोऽन्तिके पद्मनलीशालिनी [5]भुशु-ण्डिकैकाऽऽयोजिताऽस्ति । महार्हदुकूलपरिवेल्लित कटिप्रा ते चैको हीरकनटितसुन्दर [6]त्सरुल्लसितश्चन्द्र[7]हासश्चकास्ति । सर्वेषामेषामुपरि [8]आकण्ठमाप्रपदमेक काषायपरिधानमनेन परिदधे, शिरस्यपि काषायपट्टमवेष्टि ।

अथ सायसमय सञ्जिहितः । प्रतापनिधिरय [9]वारुणीसेवनेनेव [10]क्षीव क्षीणप्रतापश्च सवृत्त । [11]भास्वन्त शान्तताप वीक्ष्येव [12]निबिडारण्यान्निर्गत्य नदीतरङ्गै क्रीडँल्लिवल्लतामालिङ्गन् परितो भुव शीतलमन्दसुगन्धस[13]मीरो वहति । समयेऽस्मिन् विश्रान्तिसुखम नुभवितु सुप्तोऽयं पथिको निद्रां विहाय समुपविष्टवान् । क्षण शान्तचित्तमुपविश्य मनसि व्यचिन्तयदयम्- "अहो चिर सुप्तोऽहम् । सध्यासमयत पूर्वं तु मया किञ्चन नगर समासादनीयम्, अये ? कियद् दूरमितो नगर भवेत् ? कश्चन पुरुषोऽपि नावलोक्यते- यत्तमह पृच्छेयम्, हा ! । बहुलहिंस्रजन्तुसकुला[14]या वनमालाया भ्रान्तोऽस्मि, क्व गच्छामि ! किं करोमि ? कमान्मनो दु ख विनिवेदयामि ? अय सकलपालक जगदीश्वर ? किमर्थमियद् दारण दु ख निपातित मयि ? 'यदेव देवो विदधाति लोके तदात्मनीन कुशल विलोके ।' इति कथ सघटेत मयेद वचनम् ? भगवन् ? अतिभूमिं गतेय वदना । करुणानिधे ? दयालुर्भूत्वा मनोऽस्य व्यापत्तिसमाकुलस्य बालस्य सहाय एधि । त्वमेव मे शरणम् । प्रभो ? अतिविपदम्बुधिनिमग्नस्यास्य जनस्योद्धारण न कोऽप्यन्य प्रभुर्भवते । अहह ? कदा त्वमात्मनो 'दीनोद्धारक' इति नाम चरितार्थयिष्यसि । शरण्य ? शरणागतमेन कथ न शरण वितीर्यं समाश्वासयसि ? भक्तवत्सल ? कोऽपि मोहवशादपराधश्चेदस्य दीनबालकस्य, क्षन्तव्यो ऽसौ । दयालो ? दयस्व दयस्व । त्वमेव केवलमस्य निराधारस्य जीवस्याऽऽधारोऽसि ?" इत्यभिधाय दीर्घमुष्णञ्च नि श्वस्य पुनरय वक्तुमारभत- "वत्स रणवीर ? क्वाऽसि खलु ? हा ? दन्दह्यत इद मे हृदय त्वद्विरहानलेन । अये कमनीयकुसुम ? अननुभूतसासारिकसुख लेश एव त्व [15]नयनान्तरितोऽभू । हन्त ? श्रूयते किल श्रीतातचरणा देवलोक [16]सनाथि-तवन्त इति । (नि श्वस्य । ) ? ते तु नितान्त गतनन्त एव किन्तु [17]गवेषणीयोऽय वत्सो रणवीर । अहह ! क्व नु विहरदय [18]निरागा बालविहङ्गम ? कस्य चान्वय रक्षायां भवेत् ?

---

१ क्षत्रियाभ्यस्तवषयोगी । २ सुदरम् । ३ अधेवस्त्रम् । 'पायजामा' इति भाषा । ४ अङ्गरक्ष-अङ्गुखक । ५ 'पिस्तोल' इति प्रसिद्धा । ६ 'त्सरु खड्गादिमुष्टौ स्यात् । ७ खड्गः । ८ कण्ठादारभ्य पादाग्रपर्यं तम् । ९ वारुणी-वरुणदिक् सुरा च । १० क्षीव मत्तः । ११ सूर्यम् । १२ घनवनात् । १३ समीरो वायुः । १४ सकुला व्याप्ता । १५ नेत्राभ्यां तिरोहित । १६ शोभितवन्तः १७ अन्वेषणीय । १८ निर्दय ।

अहो ! सहोदरयोरयं [1]विश्लेषोऽजनि । वत्स ? रणवीर ? अपि नैव कदापि त्वन्मुखचन्द्रचन्द्रिका संतर्पयिष्यति मे नयनचकोरयुगलम् ? हा ? । दुर्लभो मे भुवि पुनस्त्वादृशो बन्धुः । अहो ? जलधिरयं आतृप्रे[2]मपारावारः । सोदर्यान्वेषणायाऽहं सिंहसमूहसमावृतसघनवनेष्वपि निर्भयं भ्रमेयम् । [3]व्यालजालकरालितकन्द[4]रिकन्दरेष्वपि समाहर्ष विचरेयम् । भयङ्कराव[5]र्तशतसंकुलप्रबलजलप्रवाहेष्वपि सधैर्यं निपतेयम् ? किम्बहुना-तदर्थं ज्वालाजालजटालज्वलनमपि प्रविशेयम्, [6]गरलमपि भक्षयेयम्, नक्रचक्र[7]लुलितं लोल[8]कल्लोलमालाकुलं महासागरमपि संतरेयम् ? । किन्तु हा हंत !! कुत्र उपलप्स्ये [9]वृत्तान्तमहम् ? भ्रातः ? त्वामनादाय कदाप्यहं पुनरजितदुर्गराजधानीं न गमिष्यामि । ननु क्वाऽसि वत्स रणवीर ? एहि एहि सत्वरम् । त्वद्विरहवह्निनिर्दग्धमेतन्मदीयं हृदयं निजगात्रसंश्लेषामृतवर्षेण शमय । प्रियबन्धो ? त्वदर्थं वनाद् वनान्तरं पर्वतात्पर्वतान्तरं पर्यटन् त्वां विचेष्यामि; प्राप्स्यामि चान्ते त्वां निश्चितम्'' इत्युदीर्य क्षण विरम्य पुनरेव भाषितुमुपचक्रमे- "रे नृशंस क्रूरसिंह ? तेन निरागसा बालकेन किं तवापराद्धम् ? अस्माभिरपि कस्तवापराधो व्यधायि ? धिक्त्वां स्वामिविद्रोहिणम् ? येन मम पित्रा त्वं सुतनिर्विशेषं संपाल्य संवर्द्धितस्तस्यैव स्वपाल्यितुस्त्वया प्राणा गृहीताः । [10]जनिमारभ्यैव ते वपुषि कथन्न [11]फणिनाऽदंशि ? कथं [12]वाऽशनिना न न्यपाति ? अधुनाऽपि नास्ति समयः पलायितुं । नृशंस ? यावदहं जीवामि, यावन्मम [13]शिरासु चोष्णं रुधिरं वहति; तावदहं न त्यक्ष्यामि त्वाम् । शोधयिष्याम्येव निजवैरम् । दयालुरयं परमेश्वरः साहाय्यं विधाता मे । नराधम । त्वं यदि क्वापि भूविवरे वा गुहागृहे वा गिरिगह्वरे वा निगूढच्छद्मो वर्तेयास्ततोऽपि त्वां निःसारयिष्यामि; भावयिष्यामि च त्वां स्वपापकर्मणां फलमिति [14]नियतमवेहि " इति ब्रुवाणोऽयं पथिकः कोपेन कम्पितुमारब्ध, व्याकुलमभूदायितरां तदीयं [15]वपुः । नेत्रे अपि रक्तवर्णे संजाते । अथ क्षणं किञ्चिन्मनसि विचार्यैव वक्तुं प्रारब्ध " अये ? किमित्यहं मुधैवाऽऽत्मानमधुना [16]ग्लपयामि ! सर्वमेव सेत्स्यति संप्राप्तकालम् । इदानीन्तु [17]मार्गणीयोऽयं निजाग्रजः । श्रुतं किल मया—स दुरात्मा क्रूरसिंहो विजयनगरराजधान्यां सेनापतिपदं कलङ्कयतीति । आम्राम् ? मयाऽपि तत्र गत्वा प्रच्छन्नवेषेण भ्रातुरन्वेषणं विधेयम् ? स च दुरात्मा क्रूरसिंहोऽपि स्वदुष्कृतस्य फलमनुभावयितव्यः । रणवीरमपि स एव पापात्माऽऽहृतवानिति मे प्रतिभाति । तद् रणवीरोऽपि तत्रैव प्राप्स्यते । ततः परमेश्वरेच्छा ? ? " इति प्रोच्य ततोऽग्रे गन्तुमसौ पान्थ उदस्थात् । [18]समन्ततो न्यक्षिपच्चक्षुः, नाद्राक्षीच्चायं कमपि । पुनरसौ चिन्तयामास—" अये, केन पथाऽहमधुना व्रजेयम् ! मार्गोऽयं विकटो भयावहश्च ।

---

१ विश्लेषः वियोगः । २ प्रेमसमुद्रः । ३ सर्पैः । ४ कन्दराः[इ]न्द्रेषु-पर्वतगुहासु ५ आवर्तः—जलभ्रमः । ६ विषम् । ७ क्षुभितम् । ८ चञ्चलतरङ्गः । ९ वृत्तान्तः समाचारः । १० जनिः-जन्म । ११ सर्पेण । १२ वज्रेण । १३ शिरासु नाडीषु । १४ निश्चितम् । १५ वपुः शरीरम् । १६ ग्लपयामि-क्लान्तं करोमि । १७ अन्वेष्टव्यः । १८ समन्ततः सर्वतः ।

परितो विशालोत्तालतालरसालसालादिमहीरुहजालशालिनीं वनवीथिं सिंहव्याघ्रभल्लूकगण्डकादि[1]शरारुजन्तुजटिलां शैलराजमालाञ्चापहाय न किमपि दृग्गोचरं वरीवर्ति । प्रदोषा चेयं रजनी समजनि । कियद् दूरमितो नगरमिति कम्[2]अनुयुञ्जीय खलु ? " इति चिन्तयन्नेव पथिकश्चलितुमारेभे । अथ नीलाम्बरं परिदधाना निशादेवी निखिलं महीवलयं पर्यटितुमारब्धवती ।

एकस्तु नैसर्गिक एव [3]सान्द्रारण्यनिकुञ्जपुञ्जेषु गाढोऽन्धकारः स पुनर्द्विगुणीकृतस्तमिस्रास[4]तमसेन येन न किमपि द्रष्टुं पार्यते जनेन । सर्वतोऽरण्यतटीषु विविधवन्यजन्तूनां भयङ्करा घोरनिस्स्वना श्रूयन्ते । पवनवेगविकम्पितानां महीरुहाणां[5]किसलयजालानि च हडहडाशब्दं कुर्वाणानि भयमिव जनयन्ति नृणाम् । ईदृशे समयेऽस्य यूनः पथिकस्य कर्णशष्कुलीमेकं दीनतामयं चीत्कारमात्रमाक्रन्दनं प्राविशत् । निशम्यैनं चीत्कारध्वनिमयमध्वनीनः सतर्कोऽवर्तत । प्रावर्तत चास्य हृदयं कम्पितुम् । [6]विष्वङ् निरीक्ष्यायम्—" अये । कस्याप्यार्तस्य प्राणिनश्चीत्कारध्वनिरेष निशम्यते । ध्वनिना चायं कस्या अपि सुकुमार्याः कुमार्याः शब्द इव प्रतीयते । भवतु । स्यात् किमपि । आपन्नस्यार्तिहरणं हि सकलनृणां परमो धर्मः । " इति विमृश्य यतोऽयं ध्वनिरायातो तां दिशमभ्यद्रवत् ।

मुहूर्त्तमतीतेयं [7]विभावरी । पथिकस्यास्य साहाय्यं सम्पादयितुमिवोद[8]याचलतुङ्गशृङ्गसिंहासनं विहाय[9]विहायस्तलमलञ्चकार ग्रहगणसचिवो नक्षत्रपरिवारः [10]शर्वरीसार्वभौमः । आर्तजनमाश्वासयितुमिवा[11]मृतभानोः कपितये करा सान्द्र[12]शाखिशाखान्तरालेभ्यः प्रविष्टा आसन् । अपश्यच्चायं चन्द्रमसः प्रकाशे त्रिभिः पुरुषैरेका चतुर्दशवर्षकल्पा, श्रीरिव कल्पितावतारा, रतिरिव शरीरधारिणी मनोहारिणी सुकुमारी कुमारी तत्राऽऽनीताऽस्ति । सेयं बालिका भयेन गतचेतनेव लक्ष्यते । ते च त्रयः पुरुषाः कृष्णवसनावृतसकलशरीरा भीषणमुखाश्च सन्तीति । " तेषामिदमकृत्यं विलोक्य पथिकोऽसौ मनसि—' अये ? क इमे[13]नृशंसा भवेयुः ? का चेयं कुमारी ? कैरियं मनोहरा बालिका किमर्थमत्राहृत्य समानीता स्याद् ' इति विचारयंस्ततो मनाग्दूरं गत्वा ' त इदानीं किंकर्तुकामाः ' इति विज्ञातुमनास्त[14]नयनसरणिमतिक्रान्तः कस्यचिन्महतो भूरुहस्य[15]प्रकाण्डान्तरितः स्थितवान् । पक्षता निबद्धां क्षुरिकामुन्मुच्य हस्ते गृहीत्वा तेषां कृत्यं सावहितं समैक्षत—' एतेष्वन्यतमः परितो निपुणं निरीक्ष्य मन्दस्वरेणान्यमवादीत्—' मानसिंह ! विचेतनेयं वर्तते । त्वरस्व । यदि[16]व्याजिष्ठितं सुगन्धिजलमानीतं तदपि चैनां सचेतनां विधेहि ' इति । स च—' यदादिशति प्रभुः ' रित्यभिधाय स्वसन्निहितपोटलिकातः सुगन्धिजलभरितकाचकुप्यं नि सार्य तस्या नि सञ्ज्ञाया बालिकाया वदनकमले सुगन्धिसलिलं न्यषिञ्चत् ।

---

१ घातार्हिंस्र । २ पृष्टवन्तम् । ३ सघनवनलतादिविहितगह्वरस्थलेषु । ४ सर्वव्यापि तमः । ५ पर्णसमूहाः । ६ विष्वक्–परितः । ७ विभावरी-रात्रिः । ८ पूर्वपर्वताग्रे च शिखरम् । ९ गगनतलम् १० चन्द्रः ११ चन्द्रस्य । १२ शाखिशाखा वृक्षशाखा । १३ पातुकाः । १४ नेत्रपदवम् । १५ वृक्षस्कन्धान्तरितः १६ व्याजं वोढरं ।

सुगन्धिजलसेकसमकालं सा सुन्दरी [1] संज्ञां समवाप। तां प्रत्यागतचेतनां विलोक्य लुण्टकानां [2] परिवृढोऽमन्दमानन्दमविन्दत। अथ तामुपगम्य लुण्टकराजोऽसौ मञ्जुगिरैवमालपत्- 'प्रिये? अनुगृह्यतामयं जनो ललितैरपा[3]ङ्गावलोकनैः। अर्प्यतामस्मै [4] भुजिष्याय स्वदिव्यप्रेमामृतम्। सुन्दरि? स्वराज्ये गन्तुमसमर्थाऽत्रभवती। तत्र भवत्या यावत्सुखमासीत्ततोऽप्यधिकसुखेनाहं श्रीमतीमानन्दयिष्यामि। ततः प्रिये......।

कुमारी। ( साभ्य पुन सकोपम्। ) अलमालप्यापि तव। नृशंस? विदितं मया ते दुर्वृत्तम्। इतः परञ्चेदेकमप्यक्षरं वक्ष्यसि तदा क्षणमात्रेणैव कथावशेषो भविष्यसि त्वमित्यवेहि। परिचिनोषि मां पाप? वीरक्षत्रियतनयाऽहम्। किमर्थं मामिहाऽऽनीतवानसि? कथम्-रे दुष्ट? यतो मामाहरस्त्वं पुनस्तत्रैव सत्वरं मां प्रापय।

,अयं पान्थस्तु चकितः सन्- " अये? इमे दुष्टहतकाः कामपि निर्दोषामिमां बालिकामपहृतवन्त इति मन्येमि। भद्रं जातं यदहं भगवता भूतनाथेन विकटारण्यसरणिमिमामधिरोपितोऽस्मि। अरेरे नरपिशाचाः? आसन्नतमा युष्माकमायुषां [5] पर्यवसानवेला; तत्क्षणमेकमानन्दत यूयम्। किन्तु न जानीथ रे? यदत्र जगति कोऽपि नास्ति तस्य परमेश्वरो रक्षक इति। परमेश्वर एवायं मामिमं मार्गमानीतवान्; तदहमिदानीमात्मकर्तव्यं न विस्मरिष्यामि। परोपकारसमानं नान्यत्पुण्यं कर्म। तदेहि-कृतमिदानीं कालोल्लङ्घनेन। दुराचाराणाममीषां हस्तपञ्जरादिमां बालिकां रक्षामि। परं विरम क्षणं विरम? इतोऽग्रे किं भवतीति पश्य! " इति मनसि समवधार्य दत्तावधानस्तेषां वार्तालापमशृणोदेव यत्-

लुण्टकराजः। ( बालिकायाः स्वस्याननपतनवचो निशम्य-[6] साट्टहासम्। ) सुन्दरि? स्वस्थानगमनाभिलाषं परित्यज्य प्रेमभावेन मां निगदय। नूनं मया सार्धं स्वर्गसुखमुपभोक्ष्यसे त्वं सकलदुःखपरिरहिता सती। प्रिये? मा व्याकुलीभूः। इतोऽविदूर एवास्माकं निवासस्थलम्। यत्र [7] प्रासादादप्यधिकमानन्दं लप्स्यते भवती।

कुमारी। ( आदावमुष्य नि श्वस्य स्वगतम्। ) जगदीश्वर? कां नु दशामहमधुना गमिष्यामि? । ( धैर्यमालम्ब्य-प्रकाशम्। ) नराधम? किमर्थमिमामवज्ञां दर्शयसि? ननु मुञ्च-त्वरयम्?।

लुण्ठक०। (धर्मेणानुनोऽप्रीभूय-[8] सदर्पम्।) राजकुमारि? त्वमतितुच्छशब्दैराकारयसि खलु माम्। परमितस्त्वां न कोऽपि मोचयिता तिष्ठत इति तत्त्वं जानीहि। न खलु मां परिचिनोषि त्वम्? शृणु रे दुराग्रहग्रहिले बाले! शृणु। यस्तव तातस्य दक्षिणो बाहुः मङ्गलसैन्यस्याधिपतिः सोऽयं शूरसिंहोऽद्य त्वां प्रणयदार्ढ्यं याचते।

इयता कालेनापि दस्युरानिमानुच्चारितवान् यदस्मिन्नपि वननिकुञ्जदले तेषां प्रतिध्वनिरश्रूयत। पूराकल्पात्तर्यानोऽध्यमप्यनीन भूमि शब्दैश्चमत्चकार, जगाद चान्तरिक्षं निरीक्ष्य

१ येषाम्। २ प्रभुः। ३ कटाक्षैः। ४ दासाय। ५ समाप्तिसमयः। ६ 'किञ्चिद्धसने विहसितमट्टहासे महद्धसितम्' इति हैम। ७ राजप्रासादात्। ८ चाटुक्तिकारम् "देवता प्रियवचनैः स्यात्"

" जगदीश्वर ? किमिदमाकर्णयामि ? सोऽय मे [1]सपत्न ! तदिद मम [2]मृगव्यम्। यन्मार्गणायाऽह वनाद् वनान्तर भ्रमामि, तमद्य स्वमस्मुखमुपस्थितं समालोके। आ रिपुहतकोऽय कामपि निष्कलङ्का राजकुमारीमपहृत्याऽऽनीतवानिहेति प्रतिभाति मे। सुप्रभातमद्य ? यामिम म द्रुमौ विहरलोमवन्तौ [3]प्रचण्डदोर्दण्डौ चिराय प्रतीक्षेते सोऽय नृशसोऽद्यावितर्कित एव मामुपसेदिवान्। सद्य एवाह पापिनोऽस्य वक्ष स्थल विदार्य तद्रुधिरेण निज चिरपिपासाकुल चन्द्रहास सतर्पयामि। पर त्रिरम्यताम्। परमाद्य नराधम समनया कुमार्या किंकर्तुं वाञ्छतीत्यह निराक्षे। पाणिपञ्जरगतोऽय[4]माखेटोऽधुना नैव पलायितु पारयिष्यति। तत्क्षणमेवाऽह त [5]धरणिधूलिधूसरितानन विधास्यामि, रक्षिष्यामि च राजकुमारीम् " इति।

अथाऽयम[6]ध्वन्य स्वकृपा[7]णकोष शिथिलीकृत्य ततो निरैक्षिष्ट यत्- " सा निर्दय बाल्या दुष्टहतकमेन पर्यचन्य अवर्तिष्ट चैरा तूष्णीमेव तच्छ्रदानाकर्ण्य। तूर्णी स्थितामेता मवलोक्य क्रूर कूरसिंह समभाषत-' राजकुमारि ? भल विचिन्त्य। नान्या गतिस्ते कापि मदायत्तीभवन विना। पूर्णनस्त्वमिदानीं मदधिकारे वर्तसे। तन्ममाभ्यर्थनमङ्गीकुरुषे न वेति विमृश्य ब्रूहि।' इति।

राजकुमारी। अल प्रलप्येदम्। नराधम। ननु विज्ञातोऽसि त्वम्। उन्नतपद समर्प्य मदीयतातचरणैस्तुभ्यमाश्रयो दत्तस्तत्स्थाने त्वयैवरीत्या तेषा प्रत्युपकृतम्। अयि मूढ ? तवान्नदातुर्या तनया सा तव भगिनीतुल्या वर्तत इति ता कुदृशा विलोकयतस्तव [8]विलोचने कथन्न विदलत ? आ। ता प्रत्येव वचास्युच्चारयतस्तव [9]रसना कथ न विदीर्यते ? म ये, त्व कोऽपि राजपुत्रदेशीयक्षत्रियकुलकलङ्कोऽसि अन्यथा त्वदयिमुखादीदृशि वचासि न कदापि विगलेयु। क्षत्रियापसद ? विमृशाऽधुनाऽपि। पश्य, ज्ञानचक्षुर्मीलय। अस्ति समय॰। त्व मा ममावास प्रापय। वृत्तान्तमिम न कमप्यह कथयिष्यामि। भ्रातुरप्यधिक त्वामह मस्ये। मुच्यस्व तत। निपतामि तव चरणयोरिति ब्रुवाणा सा राजकुमारी क्रूरस्य तस्य पदयो पपात।

क्रूरसिंह। [ [10]साकूत विहस्य। ] सुमुखि ? त्यजेदानीं पितृमुखदर्शनाशाम्। सत्वरं मदङ्गगता भव।

राजकुमारी। [ सपैर्यम्। ] दुरात्मन्। ? वदसैव त्वं कथ न [11]हृणीयसे ? सुख प्राणान् त्यक्ष्यामि किन्तु नैवाहं कदापि दुर्वृत्तस्य तव [12]वशंवदतामङ्गीकरिष्यामि इति निश्चितमवेहि।

क्रूर॰। [ सक्रोधस्मितम्। ] [13]उरीकृत्य मम वचनं मद्वृत्तिपरतन्त्रा त्वं वर्तस्व। यदि न वर्तेथास्तर्हि त्वयाऽतिभयङ्करदण्डोऽनुभविष्यते। तवेद कोमल [14]कलेवरं [15]देवतोपहार रचयिष्यामि। नाऽहं सोढुं यहनो सदीया त्वम्।

---

१ शत्रु। २ मृगया। ३ भुजदण्डौ। ४ 'मृगव्य स्यादाखेटो मृगया स्त्रियाम्' इत्यमर। ५ पृथ्वीरजोमलिनमुखम्। ६ पथिक। ७ कृपाण खड्ग। ८ नेत्रे। ९ जिह्वा। १० साभिप्रायम्। ११ लज्जसे। १२ पराधीनताम्। १३ स्वीकृत्य। १४ गात्रम्। १५ बलिम्।

राजकुमारी । ( तस्येदृशीं कठोरां वाणीं निशम्यैव कोपारुणमुखीभूय । ) आः । राजपुत्रकुलनोदरदूषक क्षत्रियमूषक ? विधेहि विधेहि । यत्त्वं विधातुं शक्नुयाः । विधाता मम साहाय्यं विधाता । त्वत्कर्तृक[1]विदाननिर्भीषिकया नाहं बिभेमि । अपि मम कलेवरं सकलं शकलीकृत्य पीडयेर्मां तदानीमपि तव वशंवदतां नोररीकुर्यामेव । क्षत्रियंमन्योऽसि चेत्सङ्ग्राममूर्द्धनि गत्वा स्वपराक्रमं प्रदर्श्य [2]प्रत्यर्थिनां वक्षस्सु कम्पं कथञ्च जनयेः । परं त्वन्तु क्षत्रिय एव नासि यदेवं निसर्गमृदुला[3] अबला व्यर्थं [4]कदर्थयसि । वीरमणयो हि रमणीनां रक्षितारो भवन्ति न भक्षितारः । पराङ्गनासु कदापि तेषां न निपतति दुर्वासनामयी कुदृष्टिः । निसर्गपावनं हि तेषां हृदयम् । सर्वान्तर्यामिनं परमेश्वरं मत्वाऽन्तःकरणेऽप्यपि न चिन्तयन्ति ते पापम् । न जानीषे खलु—" मूढ ? यस्य कोऽपि सहायको नास्ति प्रभुस्तस्य सहायक इति " ।

शूरः । भद्र कुरङ्गलोचने ? अनङ्गानलेनाङ्गारीकृतानीमानि मदङ्गानि निजाङ्गसङ्गामृततरङ्गेण [5]निर्वापयितुमर्हसि खलु । तदेहि एहि [6]लघु । प्रिये ? त्वमेव मे सर्वस्वम् । न तृणायापि मन्येऽहं प्रभुम् ।

राजकुमारी । [7]खलु खलु त्वयीदमुक्त्वा । दुरात्मन् ? परमेश्वरमपि त्वं तृणं मन्यसे ? येन परमकारुणिकेन परमात्मना विविधग्रहनक्षत्रमण्डितं सूर्यचन्द्रभासितं ब्रह्माण्डमिदं निरमायि तमपि न मन्यसे त्वम् ? पराकाष्ठा त्वियम् ? परमोऽवधिरयं पापिनः पामराणाम् । ये हि [8]कलुषात्मानस्तेषां परमात्मज्ञानग्रहणेऽनधिकार एवेति तथ्यमेव ।

शूरः । मुग्धे ? शूरसिंहस्यास्य जीवनचरित्रा[9]लेख्यपट्टिकायां पापपुण्ये नैवाऽऽलिखिते स्तः । ईश्वरः ? ईश्वरोऽस्त्येव कुतः ? ननु दर्शय तमीश्वरम् । जाने; यावदहं त्वां न बलात्करोमि ? न तावत्त्वं मदीयवचनमु[10]ररीकरोषीति । कृतमालापेन । त्वामहमिदानीं बलात्कारेणैव भ्रंशयिष्यामि ।

राजकुमारी । [11]किल्विषकर्मकारिन् ? त्वं मां भ्रंशयिष्यसि चेदीश्वरात्कथमात्मानं रक्षयिष्यसि ? मम रक्षकः प्रभुरयं [12]द्रुतं मम गोपायिष्यति, साहाय्यञ्च करिष्यति । स एव तव दुरितकर्मणां फलं त्वामास्वादयिष्यति । त्वादृशा पामरेणैकेन किं मे कर्तुं पार्यतेव ?।

शूरस्तु ' आः एवम् ? समीचीनम् । पश्यामि—कस्त्वां गोपायितेति ? मानसिंह ? अमरसिंह ? दूरं गच्छतं युवाम् । ' इत्यभिधाय राजकुमार्याः [13]नेदीयान् संवृत्य तस्याः करौ प्रगृह्य निजहस्ताभ्यां तामकार्षीत्— " ब्रूहि— कस्त्वामधुना रक्षितेति । " राजकुमारी तु स्वकरकमलाद्हस्तं मोचयितुमजस्रं प्रायतत । परं क्व स बलवान् सैनिकः पुरुषः ? क्व चेयं प्रकृतिकोमला निर्बला बाला ? ।

अथ पवनतुलितां कदलीमिव कम्पितावयवाम्, सिंहसमाक्रान्तां हरिणीमिव भयविह्वलान्त-

---

१ भवत्कर्तृकेन । २ शत्रूणाम् । ३ प्रकृतिकोमलाः । ४ पीडयसि । ५ शमयितुम् । ६ 'लघु क्षिप्रमरं द्रुतम् ।' ७ "अलं खल्वोः प्रतिषेधे प्राचां क्त्वा ।" ८ पापात्मनः । ९ आलेख्यम्—चित्रम् । १० उररीकरोषि—स्वीकरोषि । ११ किल्विषम्—पापम् । १२ सत्वरम् । १३ अतिनिकटम् ।

करणाम् [1]आयतमुष्णञ्च निःश्वसतीं दीनदीनां कुमारीमेतामवलोक्याय दुरात्माऽभणीत्– "किं स्वीकरोषि न वा प्रार्थनाम् ? अथवा बलादेव त्वां वशंवदां विदधामि ?" इति व्याहृत्य पापात्माऽसौ तां निष्पापां राजकुमारीं [2]परिरब्धुमारब्ध ।

सतीव्रतभङ्गभीरुरियमात्मन कमपि रक्षणोपायमलभमाना– "अये ! रक्षतु रक्षतु कोऽपि दुरात्मनाऽमुना बाध्यमानामिमामबलामेकाम्" इत्याक्रन्दन्ती बलेन पश्चादपसृत्य पलायितुमिव प्राक्रमत । यावदेष क्रूरस्तां ग्रहीतुमग्रे प्रसर्पति तावदेव– "तिष्ठ रे कुलाङ्गनापीडक [3]जाल्मकीटक ! तिष्ठ ।" इति तेन समश्रावि सिंहनादसहोदरो भयङ्करो ध्वनिः । तत्क्षणमेव सणसणिति शब्दं कुर्वाणैका भुशुण्डिकाक्षिप्ता सीसकगोलिका तदन्तिकमागत्य तदीयपार्श्वस्थायिनः 'अभयसिंह' नामकस्यानुचरस्य मस्तकदेशं चुचुम्ब । पश्यत एवास्या-भयसिंहोऽसौ वसुन्धरामालिङ्गय [4]मन्दं प्रभुचरणारविन्दसेवानन्दमविन्दत । ईदृशीमद्भुतां घटनामालोक्य क्रूरसिंहो भयभ्रान्तचित्तो बभूव । चिक्षेप च समन्ततश्चक्षुः । तत्क्षणमेवाय-मन्तर्हितः पथिकस्तत्समक्षमागत्य तस्थौ । सम्प्राप्तोऽयमात्मरक्षक' इति समीक्ष्यैव राजकुमारी तमुपगम्य– 'शरणं प्रपन्नाऽस्मि ते वीर !' इत्यगादीत् ।

पान्थस्तु– 'बाले ! मा भैषीः । जगदीश्वरेण समय एवाहमत्र त्वदीयसाहाय्यार्थं प्रेषितोऽस्मि । सद्य एवाहमेनमेनस्विनं लुण्ठकचक्रवर्तिनं तदीयदुष्कृत्यस्य फलं रसयामि' इति [5]साम्रेडं कथयित्वा पुनर्भुशुण्डिकां सन्धाय सनिस्वनं द्वितीयां गोलिकाममुञ्चत् । तया गोलिकया निहतस्तदीयो द्वितीयानुचरोऽपि धरणितले निपपात, जगाम [6]चाञ्जसा सुरनगरम् । क्रूरसिंहोऽयमिदानीमसहायः संवृत्तः । यमसदनगामिनौ निजसहचरौ विलोक्यासौ क्रुधा कम्पमानः कोशात्कर[7]वालमाकृष्य पथिकाभिमुखमभ्यद्रवत् । यावदेष क्रूरः पथिकोपरि स्वकरवालस्याघातं कुरुते तावदेवास्य वीरपथिकस्य निष्कृष्टकृपाणः झटिति निजकोपाद्विमृश्य स्वस्योपरि तदाघातमग्रहीत् । पथिकस्य कृपाणेन समं सङ्घट्य तदीयकरवालः करकमलादपसृत्य धरणितलमालिलिङ्ग । 'व्यर्थेदानीं रक्षणाशा । समयान्तरे पुनर्द्रक्ष्यामि यतो जीवन्नरो भद्रशतानि पश्यति' इति समवधार्यायं लुण्ठकसार्वभौमः [8]कान्दिशीको दिशः शिश्रिये ।

"हस्तगतोऽयमाखेटः प्रनष्ट ! रिपु ?" इति निगद्य स एव पथिको वीर इतस्ततो विलोचनयुगलं व्यापारयत् । व्यचिन्तयच्चासौ "धिङ्मां जाल्मसेवकम् । खल ! पलायितो-ऽसि खल्वन्ते । आस्ताम् । क्व पलायिष्यतेऽयं दुर्वृत्तो मम पाणिपञ्जरात् ? कदाप्यन्यदाऽयं दुरात्मा मदीयभुजपाशान्तरे निपतिष्यति, गमिष्यति चाऽन्ते दुर्दशीभूय भूयो मम प्रचण्डकोपानलज्वाला-जाल[9]पतङ्गताम् । भवतु । इदानीं त्वहमिमां दीपकोपदीप्तदिमाभिरामां कमलकोमलकरचरणसरोरुहां सुशीलां विमलां बालां सान्त्वयामि । अहो ! कियन्मनोहरमस्या

---

[1] आयतम्–दीर्घम् । [2] परिरब्धुम्–आलिङ्गितुम् । [3] जाल्मोऽसमीक्ष्यकारी । [4] अधीर । [5] बहुवारम् । [6] अञ्जसा–शीघ्रम् । [7] करवालः खड्गः । [8] "कान्दिशीको भयद्रुतः ।" [9] पतङ्ग कीट ।

स्वरूपम् ? केयमलौकिकी कान्तिः ? नूनमनयाऽनेकजननान्तरोपार्जितपुण्यकर्मभिरामादितेयं लावण्यमयी [1]तनुलता । साम्प्रतमियं युवजनमनोविलोभनीयं सर्वाङ्गीणरुचिरयौवनं कमनीयं किमपि वपुः कलयति । अस्या हि माधुर्यवर्षिणी अक्षिणी रसना च, पुण्यमयं हृदयं वचनञ्च, प्रकृतिकोमलं वपुर्मनश्चेति [2]सर्वाकारहृदयङ्गमेयं धन्या कापि दिव्यकन्या । तदेनामनुयुञ्जीय-कतमं राजवंशमियमलङ्करोतीति ।" एवं विचिन्त्यैव पान्थस्तां राजदुहितरम्- 'बाले ? परमकृपालोः परमेश्वरस्य कृपया निस्तीर्णोऽयं दुस्तरो [3]विपदर्णोनिधिस्त्वयेति नितरां स्वस्थी-भूय सम्प्रति निवेदनीये [4]निजनामसद्मनी ? येन त्वां निजपितृचरणनिकटं नयामि ' इत्यन्वयुङ्क्त ।

ईदृशं स्नेहामृतभरितं वचनं निशम्य ह्रिया राजकुमारी नीचैर्मुखं [5]निभालयाम्बभूव । परमन्ततो लज्जां तनूकृत्य सविनयमिमां मधुरां गिरमुदैरयत् " वीरशिरोमणे ? अत्रभवता-मनुकम्पयाऽनयाऽबलया सुतरामपारि रक्षितुमयं कुलाङ्गनानां [6]समयस्तन्महादयालुरयं महेश्वरः श्रीमते श्रेयो वितरतुतराम् । अस्य च श्रीमदनुग्रहस्य किमुपकृत्येयमबला प्रत्युपकर्तुमीश्वरा भवेत् ? महाभाग ? नातिविदूरमितो [7]मदीयमुदवसितम् । योजनत्रयमितो वर्तते विजयनगरं नाम राजनगरम् । यत्र निवसति श्रीमान् विजयसिंहनामधेयो नृपवरः । ' कुमुदिनी ' इति प्रसिद्धिं गताऽहं तस्य नन्दिनी । तदागच्छतु तत्र मया समं श्रीमान् । निरीक्ष्यात्रभवन्तं नितरां संतुष्टान्तरङ्गो भविता मम तात " इति ।

" तत् किं राजकुमार्यसि ? विजयनगराधीश्वरस्य महाराजश्रीविजयसिंहस्य त्वं कन्यारत्नं किमु ? अहो ? कीदृशी विचित्रेयं घटना । भवतु । राजकुमारि ? कोऽयमासीत्खलु त्वदप-हारको दुरात्मा ? कया रीत्याऽत्र त्वामसौ समाहर्तुं [8]प्रभूर्बभूव ? कश्चासीदस्याभिप्रायः ? ' इत्यखिलमिदं वृत्तान्तमुदन्तजातं न चेदनौचिती कापि हानिर्वा तर्हि सकलं मां विज्ञापयितुम-र्हसि " इति तन्मुखेन सर्वं विज्ञातुकामोऽयं पथिकस्तामपृच्छत् ।

कुमुदिनी । महाभाग ? किमकथनीयं नाम भगवति ? एष दुरात्मा मम पितृचरणैः सेना-पतिपदे नियुक्तोऽस्ति । ' क्रूरसिंह ' इति तदीयं नामधेयम् । अतीव खलु नीचनरप्रकृति-रयम् ।

पथिकः । तथाप्यस्य [9]पुरुषापसदस्य सेनापतिपदारोपणे किं प्रयोजनम् ?

कुमुदिनी । तत्राप्यन्यत् कारणम् ? ईदृग् नीचवृत्तिरयं स्यादिति तातो मम नाज्ञासीत्; अन्यथा क्षणमेकमप्येनं तत्पदे नारोपयेत् ? ।

पथिकः । तस्य सूर्यपुरराजपदच्युतस्य राज्ञः पुत्रः किमयं शूरसिंह ? उत चान्यः कश्चनासौ ? ।

कुमुदिनी । आम् ? स एवायं क्षत्रियाधमः शूरसिंहः । आख्यानुरूपमेवास्य चरितम् ।

---

१ अङ्गवल्ली । २ मनोहरा । ३ दुःखसमुद्रः । ४ सद्म-गृहम् । ५ विलोकयामास । ६ समयः-आचारः । ७ गृहम् । ८ समर्थो जातः । ९ नराधमस्य ।

पथिक । कथमय पुनर्भवदीयराज्ये समायात ? कथञ्च महाराजस्य [1]स्नेहभाजनमयं जात. खलु ? ।

कुमुदिनी । कथयामि तमखिलं वृत्तान्त श्रीमते । श्रूयताम्–अथैकदा मृगयाभिलाषी विक्रमरसानुरोधी मम तात प्रशस्तं हयमेकमधिरुह्यैकाकी सिंहशरभशार्दूलवृकवराहगजबहुलाया [2]गण्डशैलजटिलाया निबिडतरतरुवरसङ्कुलाया वनभुवि प्रययौ । भ्रमन्त तत्र त साऽऽद्भारण्य भूभावकस्मादेकतो [3]भयङ्करकुञ्झटिकाया निर्गम्य विकरालवक्त्र केसरी केसरिणी चोभौ सम समाचक्रमतु । [4]पुण्डरीक तु भुशुण्डीगोलिकया निहत्य कालवश निनाय मे जनक किन्तु मरणकालकृत तस्य क्रन्दनं चीत्कृत निशम्य सा [5]कण्ठीरवकामिनी भृश चुकोप, पपात चातितीव्रपात मम तातस्योपरि । आसीदनवधानो मे जनक इति सा करालवदना केसरिणी [6]प्रबलप्रतलप्रहारेण तात तुरङ्गमान्निपात्य भूतले यावत्त विदारयितु प्रवर्तते तावदेव सणणणणिति शब्दं कुर्वाणा बाणद्वयी सम समापत्य क्रूरायाम्तस्याश्चक्षुषी प्राविशत् । अन्धीभूय च सा तीव्रवेदनया बभ्राम । तत्कालमेक पुरुषस्तत्समक्ष प्रधावमान समागतवान् कृतवांश्च तस्या उपरि [7]निजनिस्त्रिंशस्याघातम् । तदाघातमात्रेणैव तस्या केसरिण्या मस्तक कलेवरात्पृथग्भूय भूमौ न्यपतत् । क्षणमथासौ केसरिणी निजहृदयेश्वरस्य समीपदेशम् । समयेऽस्मिन्मम तातो मूर्च्छापरवशोऽभूदिति तमागन्तुकोऽय पुरुषो जलादिनोपाचरत । तदुपचारेण क्षणानन्तरं सुप्तोत्थित इव प्रबुद्धय तातस्त स्वप्राणरक्षिणम्–'नाहमानृण्यमुपयास्यामि तवोपकारस्य –इति सकृतज्ञतापूर्वं [8]व्याजहार । स उवाच । ' राजेन्द्र ? किमत्र मयोपकृतम् ? मया तु स्वकर्तव्यमेव पालितम् ? इति, । तस्य मधुर वचनमाकर्ण्य तात प्रसन्नो भूत्वा तमप्राक्षीत्–' अयि ? वीर ? विज्ञापय माम् किमभिधान ते ? अहं विजयसिंहनृपतिरस्मि । तवाभिलाषो यदि मया सममागन्तु नेतुमभिलष्याम्यह त्वां तर्हि स्वराज्यम् । तत्र त्वामहमुच्चपदे प्रतिष्ठाप्य सुख यिष्यामि ' इति ।

मध्य एवाय पथिकस्ता पृष्टवान्–'राजकुमारि ? किमयमेवासीत्तत्र तातचरणाना प्राणरक्षक ? इति ।

कुमुदिनी । आम्, श्रीमन् ? अभूदयमेव दुरात्मा क्रूरसिंह ।

पथिक । एवम् ? भवतु । तत किमभूत् ?

कुमुदिनी । अनन्तर निजमनोरथानुकूल सपदमिति विरचिताञ्जलिरयं दुरात्मा मम पितृचरणान् सविनय व्यजिज्ञपत्– ' देव ' वत्वदुपकृतोऽयं दास । क्षत्रियपुत्रोऽस्म्यहम् । ' क्रूरसिंह ' इति मे नामधेयम् । राजेन्द्र ? अतिकृतज्ञतापूर्वकमहं श्रीमता शुश्रूषां विधास्यामि ' इति । ततस्तमात्मना साकं विजयनगरमानीय तातचरणा उपसेनापतिपदमारोपितवन्त । किंयत्कालानन्तरं प्रत्यर्थिभि सार्द्धं प्रवृत्ते युद्धेऽमुना स्वपराक्रम प्रदर्श्य

१ पात्रम् । २ गण्डशैल पर्वतात्पतिता स्थूलपाषाण । ३ ' झाडी ' इति भाषा । ४ सिंहम् । ५ सिंही । ६ ' पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ । ' ७ खड्गस्य । ८ उवाच । ' व्याहार उक्तिर्लपितम् । '

विज्ञोऽस्मि[1] । तत्कृत्येनापि तातस्तदुपरि संतुष्य मध्याभेऽर्कां राजसभां विधायास्य गुणान् प्रशस्यास्मै महार्हमणिजटितं [2]सौवर्णकिरीटमर्पयामास । तस्मादेव दिवसादमुं निजगुप्तमन्त्रिणमपि व्यधुः पितृचरणाः ।

अथ [3]माकन्दमञ्जरी[4]मकरन्दबिन्दुवृन्दानि स्वादं स्वादं सानन्दं मञ्जुलमालपन्तीनां कोकिलानां [5]काकलीकलकलेन दिङ्मण्डलं मुखरयन्, [6]चन्दनपरिमलभृता मलयानिलेन रसालतिलकचम्पकादिमहीरुहालिङ्गनजनितानन्देनेव कोरकितामङ्गयष्टिकामुद्वहन्तीनां वासन्तीनां ललितलतानामुत्तमाङ्गानि मन्दमन्दमान्दोलयन्न[7]ङ्गहारं शिक्षयन्निव, [8]इन्दिरासुन्दरे[9]न्दीवरमर[10]न्दतुन्दिलानां [11]मिलिन्दजालानां मञ्जुलगुञ्जनैर्निकुञ्जपुञ्जेषु विश्रान्तिसुखार्थं निषण्णानां पान्थजनानां मोहनिद्रां जनयन् वनविहाराय रसिकजनमनांसि समुत्साहयन् [12]पुष्पसमयः समुपतस्थे । तस्मिन्नतिरमणीये वसन्तसमये नगरोपान्तवर्ति रम्यं विशालं विलासोद्यानमुपगम्याहं प्रियसखीजनेन समं कियत्कालमक्रीडम् । तदानीमयं दुरात्मा तेनोद्यानवर्त्मना क्वापि प्रयाति स्मेति सखीभिः समं रममाणायां मयि तस्य दृष्टिर्निपतिता । 'अहं राजकन्याऽस्मीति' विज्ञातममुना निजचेटीद्वारेण । ततोऽयं प्रहृष्य मया सार्कं स्नेहं कलयितुं मनसि निश्चिकाय । ततः प्रभृति पापात्मासौ मत्सखीहस्तेन नूतनानि विचित्राणि सुन्दरवस्तूनि निरन्तरं मदन्तिकं प्रेषयति स्म । तस्यामुनाऽनर्घ्ये[13]णोपायनेन तदुपर्यहं समशयिषि । [14]नाभ्युपायञ्चाहं तदुपायनीकृतानि तानि वस्तूनि । अतोऽयं दुरात्मा सुतरां रुष्टो बभूव । अनन्तरमेकदा मम तातोऽमुना सममुद्याने समुपविष्टो विविधमालपति स्म । आलपनान्तरं एवावसरमुपलभ्यासौ धूर्तसिंहस्तातमब्रवीत्— 'महाराज ! पौरजनेष्वधुना— 'राजकुमारी विवाहयोग्या संजाता; तदपि न जाने किमिति महाराजस्तस्याः परिणयचिन्तां नावहति?' इति देवपादानाम[15]पवादः समाकर्ण्यते । राजेन्द्र ! ममाप्याश्चर्यमिदम्— 'यद् भगिन्यां कुमुदिन्यां [16]परिणयार्हायां संवृत्तायामपि श्रीमान् किमिति शान्तमना आस्ते ? किं कोऽपि राजकन्यानुरूपो राजकुमारो न लभ्यते ? तत्कारणं महाराजश्चेदेनं न बोधयेत्तदा कमन्यं वेदयेत् ? प्रभो ! अहमपि श्रीमतां पुत्र इवास्मि । श्रीमतां दुःखे ममाप्यंशो विद्यत इति यदेव दुःखं भवेन्महाराजस्य तदेनं दासजनं प्रति वक्तव्यं येन सत्वरं तदुपायो विधीयेतेति ।"

एतावदुदीर्य कुमुदिनी निरश्वसत् । पथिकः साश्चर्यो भूत्वा पप्रच्छैनाम्— 'राजकुमारि ! ततः किमजनि ? कथं निःश्वसिति भवती ?' इति । कुमुदिनी । क्षन्तव्योऽयमविनयो महानुभावेन । संघटितघटनावलीस्मरणेन मे हृदयं सहजमेव दुःखाकुलमभूदित्यहं निःश्वासमग्रहीषम् । स्वस्थाऽहमिदानीमस्मि । तदग्रे निशम्यताम्— 'धूर्तसिंहस्येदृशीं विनयबहुलां गिरमाकर्ण्य

---

१ ज्ञाः । २ मुकुटम् । ३ आम्रमञ्जरी । ४ 'मकरन्दः पुष्परसः' । ५ 'काकली तु कले सूक्ष्मे ।' ६ परिमलः सुगन्धः । ७ अङ्गविक्षेपम् । ८ कान्तिः । ९ इन्दीवरं—कमलम् । १० मरन्दः पुष्परसः । ११ मिलिन्दः भ्रमरः । १२ वसन्तकालः । १३ उपहारेण । १४ स्वीकृतवती । १५ निन्दा । १६ पाणिग्रहणयोग्यायाम् ।

तातस्तमारब्धवानभिधातुम्– ' शूरसिंह । शृणु, तद्वृत्तमहं तुभ्यमेव कथयिष्यामि । त्वां न कथयेयं चेत्कमहं कथयेयम् ? अजितदुर्गनगराधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजपुत्राय श्रीचन्द्रसिंहायैव राजकुमारीयं दातव्येति ममासीत् विचारः किन्तु बलीयसी परमेश्वरेच्छा । अकस्मान्महाराजश्रीकेसरिसिंहस्यारण्ये वधोऽजनि । तदीयौ पुत्रावपि न जाने क्व प्रनष्टौ ? तयोरद्यावधि न काचन [१]प्रवृत्तिरपि लभ्यते । वत्साया मे कुमुदिन्या अनुरूपः स एव सर्वगुणसम्पन्नः श्रीचन्द्रसिंहो वर आसीत् । यदा कदापि चन्द्रायैव तस्मै कुमुदिनीयं दास्यते । शूरसिंह ? राजपुत्रयोस्तयोरन्वेषणकार्यं तुभ्यमेवाहं समर्पयामि ' इति ।

वार्तामिमामाकर्ण्यैव [२]कर्णयोस्तोद्यमान इव भ्रुकुटिमारचय्य सरोषः स वसौ नराधमो वक्तुमारेभे– ' किमाह श्रीमान् ? [३]अननुगुणोऽयं विचारः श्रीमताम् । तस्य राज्ञो यो वधोऽजनि स तत्कर्मणैवाभवत् । नृपोऽसौ बहुदुरभिमानी कुबुद्धिश्चाभूत् । तस्य कनिष्ठः कुमारो यो नष्टः स सम्प्रति देवीभक्तानामधिकारे वर्तते । सोऽपि स्वल्पकालेनैव देव्या बलिः करिष्यते । तदीयज्येष्ठकुमारगवेषणार्थमपि बहवो देवीपूजका विचरन्ति किन्तु नासौ प्राप्यते । राजलक्ष्मीपरित्यक्तेन तेन तत्र इतो भ्रमता तापसेन समं राज्यसुखसंवर्धिताया अविज्ञातकष्टलेशाया सुकुमार्या कुमार्याः कथं [४]परिणयमङ्गलमुपपद्येत ? इयं तु केनापि महामहिमशालिना महीमहेन्द्रेण विवाहनीया ' इति ।

ईदृशं तस्य वचनं कर्णे कृत्वा रोषारुणनयनो मम तातस्तमवादीत्– ' शूरसिंह ? नाहं शक्नोमि तव सम्मतिमनुमन्तुम् । चन्द्रेणैव वा कुमुदिनीं विवाहयिष्यामि यावदायु कौमारब्रह्मचर्यव्रतं वाऽङ्गीकार्य तामहं परमेश्वराराधने लीनयिष्यामीति दृढो मे [५]नियमः । शूरसिंह ? ननु दर्शय मां शीघ्रम्–क्वास्ते केसरिसिंहमहाराजस्य कनीयान् कुमारस्तेषां दुर्विभक्तानाञ्च निवासस्थलम् ? एहि एहि । वयं तेषां दुराचाराणां हस्तात् कुमारं विमोच्य तदीयनीचकर्मणां दण्डं कुर्वीमहि ' इति व्याहृत्य क्रुधा संतप्यमानमानसस्तातः समुत्थाय शूरस्य करं गृहीत्वा तमाचकर्ष । अतः स धूर्तस्तातेन समं कियद् दूरं गत्वा समयज्ञतया स न्यवीविदत्– ' देव ? शान्तमास्ताम् । नावश्यकता जागर्ति खलु श्रीमतः परिश्रमं दातुम् । अहमेव केसरिसिंहमहाराजस्य कनीयांसं कुमारं तेषां दुष्टानां हस्ताद् मोचयित्वा समानेष्यामि । सत्यं—एतावदपि विकटस्थले वर्तते यत्तदहमपि न जानामि स्थलम् । [६]अल्पेनैवानेहसा तत्स्थानमुपलभ्य कुमारं विमोच्य श्रीमच्चरणसमीपमुपस्थापयिष्यामि ।' इति समुदीर्य तातं नमयित्वाऽसौ चतुरमनस्तातसकाशादगमत् विसर्जयाम्बभूव । शूरसिंहेन तातसेवां विधाय महती सम्पत्ति सम्पादिताऽभवदिति यथैवाथ तातसकाशादपसृतस्तथैव मम प्रासादगृहान्तरं प्राविशत् व्यतिक्रमपदार्थं मां समुपेत्य निजदुष्टमनोवृत्तिम् । तमबूबुधदसौ मां बहुविधम् परमखिन्नं तत्कथामुपेक्ष्याहमतिवरां तमवामन्ये । ' चन्द्रमेवाहं परिणयेयं यावज्जीवं ब्रह्मचर्यव्रतेनैव वाऽहं परमानन्दकन्दं परमब्रह्म स्मरेयमिति ' मदीयान् ममासी

१ वार्ता । २ पीड्यमान । ३ असदृश । ४ विवाहोत्सवम् । ५ प्रतिज्ञा । ६ कालेन ।

त्संकल्पः । यदाऽहममुं तिरस्कृतवती तदासौ दुरात्मा नितरां विवृद्धकोपो मामगादीत्— 'कुमुदिनि ? मन्यस्व । नो चेदहमन्ते त्वां [1]बलादानयिष्यामि' इति । एतद्वचनश्रवणसमकालमहं तं भृशं धिक्कृत्य बहिर्निरगमयम् । तदयं मयि क्रूरां दृशं निक्षिपन्निरगात् ।

पान्थोऽयं प्रकुप्य मध्य एवाचकथत्— 'अरेरे नराधम पापिष्ठ क्रूर ? प्राणिहि कियत्कालम् । हुं ततः ? ।' इति ।

कुमुदिनी । तदनु कतिचिद्दिनानन्तरं न खलु किमपि घटितमिवेति सम्प्रधार्य निश्चिन्तमनसाऽहं समयं समगमयम् । कमप्यहं वार्तामिमां न न्यवीविदम् । अथैवं गच्छति काले [2]निदाघसमयः समभूत् । तत्राहमद्य ममाभिः प्रियवयस्याभिः समं सायंसमये तरङ्गानिलकम्पितायां चन्द्रवतीसरित्तीरोपवनतरुवीथिकायां कदाचित्, परमहरितलतावलिवेल्लित[3]विटपिमनोहरे विलासोद्याने कदाचन वायुसेवनार्थं गच्छामि । ह्यस्तु चन्द्रवतीतरङ्गिणीतटोपवनाभिवर्तमानया ममार्द्धवर्त्मनि [4]नीलनिचोलावृतसकलशरीरा भीषणाकारा दुराचाराश्चयो नरा सम्मुखीना अवर्तन्त । झटिति समुपसृत्य तैरहं जगृहे । यावदहमाक्रन्दितुं प्रावर्तिषि तावदेव तेषामन्यतमो मम मुखोपरि करमाधायाक्रन्दन्तीं मां न्यरुणत् । मम सहचर्यो वयस्यास्तु भिया पलायन्त; भीत्या चाहमपि मूर्च्छिताऽभवम् । अथ मूर्च्छोपगमे—'अहमिह विकटायामटव्यामानीताऽस्मी' ति व्यज्ञायि मया । स्वमरणं सन्निहितमित्यवधार्य जगत्त्रायकं प्रभुमहं स्तोतुमुपाक्रमे । प्रत्यागतचेतनां मामवलोक्यायं चण्डालचक्रवर्ती तावदतितरां समबोधयामास । नाहमभ्युपेतवती तदीयवचनम् । अथ विधाय बहुविधं निर्भर्त्सनामयं भाषणमसौ नृशंसहतको मद्गात्रं वशयितुं प्रावर्तिष्ट । अत्रान्तरे प्रादुर्भूयात्रभवता रक्षितं मम पातिव्रत्यमित्येतावदस्या मन्दभागधेयाया वृत्तम् । अयि आपन्नशरण वीरशिरोमणे ? योऽयं श्रीमता मदुपरि महानुपकारो व्यधायि तं यावज्जीवमहं न विस्मरिष्यामि । इदानीमात्मपरिचयेनैनां श्रीमच्चरणशरणां कृतार्थयिष्यन्ति श्रीमानिति सविनयमनयाऽभ्यर्थ्यते ।"

क्षणं विमृश्यायं पान्थोऽवृत— 'राजकुमारि ? अहमपि कश्चन राजन्यपुत्रो राजकुमारोऽस्मि । 'राजयोगी' इति मां प्रवदन्ति जनाः । कैश्चित्कारणैरहं भूमण्डलं विलोकयन् विचरामि । चिरमहमिमां विकटामटवीमासादयम् । पर्यटन्नहमस्यामितस्ततो मार्गमार्गणाय । अकस्मात्करुणाजनकं रुदाक्रन्दनध्वनिमशृणवम् । तत्क्षणमेवाऽहं रुदाक्रन्दनध्वनिमभिलक्ष्य तव रक्षणाय त्वदभिमुखमभ्यधावम्' इति ?

कुमुदिनी । तदत्रभवान् कोऽपि राजकुमारः किमु ? वरम् ? योगिराज ? कुत्रेदानीं गन्तुमितोऽभिलषति श्रीमान् ? ।

योगिराज. । यत्रेश्वरो मां नेष्यति तत्रैवाहं यास्यामि । परमिदानीं त्वहं भवतीं त्वदीयपितृनिकटं निर्विघ्नं नयामि । परतो यत्कर्तव्यं तत्पश्यते मया ।

कुमुदिनी । पावनीयप्रशान्तैरमूर्ते योगिराज ? अस्ति विज्ञाप्यमर्थनीयमस्या हतभाग्याया

१ हठात् । २ ग्रीष्मकालः । ३ विटपी–वृक्ष. । ४ निचोलः प्रच्छदपटः ।

बालिकायास्तन्निशम्यता दयालुनाऽत्रभवता । पुण्यशाली पुरुषोत्तम कोऽपि श्रीमानित्यहं तर्कयामि । तदागच्छतु भवान्मम पितृचरणोपकण्ठम् । तत्रोपविश्य कृतार्थयतु मां श्रीमान् । सर्वथाऽहं श्रीमतामानुकूल्यं सम्पादयिष्यामि । तत्र निवसतां श्रीमतां सतां प्रतिदिनं दर्शने नाहमात्मानमतितरां पारयिष्यामि ।

योगिराज । ( कुमुदिनीं परीक्षितुकाम इव साकूतम् । ) राजकुमारि ? ईदृशो यदि भवत्या अभिलापस्तर्हि यावत्त्वत्पाणिग्रहणं त्वत्पितृमकाशमहं निवसामि । भवत्या पाणिपीडनमधुना त्वरितमेव सम्पत्स्यत इति विभावयामि ।

कुमुदिनी । ( उत्कण्ठीभूय सनिर्वेदम् । ) मत्पाणिपीडनम् ? तत्तु यदैव परमात्मना निरधारि तदैव भविष्यति । चन्द्र विहायाहमिह लोके नान्य कमपि परिणेष्यामि । वल्लभो मे चन्द्रो यदैव लप्स्यते तदैव तेन समं मे पाणिग्रहणमङ्गलं सम्पत्स्यते, अन्यथाऽत्रभवानिव काषायवसनं परिधाय नगान्तरेष्वन्तरि जगदीश्वरे स्वात्मानं नियम्याहं ब्रह्मचर्यमहाव्रतं पालयिष्यामि, इति दृढीयान् मम सङ्कल्पः । भवतु । योगिराज ? किमर्थं श्रीमताऽयं योगवेषो धार्यते ? किं तादृशं भगवति महासङ्कटमापतितं येनैतादृशि वयस्यल्पीयसि योगिनाऽत्रभवता भवितेति विज्ञापनीयेयं बाला ।

योगिराज । राजकुमारि ? प्रातःकालमहं भवतीं सकलं निजवृत्तं [1]विशकलय्य कथयिष्यामि, यदाकर्ण्य [2]खल्वातिवेलमाश्चर्याम्बुधिकल्लोलमालायां निमङ्क्ष्यति भवती । न विद्यतेऽधुना कथनावसरः । तदेहि–राजकुमारि ? त्वां त्वत्पितृचरणाभ्यर्णमहं नयामि ।

कुमुदिनी । यथाज्ञापयति महानुभावः । आगम्यतामत्रभवता । इत्यभिधायोभावपि चलितुमारेभाते । क्षणादेव चेमौ विशालशैल[3]श्रेणीजटिलासु निकुञ्जपुञ्जकुटिलासु महारण्यमालासु [4]निलिल्याते ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ ब्रह्मचर्यशतकसधीच्ये कुमुदिनीचन्द्रे प्रथमा कला ॥ * ॥

---

## अथ द्वितीया कला ।

" दयालव प्राणिषु सौख्यहेतवः समस्तसंसारहितं चिकीर्षवः ।
भवन्ति धन्या नहि कस्य साधवः सदा सदन्तःकरणप्रवृत्तयः ॥ " ( प्रकृतिसौन्दर्ये )
" [5]व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि [6]पतङ्गस्योदये [7]पुण्डरीकं द्रवति च हिमरश्मावुद्गते [8]चन्द्रकान्तः ॥ "
( भवभूतिः )

---

१ विघटीकृत्य । २ अत्यन्तम् । ३ पर्वतमालाश्रेणीषु । ४ अन्तर्हितौ । ५ अ योजयति मान् करोति । ६ सूर्यस्य । ७ कमलम् । ८ शिलाविशेषः ।

"उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं[1] केनेन्दुः शिशिरीकृतः॥" (नलचम्पू।)

इतस्तु दृश्यतां कीदृशं [2]रामणीयकमस्य रिपुकुलदुर्जयस्य विजयनगरस्येति। कियद् दूरमनुत्तरं [3]उत्तराहि तरलतरतरङ्गभङ्गुरसङ्गमसङ्गतशिलाशकलशालिनी ललितलवङ्गैलाद्रुमलतालिङ्गितबकुलजम्बीरकदम्बकरमालतीमालिनी शीतलतरतरङ्गानिलामन्दानन्ददायिनी मन्दगामिनी विमलजलवती चन्द्रवती नाम्नी [4]तरङ्गिणी प्रवहति। परितोऽमुष्य [5]प्रफुल्लवनस्पतिकुञ्जरमणीया सञ्जनितविरहिजनमनोरञ्जना पीतकान्तिपरि[6]पन्थिहृदयभञ्जनाश्वल्लबिम्बचुम्बिचारुतुङ्ग[7]शृङ्गमण्डला [8]सुन्दरकन्दराखण्डला [9]मत्तमतङ्गजाकारभयङ्करा [10]नैसर्गिकदुर्गमाला इव विशालाः [11]कन्दरिणो विलसन्ति। मध्ये चैषा रमणीयराजमन्दिररुचिरं विजयनगरं चकास्ति। परितो नगरं प्रत्यर्थिसार्थदुर्धर्षणीया दृढतर[12]प्रस्तरनिर्मिता प्रोच्चा [13]प्राकारभित्तिः। अस्यां द्वादश द्वाराणि सन्ति। प्रतिद्वारं विजयनगराधीश्वरनामाङ्कितवर्तुलरजतपट्टिकाविलम्बितवामवक्षस्स्थला [14]प्रहरिपङ्क्त्यो पर्यायेण स्वकार्यधुरं निर्वहन्ति। उत्तरेण [15]पक्षद्वारपथं प्रविष्टेन सुदूरं महानेको भव्यः प्रासादो दृश्यते, प्रासादोऽयं महार्हवैदूर्यप्रवरादिमाणिक्यखचितत्वात् [16]कुन्दननयनमनोरमणीयः स्फटिकशिलानिचित[17]कुड्यकमनीयो रत्नारुणनीलपीतादिवर्णरञ्जितकाचपट्टिकाघटितकपाटजालमहनीयश्चास्ति। पुनरभितः सौरभपल्लवसुवासितान्तरा मधुकरझङ्कारबधिरितदिगन्तरा हृदयहरणचारुविकूजितविविधविहङ्गमनोहरा निर्मलजलपूरितस्फटिकमणिमय[18]दीर्घिकाभिरुचिरा चकास्त्यतितरां कापि पुष्पवाटिका। परितोऽस्याः लोहदण्डप्राकारः। अस्ति विशालमस्य द्वारम्। द्वारस्यैकपार्श्वे सुन्दरोपलविनिर्मिता [19]मन्दुरा। अपरपार्श्वे च [20]दन्तावलमन्दिरं विलसति। समन्ततश्च नक्तन्दिनं करकलितविकोशकरवालाः विनिहततस्करजालाः प्रहरिणः सावधानं विचरन्ति।

सम्प्रति प्रभातप्राया विभावरी। कुमुदिनीदुर्घटनावलोकनेनेव भृशं म्लानं सदाद्यापि चरमाचलचूडां चुम्बति चन्द्रमाः। नाद्यापि प्रभवति साकल्येन प्रभाकरकिरणजालं[21]मम्बरतलतो निर्गमयितुं [22]तिमिरकदम्बकम्। स्वच्छन्दमिदानीमपि मन्दजनाः [23]शयनपर्यङ्के निद्राणा निद्रां द्रावयन्ति। उदेष्यन्तं भास्करं विभाव्य तस्कराः सत्वरमुत्तरमार्गं निर्लीय निर्लीय निजनिलयं प्रति चलन्ति। व्यभिचारिण्योऽपि व्यभिचारैरतिवाह्य रजनीं मलिनमुखाः सतृष्णं सस्मृति– 'परिजिहासुरस्मात् मद्याति कोऽपि परिचितश्चेदिममुं चरं विजानीयात् तदा' –इति विमृश्य [24]पल्लवपथं परित्यज्य [25]कुलीनासु मन्दिराणि निलीयमानाय कथञ्चित् प्रवर्तन्ते

१ चन्द्रः। २ सौन्दर्यम्। ३ उत्तरस्यां दिशि। ४ नदी। ५ वनस्पतिपुष्पाणां—समूहेन। ६ पयस्वी—शत्रु। ७ पिङ्गलनूतन। ८ दरीभेद। ९ मत्तगज—भय। १० प्रस्तर। ११ पर्वत। १२ पाषाण। १३ "प्राकारो वरणः सालः।" १४ पहरेदार। १५ पक्षद्वार। १६ सुवर्णम्। १७ कुड्य भित्ति। १८ बावली। १९ अश्वशाला। २० गजगृहम्। २१ गगनात्। २२ तमःसमूह। २३ शय्यासनम्। २४ राजमार्गम्। २५ रथ्यासु।

प्रजन्ति । कुत्रचिन्नगरमहागारे सरागं गायतां गायनजनानां सतानतारतरा मञ्जुलगानभङ्गतरङ्गा रसिकहृदयतरङ्गिणीश्वरं तरङ्गयन्ति । सुन्दरराजमन्दिरनिर्गता वन्दनीयनरेन्द्रवन्दनात्त्वराणां [1]वन्दिवृन्दारकवृन्दानां हृदयानन्ददायिनी मङ्गलमयप्रबोधगीतपरम्परा [2]हरिदन्तरेषु [3]मूर्च्छति । अधुनाऽपि निर्जन एव मार्गः । सर्वत्र किञ्चित्किञ्चित्प्रकाशः सवृत्तोऽस्ति । ब्राह्ममुहूर्ते समुत्थाय विधाय च शौचपूर्विकां क्रियां साम्प्रतं परमानन्दकन्दपरब्रह्मणि निमग्नचेतसो वर्तन्ते ब्रह्मविदः सत्पुरुषाः । [4]अलिन्देषूपविश्य [5]विद्यार्थिसन्दोहः समस्वरकर्कशं स्वपाठं रटति । 'सञ्जातोऽत्र प्रातःसमयः' इत्यवधार्य पान्थसमूहोऽपि प्रस्थानाय [6]सन्नह्यति । इत्येव कार्यक्रमो दृश्यते विजयनगरराजधान्याम् ।

अत्रान्तरे एवैकत्र शान्तप्राये पथि [7]कक्षनिक्षिप्तदक्षकौक्षे[8]यकाणां भुशुण्डीमण्डितबाहुदण्डानां [9]कञ्चितवारबाणानां [10]सैन्धवारोहाणां शतमिव दलं समुपस्थितम् । शोणितमिवैषां वमन्ति स्म नेत्राणि ग्लानिमिवोद्गिरन्ति स्मापि वदनमण्डलानि, येन जागरित्वा खलु निखिला रात्रिरेभिः परश्रान्तमिति प्रतीयते स्म । क्षणादेवामी सादिन एकं [11]शृङ्गाटकमुपगम्य समवतस्थिरे । एषां नायकः सम्बोध्यैतानेवं न्यगादीत् हा हन्त ! सम्पूर्णां रजनीं महारण्येषु, नदीपरिसरेषु, पर्वतप्रान्तेषु च परिभ्रमन्तो [12]वयमजीगमाम तदपि श्रीमतीं राजकुमारीं नैवालभामहि । हा ! कथमिवाहमधुना श्रीमहाराजाय निजमुखं दर्शयामि ? अये, शान्तिमयेऽस्मिन् पवित्रराजनगरे किमिदमकस्मादापतितम् ? कोऽयमीदृक् कलुषात्मा नराधमो भवेद् य इत्थंसाहसं विधाय राजकुमारीमपहरेत् ? (क्षणं विचिन्त्य ।) आः ! यस्मिन्नहनि श्रीमती कुमुदिनी नयनपदवीमतिक्रान्तवती तस्मादेव दिवसात् क्रूरसिंहोऽपि नोपलभ्यते । किन्तु खलु तदाऽस्मिन् कर्मणि निजहस्तक्षेपमसौ कुर्यात् ?' इति विचिन्त्य यवेव सादिनां प्रधानो मुहूर्तं यावद् विचाराम्बुधितरङ्गमालासु न्यमाङ्क्षीत् । परतश्चावदत्— 'नैव नैव । एवं तु न सम्भाव्यते ? तदाऽत्र किन्नु विधेयम् ? अये ? यदा मां श्रीमहाराज – 'किमानीता मम प्राणप्रिया कुमुदिनी भवता' इति प्रक्ष्यति; किमुत्तरं तदाऽहं तस्मै दास्यामि ! जगदीश्वर ! [13]कृपामवहेलना ? भवतु । स्यात्तदेव यन्निर्धारितं भवेदीशेन' इति विमृश्य सहचरैः सादिभिः सह सोऽप्यसौ प्रासादाभिमुखं प्रतस्थे ।

प्रासादे श्रीमता महाराजेनापि समग्रा रात्रिर्जागरेणैवातिवाहिता । अतीव चिन्तोद्विग्नमना आसीन्महाराजः । अत एव प्रभातसमये महाराजस्य मुखमण्डले मुहुर्मुहुर्विविधभावभङ्गजनिताः [14]परिवर्तनरङ्गा लक्ष्यन्ते स्म । समयेऽस्मिन् महाराज्ञ्यपि प्रासादाग्रभागवर्तिन्याः पुष्पवाटिकायां लीलाकुलमना मल्लिकागुल्मगुच्छस्य सन् कमपि पुरः प्रतीक्षमाण इवेतस्ततो

अपतिष्ठत। समस्वेवायं नरेन्द्रो मनस्येवमालपत्- 'किं न खलु प्राप्येत मे वत्सा कुमुदिनी? प्रहरिणोऽपि कथमद्यापि नागताः? वीरसिंहोऽपि न लभ्यते। क नु खल्वयं विलोमोऽस्तीत्यपि न विद्मो वयम्। प्रभो? किमिदमाकस्मिकं वृत्तम्?' इति चिन्ताचक्रमारूढोऽयं नृपचक्रवर्ती समीपवर्तिन्यां [1]स्फाटिकोपवेशनिकायामुपविष्टवान्। अत्रान्तरे केनचिद् [2]भटेनोपगम्य प्रणम्य च सविनयम्- 'प्रभो! श्रीमानमात्यवर्योऽत्र [3]भवन्तं दिदृक्षते' इति न्यवेदि। 'सत्वरं तमिह प्रवेशय'। इति प्राप्तप्रभुनिदेशश्चासौ शिरो नमयित्वा बहिर्निरगात्। क्षणानन्तरमुपतस्थे धराधिपमेनममात्यवर्यः। दृष्ट्वैवामात्यं पृष्टवान् राष्ट्रपतिः- 'वीरसिंह? किमानीता कुमुदिनी भवता' इति।

वीरसिंहः। देव! प्रतिवनम्, प्रतिकन्दरम्, प्रतिनिकुञ्जमहं राजकुमारीममार्गयम्; तदपि न लब्धा राजकुमारी। योऽखिलापि रात्रिस्तस्याः पर्यन्वेषण एवास्माभिरत्यवाहि; तदपि न प्राप्ता तस्याः प्रवृत्तिरपि।

महाराजः। किं तदा निष्फलमजनि युष्माकमन्वेषणम्? हा? किमिदानीं करोमि? हा हन्त! किं पुनर्न लप्स्यते मे वत्सा हृदयानन्दिनी कुमुदिनी?।

वीरसिंहः। देव? अलं [4]शुचा? चिन्तां परित्यज्य चेतसि शान्तिमाकलयतु प्रभुः। चतुर्दिक्षु मया बहवः [5]सादिनः प्रधाविताः सन्ति, निश्चितमेव ते कामप्याशाजननीं प्रवृत्तिमुपहरिष्यन्ति-इति प्रत्येमि।

महाराजः। कथं न्वहं शान्तिमाकलयामि? कस्य नु रक्षायां भवेन्मे वत्सा? अयि प्राणाधिकवत्सले वत्से? क नु भवेस्त्वम्? हा! कियती विपत्तिस्त्वयि पतिता स्यात्?

एवं शोचन्महाराजो मूर्च्छितोऽभवत्। सद्य एव प्रधानवर्यः प्रतीहारमाहूय तमैलेयमलमानेतुमादिष्टवान्। क्षणादेवासौ सुगन्धिपानीयमानीय समुपस्थितः। आदाय तत्सुरभिमिश्रितं मन्त्रिवर्यो नरेन्द्रवदनारविन्दोपरि न्यषिञ्चत्। ततः क्षणेनैव महाराजोऽपगतमूर्च्छो भूत्वा पुनर्विलपितुं प्रारभत।

वीरसिंहः। राजेन्द्र! समाश्वसिहि समाश्वसिहि।

महाराजः। वीरसिंह! न लप्स्यते किं नु मे वत्सा कुमुदिनी?

वीरसिंहः। लप्स्यते सा भगवन्! परं धैर्यं धारयतु धरणीन्द्रः।

महाराजः। कदा लप्स्यते? अमात्यवर्य! कदा लप्स्यते मम वत्सा? हन्त। क नु विचरति सा विपद्दुहिता मे?।

इत्यनतिवेलं विलपति नरेन्द्रे प्रतीहारः समुपगम्य- 'देव! उपस्थिता तत्रभवती कुमुदिनी।' इति [6]हर्षपीयूषवर्षिणीं गिरमुदीरयत्।

'किं किम्!! वत्सा कुमुदिनी! क्वाऽस्ति सा?' इत्युदीर्य यावन्महाराज उत्तिष्ठति तावदेव राजकुमारी कुमुदिनी तत्र प्रविश्य पितरं ननाम। 'वत्से! आयाता किमु त्वम्!' इत्यभिधाय महाराजस्तस्याः शिरः परामृशन् क्रोडगतां पृष्टवान्- 'वत्से!

१ स्फटिकमयमासनम्। २ भटेन। ३ पूज्यम्। ४ शोकेन। ५ अश्वारोहाः ६ पीयूषममृतम्।

किन्ते जातम् ? क्व गताऽऽसीः ? को नु नराधमस्त्वामपहृतवान् ? वीरसिंहोऽयं त्वदन्वेषणार्थमरण्यादरण्यमटित्वा साम्प्रतमेव निवृत्तोऽस्ति । तवैवाभिधानं मम रसनाग्र आसीदिदानीम् । त्वयेहाऽऽगन्तुं कथमपारि ? इति सकलं मे विशकलय्य निवेदय ' इति ।

कुमुदिन्या आगमनं निशम्य राजमहिषी प्रभावती तत्र प्रधाव्यागतवती । वक्षसा चेमां गाढमुपपीड्य तस्याः कुशलं पृष्टवती । दासीभिर्दासैश्चाद. पर्यपूर्यत स्थलम् । अथ सर्वान् यथोचितादरं संभाव्य कुमुदिनी पितरं व्यजिज्ञपत्- ' तात ! रक्षको मम कोऽपि योगिराजो बहिस्तिष्ठति तमाकारयतु भवान् । स मे सकलमितिवृत्तं भवते श्रावयिष्यति ' इति ।
इत्थं कुमुदिनीवचनं निशम्य महाराजो द्वाराभिमुखं गन्तुं प्रवृत्तवान्ः महाराजं गच्छन्तं निवार्य कथितममात्यवर्येण- ' प्रभो ! नार्हति प्रभुः परिश्रममङ्गीकर्तुम् । दास एवाऽयं क्षेमरकस्तं योगिराजं सादरमिह समानेष्यति ' इति ।

महाराजस्तु- ' नैवम् । मदीयवत्सायाः रक्षितारं महानुभावमहमेव स्वयं गत्वा सत्कृत्येह समानेष्यामि । भवतु नाम कुलीनोऽकुलीनो वायम् । ' इति व्याहृत्य द्वारदेशमुपगम्य तत्र स्थितं योगिराजमभिवाद्याञ्चके ।

योगिराजोऽपि- ' स्वस्ति श्रीमते महामहिमशालिने महीश्वराय । ' इत्याशीर्वचसा महाराजं संभावितवान् । अथ- ' महानुभाव ! सानुग्रह भगवता निजचरणपङ्कजसम्पर्केण पवित्रीक्रियतां मदीयप्रासादाभ्यन्तरभूमि ' रिति साञ्जलिर्न्यवेदयन्महाराजो योगिराजम् ।

' यदभिलषति राजेन्द्र ' इति निगद्य योगिराजो महाराजेन साकं प्रासादान्तर्भुवं गतवान् । अमुमवलोक्य तत्रत्यो निखिलोऽपि जनः साभ्युत्थानं प्रणनाम । अनन्तरं नरेन्द्रो योगिराजं सह निमाय नित्यनियमसम्पादनाय ।

अस्ति प्रभातसमयः । चन्द्रवतीतरल[2]तरङ्गवारि[3]सम्पर्केण शीतलः, [4]उन्मीलन्नवरुचिरमालतीकुसुमकलापरजोभिः सुरभिः समीरो मन्दमन्दं वहति । [5]भगवानम्बरमणिरुदयाचलचलावनतुङ्गशृङ्गसिंहासनादुत्थायाधुना चराचरस्य जगतो दशां निरीक्षितुमिवांशु[6]रथमारुह्योपर्युपरि गगनं प्रतिष्ठते । मनस्विनो मुनिवरा ब्रह्मविदो ब्राह्मणाश्च संध्यावन्दनादिनित्यकृत्यसम्पादनाय चन्द्रवतीतीरमभिगच्छन्ति । समयेऽस्मिन्महाराजश्रीविजयसिंहः स्वीयं नैत्यिकं विधिं समाप्य प्रासादस्यैकस्मिन् विशालमहालये [7]उपबर्हमेकमाश्रित्य कनककुसुमविचित्रतामेकां [8]सुन्दरतूलिकामाधिष्ठित आसीत् । तदानन्तरममात्यवर्यो वीरसिंहः सेनापतिरजयसिंहश्चोभौ प्रविश्य प्रणम्य च महाराजं निजनिजासनमधितस्थिवांसौ । अनन्तरं निर्वर्तितनिखिलनित्यनियमो योगिराजोऽपि तत्रोपसृत्य राष्ट्रपतिनिर्दिष्टा[9]'दारदगण्डिकाड'[10]विष्टरे समुपविष्टवान् । अत्रान्तरे राजकन्या कुमुदिन्यपि पितुः समीपे समासीनं मानमलङ्कृतवती । अथ शान्तिभङ्गं विधाय महाराजः— ' वत्से ! कथयाधुनाऽऽत्मचरितम् ' इत्यवादीत् ।

कुमुदिनी । तात ? तदानीमहं गतचेतनाऽभूवमिति मदपेक्षयाऽधिकमयं योगिराजो भवन्तं श्रावयितुं [1]पारयिष्यति ।

महाराजः । ( सविनय योगिराजं प्रति । ) भगवन् ? न चेत्काचिद्बाधा चित्तदाऽत्रभवानखिलमस्या वृत्तं मे निवेदयिष्यतीत्यहमाशासे ।

योगिराज. । तदखिलं वृत्तं मत्तः श्रोतुं श्रीमतां मनीषितञ्चेत्तत्कथने मम काचनाऽपि हानिः । ततः श्रूयताम्– 'आसीद् यातैकयामा [2]यामिनी । सर्वतोऽरण्यनिकुञ्जेषु गाढं संतमसम् । समयेऽस्मिन्नहमेकस्मिन् वने व्यचरम् । मार्गभ्रष्टश्चाहं मार्गमन्वेष्टुं व्यचेष्टे । अत्रान्तर एवैकं दीनतामयं चीत्कृतमहमशृणवमस्या बालिकायाः । चीत्कृतश्रवणसमकालमेवाऽहं तां दिशमभिद्रुत्य समपश्यमेतस्या उपरि बलात्कारं कुर्वतश्चोरान् पुरुषान् । तेषामन्यतमस्तत्परिवृढोऽस्या उपरि बलात्कारं कर्तुं यावत्प्रवर्तते, तावदहमपि स्वस्थानाद्विचलितो निजभुशुण्डिकयाऽवधिषं तेषां द्वौ पुरुषौ । साम्प्रतमवशिष्टः केवलं तेषामधीश्वरः । चन्द्रहासं निष्कास्याऽसौ मामभ्यधावत् । यावन्मदुपरि स्वकृपाणं चालयति तावदेव झटिति निष्कम्य कोषान्मम [3]मण्डलाग्रो दुरात्मनस्तस्य करवालेन संघट्टितोऽभूत् । मदीयखड्गप्रत्याघातेन तदीयकृपाणस्तत्कराच्च्युत्य महीतलं चुचुम्ब । निःशस्त्रमात्मानं निरीक्ष्यायं नराधमो निजप्राणरक्षणाय कान्दिशीको दिशो भेजे । पलायिते तस्मिन्नहमेनां राजकुमारीं सान्त्वयित्वा 'सुशीले ? केत्रयोऽमी पुरुषा अभूवन् ? कस्य त्वं दुहिताऽसि ? किमर्थञ्चात्र महाभयङ्करे महारण्ये जातं तवागमनम् ? ' इत्यपृच्छम् । इयञ्चाखिलं वृत्तं मे निवेदितवती । अनन्तरं गृहीत्वैनां कथं कथमपि मार्गमन्विष्याहमत्रभवतां सम्मुखे समुपस्थितोऽस्मि । '

महाराजः । ( सक्रोधम् । ) वत्से कुमुदिनि ? केऽमी दुरात्मानोऽभवन् ? ।

कुमुदिनी । ( नम्रस्वरेण । ) तात ? नासँस्तेऽन्ये केचन किन्तु भवतामेव सेनापतिः कलुषात्माऽसौ क्रूरसिंहः, तत्सहचरौ च तौ मानसिंहाभयसिंहौ ।

महाराजः । ( साश्चर्यम् । ) आः ? तस्य पुरुषापसदस्यैतावद् विचेष्टितं किमु ? अये ? विदितं खलु मयेदानीमेव तदीयं कपटाचरणम् । ननु लब्धं मया फलं [4]भुजङ्गमपयःपानस्य । हन्त ? कुत्राऽहं तं क्षत्रियापसदमासाद्य संचूर्णयेयम् ? भवतु । कुतोऽपि नाम तमहं वेत्स्यामि; रसयिष्यामि चामुं निजदुरितकर्मणां तीव्रं फलमपि । न जानीते खलु वराकोऽसौ–' मदसि [5]भुजङ्गिनीविलीढः कां नु दुर्गतिं गमिष्यतीति । '

सावेशमित्यमुदीर्य महाराजो योगिराजाभिमुखीभूय निजगाद– 'योगिराज ? अत्रभवतां साहसं निरीक्ष्याहमतितरां प्रसीदामि । महावीरोचितं कृतमिदं कृत्यं भवता । ' इति ।

योगिराजः । राजेन्द्र ! नात्र किमपि मया महत् कार्यं व्यधायि । स्वकर्तव्यपालनमेव केवलं विहितं मया ।

महाराज । धन्योऽसि-योगिराज ? क्षन्तव्योऽयमविनय । किमपि रहस्यं लक्ष्यते मयाऽत्रभवति । नूनं योगिराजो भवानिति नाङ्गीकरोति मे मनः । ये. संसार. परित्यक्तस्तैः

---

१ शक्ष्यति । २ रात्रिः । ३ खड्गः । ४ भुजङ्गमः सर्पः । ५ असिभुजङ्गिनी–खड्गसर्पिणी ।

कथ नु शक्य म्रियेत ? योगिनाऽपि भूत्वा श्रीमता किमिति शस्त्र गृह्यते ? अतो भवान् निज वास्तविक वृत्त निवेदयिष्यति यदि महानुपकारो भविता तर्हि ममोपरि श्रीमताम् ।

योगिराजः । ( क्षण विमृश्य ) तथ्यमस्ति राजेन्द्र ? नास्म्यह योगी वस्तुत । साम्प्रतमह कश्चिद् राज्यभ्रष्टो राजकुमारोऽस्मि ।

महाराज । ( सविस्मयम् । ) किम् ? राजकुमारो भवान् ?

योगिराज । आम्, राजन् ? राजकुमार एवास्मि । परमिदानीं तु योगिना भूयते मया ।

महाराज । वरम् । कस्य राजकुमारो भवान् । क्वास्ति भवतो राज्यम् ? कश्च भवन्त राज्यादभ्रंशयत् ? किं कश्चन सपत्न आसीद् भवत ? आसीच्चेत्तेन कथ राज्यमपहृत श्रीमत ? सत्य ब्रवीतु राजकुमारः । यथासम्भवमहं भवत सहायतां विधाय समुन्मूल यिष्यामि भवत्प्रत्यर्थिन ।

योगिराजः । राजेन्द्र ? श्रीमता वचन निशम्यानन्दितोऽस्म्यतितराम्, पर सम्प्रति स्व परिचयं दातुं भवते न पारयामीति खिन्नोऽस्मि नितराम् । अस्येदमेव कारण यदधुनैवाक स्मादीदृशाः प्रसङ्गा परिपतिता सन्ति मयि येन निजजीवनचरित्रचित्रस्य गोपनमेव मे बहुश्रेयस्करम् । श्रीमता[1]मतिनिर्बन्धश्चेदष्टदिनानन्तरमहमखिलमात्मवृत्तमावेदयिष्यामि भवते । यदा मां पूर्णतया परिचेष्यति श्रीमान्, तदा तु सुतरामाश्चर्यमहासागरे निमङ्क्ष्यति भवान् । क्षम्यतामिदानीन्तु ।

महाराज । वरम् । ईदृशश्चेदभिलाषो भवतो नाह शक्नोमि प्रष्टुमधिक भवन्तम् किं तु मदीयमेतावद् वचन तु स्वीक्रियेत भवतेत्यहमाशासे ।

योगिराजः । शिरसा वक्ष्यामि श्रीमतामादेशस्रजम्[2] ।

महाराजः । मदीयराजनगरे स्थित्वा भवता स्वच्छन्दमशनपानादिभिरानन्दनीयम् ।

योगिराज । किमिद भूत राजेन्द्र । क्षत्रियपुत्रै कथमानन्दविलासोपभोगो विधेय ? राजपुत्रैस्तु गोब्राह्मणान् प्रतिपाल्य प्रतिद्वन्द्विनश्च निपात्य निजयशो दिगन्तगामि विधातु-मभिलषणीयम् । यः स्वप्रजा न पालयति न स राजपदवाच्य, अपितु पिशाच एवासौ । यदाह निजपितुराहृत राज्य पुन सम्पादयिष्यामि, रिपूणां रुधिरैरात्मकरौ रञ्जयिष्यामि, यदा चाहं निजाभिलषित वस्तु प्राप्स्यामि तदैवात्मानमानन्दयिष्यामि । सम्प्रति हि वैरशुद्धिं विना नान्यन्मम किमपि कर्तव्यम् ! ।

महाराजः । धन्योऽसि [3]राजन्यकुमार ? धन्योऽसि । प्रशसनीय तव वीर्यम् । निशम्य तव वचांसि प्रमुदितोऽस्मि नितरामहम् । राजकुमार ? प्रधानसेनापतिपदमर्पयामि तुभ्यमहं निजराज्ये ।

योगिराज । [4]अद्यप्रभृत्योऽस्यजेन महाराजधौरेयेण ।

महाराजस्तु– 'भवता मम रक्षणाय यदैव इच्छा स्यात्तदैव तत् । विशेषत प्रासाद एव भवताप्युषितव्यम्' इति सराहनावाक्यान्यागृह्य प्राविशत् ।

१ निर्बन्ध –आग्रहः । २ स्रक्–माला । ३ राज्ञ व क्षत्रियः । ४ अद्यप्रभृति–अद्य तम् ।

अथाऽत्र तस्मिन् योगिराजोऽपि विजयनगरमवलोकयितुकामो यावदुत्तिष्ठति तावदेव कुमुदिनी तदन्तिकमुपगम्य प्रणम्य च सादरमालपत्– 'राजकुमार ! अद्यैव भवन्तं योगिराजपदेन सम्बोधयिष्यामि । श्रीमतामिह स्थितिरमुदिति परमानन्दसमुद्रे निमग्नाऽस्मि । पूर्वमेवाहम- कथयं मदीयकथनमङ्गीकरणीयमेवेति ।

योगिराजः । (सस्मितम् ।) कोऽसौ मन्दभागधेयो नाङ्गीकुर्याच्छ्रीमत्याः कथनम् ? विलक्षणा ते माया ? मधुरमधुरमालप्यान्ते [1]निगडित एवाऽस्मि । सफलितमन्ते त्वदीयमे- वाभिलषितम् ! अये ! अनुजानीहि माम् । अनुष्ठेयमावश्यकर्तव्यं मयेदानीम् ।" इत्यभि- धाय गन्तुमारेभे योगिराजः । अथान्तं तमवरुध्य प्रोवाच कुमुदिनी– 'योगिराज ? स्थीय- ताम् । विरम्यतां क्षणम् । दर्शयामि श्रीमन्तमहं स्वप्राणप्रियचन्द्रस्य चित्रगतां मूर्तिम् ।' इति प्रोच्य झटिति प्रासादान्तर्गृहमभिगम्य क्षणेनैव हस्ते चित्रमादायोपस्थितवतीयम् । योगिराजहस्ते समर्प्य चेदं चित्रमभाषतैषा–'पश्य योगिराज ? पश्य । अयमेव मे प्रियतमः । असावेव मम प्राणेश्वरः । कियती मनोहारिणी मूर्तिरमुष्य ? अधुनैव विवक्षतीव ननु ? परमयमविग्रहः खलु ! मायाविनी चास्याक्षिणी ' इति ।

क्षणं निरीक्ष्यामूं चित्रगतां मूर्तिमसौ योगिराजो मनस्येव– ' अहह ? कुमुदिनि ? मामेव चिन्तयसि निरन्तरम् । नन्वहमेवैकाकी दु खीति विभावितवान् किन्तु नैव ! कुमुदिनि ? त्वमपि दु खिन्यसि । हा ! इदानीमेवाहं त्वां सुखयितुं शक्नोमि, परमनवसरोऽयमात्मान प्रकाशयितुम् । ' इति समालप्य विमृश्य च पुनस्तच्चित्रं कुमुदिन्यै समर्पयन्नवादीत्– ' अतिरमणीया खलु मूर्तिरियम् ' इति ।

वाचकमहोदयाः ! विदितमेव स्यादत्रभवताम्– ' कोऽयं योगिराज इति । ' स एवा- यमजितदुर्गनाम्नो राजनगरस्य यौवराज्येऽभिषिक्त कुमुदिनीवल्लभो निजानुचरणधीरस्यान्वे- षणाय निर्गतो राजकुमारश्चन्द्रसिंहः ।

योगिराज. । कुमुदिनी ! अनेनैव पुरुषेण साकं तव पाणिग्रहणमङ्गलं सम्पत्स्यते ।

कुमुदिनी । किम् ? किं ब्रवीति योगिराज ? अपि लप्स्यते मम चन्द्रः ! अपि फलि- ष्यति मनोरथतरुरयमस्या निरालम्बबालिकायाः ?

योगिराजः । आम् । फलिष्यति । प्रतिजानेऽहम्–' कुमुदिनि ! यत्किमप्यहिलानन्तरमहं तव चन्द्रं गृहीत्वा त्वदुपकण्ठमुपस्थापयिष्यामि; किन्तु पुनरयं गतश्चेन्न मे दोषः ! ।

कुमुदिनी । कथं गच्छति पुनः ! अये [2] तन्नु तादृग्ङ निगडयिष्यामि यथासौ गमन- वार्तामपि न कुर्यात् ? [1]लक्ष्मीपकण्ठगता दर्पशालिनोऽपि पुरुषा नम्रीभवन्ति ।

योगिराजः । ( स्वगतम् । ) नूनम् । नास्ति चन्द्रस्य शक्तिर्यदसौ त्वदन्तिकाधिःसृतो भवेत् ? । ( प्रकाशम् । ) अये ! प्रतारयं तव चातुर्यम् । कुमुदिनि ? त्वयाऽप्यहं बन्धितो ननु ? ।

कुमुदिनी । किमत्र वक्तव्यं नाम ? मया तु सहस्रमेवोदीरितम्– ' चन्द्रो मे यदि लभ्येत

---

[1] निबद्धः । [2] प्रा ।

नैवासौ पुनर्मत्तो वियुक्तो भविता तदेति ’। किमत्र मयाऽनृतमवोचि ?।

योगिराज । तथ्यमासि बाले ? सत्यं तवोदितम्। अप्यनुमन्यसे मां गन्तुमधुना ?

कुमुदिनी। बाम्। सुखं गम्यतां पुनर्दर्शनायाज्ञसा। योगिराज ? किमिव वच्मि ? भवन्तं विलोक्यैव मम चन्द्रोऽयं स्मरणसरणिमुपतिष्ठते। नूनं भवन्मुखारविन्दमिव सुन्दरं मदीयचन्द्रस्य ललितस्मितं वदनाम्बुजं राजते। योगिराजस्तु– ‘ बाले ? भ्रान्ताऽसि खलु त्वम् ? ’ इत्यभिधाय सन्ध्यावन्दनादिनित्यकर्मसम्पादनाय ततो निर्गतवान्।

अथ नित्यकर्मणो निवृत्य भोजनं विधाय काषायवासांस्यपहाय परिधाय सुन्दरराजोचितवस्त्राणि सत्स्वेऽपि सायसमये पर्यटितुमयं विजयनगरे निर्ययौ। अथ शान्तिमयेऽस्मिन्समये विजयनगरे प्रादुरासीत्[1] नक्षत्रमालालङ्कृता प्रफुल्लकुमुदनेत्रा सुन्दरचन्द्रिकाधवला[2] म्बरधारिणी मनोहारिणी चन्द्रमुखी निशादेवी। ईदृशे रमणीये समये चन्द्रसिंहो दुर्गाद्बहिर्निरगात्। सहसैव चास्य मुखात्– ‘ कीदृशी निष्कलङ्का पवित्रबालिका। ’ इति शब्दा निर्गताः। कुमुदिनीविचारे निमग्नमासीन्मनः सम्प्रति चन्द्रस्य। निष्क्रम्य दुर्गादयं सान्द्रारण्यं प्रविश्य चन्द्रमसः प्रकाशे कमनीयकाननरात्रिशोभामवलोकयामास। दुर्गात्क्रोशद्वयमितमन्तरालमतिक्रम्याऽयं महतीमेकां शिलामालोक्य तदुपर्युपाविशत्। अथ परितो विलोकयन्नयमगादीत्– ‘ अहो ? कियत्सौन्दर्यं विभावर्याः ? कियती मनोहारिणीयं दृश्यते चान्द्रिकामयी यामिनी ? प्रभो ? विचित्रा तव लीला। अहह। प्राणिमात्रा इदानीं सुखेन निद्रापारवश्यं सम्प्राप्ताः सर्वेऽपि ? किन्त्विदं मदीयं मन्दभाग्यं हृदयं न बिभर्ति शान्तिम्। हन्त। यावन्न लभ्यतेऽसौ प्रियबन्धुर्न तावदिदं [3] स्वान्तं शान्तं भवितृ। अपि पवित्रदिव्यशरीरिणि कुमुदिनि ? त्वत्सम्बन्धेऽपि किमपि चिन्तयेयम् ? अहह [4] अहं चन्द्रसिंहोऽस्मीति यदि त्वां कथयेयं कियान् महानानन्दस्ते जनिता ? ( विचिन्त्य। ) प्रिये कुमुदिनि ? मदर्थं दिवापि खिद्यसि, ताम्यसि, खिद्यसे तप्यसे च। परं पाषाणहृदयोऽयं तव चन्द्रः सन्निहितः सन्नपि नात्महृदयमार्द्रयति।( विमृश्य। ) प्रिये ? मा शोचीः। सुखयिष्यामि त्वामहम्। त्वत्पीडयितुः क्रूरसिंहस्य यदाऽयं वक्षःस्थलं विदारयिष्यति तदानीमेवायं तव चन्द्रः शान्तिमन्तः करिष्यति।

अथ चन्द्रसिंहः कोपेन समुत्थाय– ‘परं स नराधमः क्व गत इति न विज्ञायते। दुरात्मन् ? भवन्तमन्तर्हितो जगतः किं त्वहं त्वां गवेषयित्वा सद्य एव यमराजनगरातिथीकरिष्यामि।’ इति प्रोच्य क्रुधान्धेन वामेन पदा पार्ष्णिप्रहारम्। चरणप्रहारसमकालमेवास्योपवेशनशिलाऽकस्मात्पुस्फुटन्ती दूरतः स्खलिता। एतद्दृष्ट्वैव चकितोऽभवच्चन्द्रः। अत्र किमपि रहस्यमस्तीति विस्मयं भीषणानन्दाय निपुणं निभालयितुमारभत। नालभतासौ किमपि विद्वान्। मुहूर्तं यावद्यामितस्ततो गम्भीरे निविष्टः भूमौ करं परिचालयन्नपि [5] आविष्टः

१ नक्षत्राण्येव मुक्ताविरचिता हारः। २ अम्बरं गगनं वस्त्रमपि। ३ ‘ इत दूर्वे-सुन्दरी चन्द्रकलाऽभिवादये ’। ४ ‘ हन्त हृदयानन्द मम ’। ५ आसनम्।

किमपि । अथ निराशः सन्नेव ऊचे– ' किं तावदस्य कारणम् ? गवेषणीयमेव मयाऽस्य रहस्यम् ? ' इति निश्चित्य शिलासमीपमुपसृत्य सूक्ष्मदृशा तां निरैक्षिष्ट । मुहूर्तं यावदभितो विलोकमानस्तस्यां शिलायां लग्नमेकं लोहकीलकमद्राक्षीत् । कस्यास्य सम्बन्धः शिलया सहेति परीक्षितुकाम एव कीलकमपोदयत् । कीलकयन्त्रपोदनक्षणमेवाऽजनि महाभयङ्करो निःस्वनः । यदाकर्ण्य चमचकार चन्द्रः । [1]निहादेन सार्धमेवैकहस्तमितोच्छ्रायमुत्थितेयं महती शिला ।

अतिमहतीमिमां शिलां निरवलम्बामवलोक्य विस्मयमहाम्बुधौ निममज्ज चन्द्रः । अथाऽयं ददर्श तस्या अधस्तादेकमा[2]रोहणम् । [3]दृषन्मयी चास्य सोपानपरम्परा । ततोऽमुना सोपानैरवतर्तुमारेभे । यथैवानेन पञ्चदशे सोपाने पदं निदधे तथैव घोरशब्दपुरस्सरं सा [4]निरवलम्बा शिला पुनर्निजस्थानं प्रपेदे । पिदधे चामुया कन्दराया द्वारम् । यावन्निरालम्बाऽभूदियं शिला तावच्चन्द्रसमीपं कन्दरा प्रभासिताऽभवत्परमिदानीं दरीद्वारोपरोधेनाभ्यन्तरे संतमसं संवृत्तम् । तथापि धैर्यं धारयन् धीरधौरेयोऽयं धरेन्द्रकुमारः सोपानैः पुनरवतर्तुमारभत । शतं सोपानान्यवतीर्य– ' सम्पूर्णमारोहणमवतीर्णवानहमिति ' निश्चितवानसौ । अथान्धकारे करं चालयतोऽस्य हस्तः पाषाणभित्तिकया स्पृष्टः । तदाश्रयेणैवायमग्रे प्रचलितः । स्तोकमन्तरं गतस्याऽस्य हस्तो दारुरचितकपाटे लग्नः । बलेनासौ [5]तदररमाजघ्ने । परं नापावृतमिदम् । अनन्तरमेष यावद्बलं द्वाभ्यां कराभ्यां कपाटमुद्घाटयितुं प्रायतिष्ट । नापावृतं तदापि । अतोऽयमतिनिराशः सञ्जितस्ततः करौ चालयामास । पाणिं परिचालयतोऽस्य करे द्वारसमीप एव प्रतिष्ठापिता काष्ठपुत्रिका लग्ना । आनन्द्य चन्द्रस्तां परीक्षमाणोऽपि न ज्ञातवान् किमपि । ततः परमखिन्नोऽसौ– ' अयि प्रभो ! किं करणीयमधुना ? ' इति समुदीर्य मलिनमुखः संत्रस्य तस्याः पुत्तलिकायाः शिरसि हस्तं निधाय समुपाविष्टत । पाणिसम्पर्कणमकालमेव सा काष्ठपुत्रिका वर्तुलमभ्रमीत् । तत्क्षणमेवापावृतं द्वारम् । साश्चर्यः सपदि चन्द्रो धैर्येण द्वारं प्रविष्टवान् । प्रवेशानन्तरमेव पुनर्द्वारं [6]संवृतमभूत् । अथायमग्रे गच्छता चन्द्रसिंहेनाभ्यन्तरे चन्द्रमसः प्रकाशो दृष्टः । ' कुतोऽयमिह चन्द्रप्रकाशः ? ' इति वितर्कयांश्च परीक्षाञ्चक्रे । ऊर्ध्वं विलोकयताऽप्यमुना नालोकितो रजनीवल्लभः । ' कस्यायं प्रकाशस्तावत् ! ' इति चिन्तयन्नसौ सावहितः समग्रे प्रचलितः । प्रकाशं गच्छत एव तस्य नेत्रगोचरमयासीदुपलनिर्मितं मन्दिरमेकम् । वर्तुलपटमण्डपाकारं [7]विडम्बयति स्म नव्यस्य [8]कृतिः । परितोऽस्य पाषाणमयी भित्तिः । अभूत्तस्या एकमेकमेवागुरु द्वारम् । नासीदत्र कस्यापि जनस्य निवासोचितं स्थलं । किमपि महाघोरं रूपमाचरितुमनुरूपमिदं मन्दिरम् । तिष्ठन्नेव चन्द्रो यावत्किंचिद्विचिन्तयति तावदेव सद्यु चमत्कृतोऽसौ । यतोऽयं स्थितोऽभूत्ततो हस्तद्वयं पश्चादपसृत्य सपदि निजचन्द्रहासं कोशाद् बहिराचकर्ष । तस्य मन्दिरस्य मध्यभागे काचनाकृतिर्दृष्टोऽमुनेत्येव सहसैवं चमत्कार्यी-

१ रवेण । २ ' आरोहणं स्वर्गसोपानम् ' । ३ पाषाणनिर्मिता । ४ निराधारा । ५ अररं कपाटम् । ६ मुद्रितम् । ७ अनुकरोति स्म । ८ रचना ।

चन्द्रसिंह । परं चन्द्रप्रकाशे सूक्ष्मदृशा निरीक्षयानेन–' शिलेयमाकृति ' रिति[1]प्रथमं ज्ञायि । ततः करवालं कोषगतं विधाय स्वयं तस्या आकृतेरभ्यर्णं ययौ। समीपं[1]यतोऽनेन ' इयं कस्याश्चन देव्या आकृतिरिति ' विजज्ञे । अथ पर्यैक्षिष्ट तां मूर्तिमभितः । आसीदियं काष्ठमयी मूर्तिः । पाणिना परामृशताऽमुना परितः प्रच्छन्नमेकं यन्त्रकीलकमाधिगतम् । तद्विवर्णयं नितरामाश्चर्यित एव तत्कीलकमुदपीडयाम्बभूव । तत्क्षणमेव युगपदपावृतमररयुगलमिवैनस्या मूर्तेर्द्वे[2]शकले अभूताम् । सान्तरालेयमासीदभ्यन्तरे । चन्द्रस्तु– ' किं प्रयोजनमस्या भवेत् ? केनेयमत्र प्रतिष्ठापिता स्यात् ? अथ कोऽप्येनामर्चयति न वा ? ' इति विचिन्तयन्नपि नावागमत् किमपि तत्त्वम् । ततोऽयं तां काष्ठप्रतिमां यन्त्रकीलकेन यथापूर्वमसमुद्रत् । आसीदेकं समचतुष्कोणं प्रतिमाग्रतः कुण्डम् । इत्थमखिलमभिवीक्ष्य चन्द्रसिंहस्तु मन्दिराद् बहिर्निष्क्रम्य समुपाजगाम च वरमेकमगुरुं । 'किमर्थमिदमखिलमिह गुप्तकन्दरे विनिहितमिति विमृशन्नेव तत्र विश्रान्त्यर्थमुपविष्टवान् ।

अधुनाऽयं निषीदन्नेव यावद् विमृशति तावदेवैका मनुष्याकृतिं दूरतस्तदभिमुखं शनैः शनैरपसर्पन्तीं ददर्श । दृष्ट्वा चैनां चमच्चकार चन्द्रसिंह । रोमाञ्चितमभूदस्य वपु । भिया चायं चकम्पे । अहो आश्चर्यम् ! य एष भुशुण्डीशत[3]शतघ्नीनिर्ह्रादसहस्रेभ्योऽपि चञ्चच्चन्द्रहासप्रचारचालनेभ्योऽपि च न बिभीयात्सोऽधुना भयेन वेपते । अथ धैर्यमाधाय हृदि करे च करवालमाकलय्य–' आगच्छन्तीयमाकृतिः कुत्र प्रयाति ? किञ्चानुतिष्ठति ? ' इति विज्ञातुकाम एव ततोऽनतिदूरं वर्तमाने पाषाणोत्कृत्तदरीगृहे निलीय घटिष्यमाणां घटनामैक्षिष्ट । आगच्छन्तीयमाकृतिर्यत्र चन्द्रो न्यलीयत ततोऽभ्यर्णमेव विद्यमानायां शिलायां दीर्घं निःश्वसती निषण्णा । आसीत् कस्यचिद् बालकस्येयमाकृतिर्वयसा चतुर्दश मित्र वर्षं स्पृशन्ती । केन पुन्नामित्र वमति स्म चास्य वदनबिम्बम् । आकृत्या[4]राजवंश्य एव विभाव्यते स्म । सुन्दरस्यास्य बालस्य करचरणं लोहशृङ्खलया नियन्त्रितमभवत् ।

गुहागृहनिलीनश्चन्द्रस्तु– ' ईदृशो बालः केन[5]नियन्त्रितः स्यात् ? अण्वपि नान्वकम्पि किमु तेन ? ' इति विचिन्तयन्नास्त ।

क्षणानन्तरमयं बालः – ' हा प्रभो ? अद्यैव विलीयेत किमु मम जीवनलीला ? किम वश्यं विधातैव मदीयबलिदानमयं नृशंस ? अहह ! कथं नु सहिष्यते मयेदं कष्टम् ! रे चाण्डाल नृसिंह ? मादृशो बालकस्य कण्ठे[6]निस्त्रिंशं निपातयतस्ते करुणा नैव जनिता किमु ? किमन्ते त्वं मां निहन्तैव ? अहह ! निजप्राणत्राणार्थं कियत्करुणामयमहं त्वां प्रार्थितवान्, परं त्वदीयं वज्रमयं हृदयं नैव द्रवीभूतम् ? प्रत्युत तिरस्कृतवानसि माम् । हन्त ! ! क्षणिकमेव जीवनमधुना । मरणीयमेव मयाऽन्ततः ' इति वदन्नेव रुरोद ।

---

१ गत्वता । २ शकल खण्डम् । ३ ' तोप ' इति भाषा । ४ राजवंशी । ५. निबद्धः । ६ खड्गेन तु विश्रितचन्द्रहासारिष्टिव ' ।

ततश्चन्द्रसिंहोऽमुष्य बालकस्येदं करुणाजनकं भाषणं निशम्य स्तब्धीभूय मनसि विचिन्तयामास- ' नियतमेव नृशंसस्य तस्य वसतिरिहैव भविता ? स एव दुरात्मा निरासं बालमेनं देव्या बालिं रचयितुमानीतवानिति शङ्के। रे नृशंसहतक क्रूरसिंह ? नायं मनोरथस्ते फलिता ? रक्षिष्याम्यहं निराश्रितं बालमेनम् ' इति।

पुनरसौ बालकोऽभ्यधात्- ' नैव नैव ! तस्य पापस्य हस्तेन तु न मारणीयम्। किं करोमि ? शस्त्रमपि न विद्यते मदन्तिके; अन्यथा प्रादर्शयिष्यं स्वक्षत्रियत्वममुं नृशंसम्। हन्त ! विवशोऽस्मि, निराश्रयोऽस्मि। ऋते देवदेवाद् दयालोर्नाहित कोऽपि मे सहायकः। अये ! संदानितोऽस्मि साम्प्रतमायसशृङ्खलाभि। तदनीशोऽस्मि निजात्मघातायापि। (विचिन्त्य।) तद्देहि। तस्य दुराचारस्य हस्तान्मरणापेक्षया स्वमस्तकं शिलायामस्फाल्याहमामुष्माल्लोकाद्विमुक्तो भवामि। ' इति विचार्य मूर्द्धानमाहन्तुमुदस्थात्। यावदसौ शिलायां शिरो निपातयितुमुपचक्रमे तावदेव चन्द्रसिंहो गुहाया बहिर्निष्क्रम्य पृष्ठतोऽस्य करौ जग्राह, जगाद चैनम्-' कुमार ? नेदानीं ते मरणवेला ' इति।

कुमारः कम्पितस्वरेण सभयम्-- ' को नु श्रीमान् ? शत्रुमित्रमुतवामुष्य दुर्गतस्य बन्धु ' रिति पृष्टवान्। सान्त्वयन्नमुं चन्द्रसिंहः-- ' मा भैषीः। त्वदीयप्रार्थनां निशम्य परमेश्वरोऽयं तव रक्षणाय मां प्राहिणोत्। तन्न कुरु भयम्। नैवास्ति मम रक्षायां किमपि ते भयम्। दुरात्मनस्तस्य पाशादहं निश्चितं त्वां मोचयिष्यामि ' इत्याचचक्षे। एवं चन्द्रभाषणं निशम्यायं कुमारः स्वस्थीभूय दीनवदनः -- ' को नु खलु श्रीमान् ? ' इत्यन्वयुङ्क्त। चन्द्रसिंहस्तु - ' कथयिष्यामि त्वामहं, तदितो बहिर्निर्गम्य ' –इत्यभिधाय तस्य करचरणगतां शृङ्खलां शकलीकृत्यास्य करं गृहीत्वा प्रचचाल। प्रचलन्तमेनमवरुध्य कुमारः ' विरम्यतां क्षणम्। अग्रे महानन्धकारो वर्तते। पन्थाअपि नोपलभ्यते श्रीमता। तदिह स्थीयताम्। दीपकं प्रज्वाल्याहमिहानयामि ' इत्यवदत्। व्याकुलीभूय चन्द्रसिंहः ' कुमार ? ईदृशे भयङ्करस्थले कथं प्राप्येत दीपकः ? ' इति पृष्टवान्।

कुमारः। एतस्मिन् भयावहस्थले निवसतो मम पञ्चहायनानि व्यतीतानि इति सकलमप्यस्य वेद्मि वृत्तम्।

चन्द्रसिंहः। ( सविस्मयम्। ) हा किमत्र ते बन्दीकृतस्य पञ्च संवत्सरा अतीताः ?

कुमारस्तु- ' आम् ! श्रीमन् ? अत्र एवाहमस्य दरीगृहस्याभिज्ञातोऽस्मि। बहिर्निर्गत्यास्मा निश्चिन्तमनसाऽऽलपिष्यावः। यतोऽस्मावयोरुपरि कदा नु का विपत्तिरापतेदिति न विज्ञायते। तदावाभ्यामितोऽधुना यथासम्भवं शीघ्रमेव बहिर्गन्तव्यम् '। इति समुदीर्य सत्वरो द्रुतं गत्वा क्षणेनैकं प्रज्वलितदीपकमानीतवान्। दीपप्रकाशे ततोऽग्रतः प्रचलन्तावेतौ तस्यैव द्वारसवद्वारस्य समीपमागत्य स्थितौ। यतो द्वारं कथमुद्घाटनीयमिति नाजानाच्चन्द्रः। अन्तः प्रवेशसमये तु प्रविष्टवान्, परमिदानीं बहिः कथं निर्गन्तव्यमिति विचारयन्विस्मितो निभालयाञ्चकार। किन्तु नागतं तन्नयनगोचरं किमपि। आगमनकाले केवलं काष्ठपुत्रिका-

शिरसि हस्तं निक्षिपत एवामुष्य द्वारमपावृतमभूत् । परमिदानीं तत्कथमुद्घाटनीयमिति चिन्तापरवशोऽभूदसौ । चिन्तयन्तमेनं निरीक्ष्यायं बालोऽग्रे समुपेत्य--' न चिन्तनीयं श्रीमता । जानाम्यहं द्वारमपावरीतुम्; ' इत्यभिधाय निजकक्षगुटिकातोऽसिधेनुकां निःसार्य कुब्जीभूय कपाटरन्ध्रे रंहसा प्रावेशयत् । ईदृशमस्य बालस्याबालविक्रममवलोक्य मनसैव हर्षँश्चन्द्रसिंहः-- ' कुमार ? यादृशस्त्वं सुन्दरोऽसि तादृगेव पराक्रमशाल्यपि भवसि । हा ? त्वादृश एव विक्रमशाली निष्कलङ्को मम बन्धुर्नष्टः '। इति निगद्यायतं निरश्वसत् । एतस्मिन्नन्तरेऽसौ कुमारोऽपिधेनुकासाहाय्येन द्वारस्य यन्त्रकीलकमन्विष्य तरसा तदुपपीड्य तत्कालमेव द्वारमपावृणोत् । तमात्रेव ततो बहिर्निर्ययतु. । द्वारमद· पुनः पूर्ववत्संवृतमभूत् । अथेमौ तदेवारोहणमुपेयिवांसौ । ततश्चन्द्रसिंहो व्याजहार कुमारम्— ' भ्रातः ? आवामियदवधि तु निरन्तरायमायातौ; परमग्रे बहिर्निर्गमनमितोऽतिदुष्करं वर्तते । यतोऽस्य सोपानस्य शिरसि निहिताऽस्ति विशाला शिला; सा च ततः कथमपसारणीयेति नावगच्छाम्यहमिति । '

' तदप्यहं जानामि । पञ्चाशीतितमे सोपाने वर्तते एकाऽन्तर्हिता यन्त्रकीलिका । ' इति न्यवेदीत्कुमार । इदानीमेवाज्ञासीच्चन्द्रो यत्— ' नूनमस्मिन्नारोहणे शतं सोपानानि सन्ति । यदाहं पञ्चदशे सोपाने समागच्छं तदैव सा शिला द्वारं न्यरुणत् । अतस्तस्मिन्नेव पञ्चदशे सोपाने--इव आरोहता पञ्चाशीतितमे सोपाने-तया यन्त्रकीलिकया भाव्यम् ' । अथ सोपानानि गणयन्तावेतावारोहणमारुरुहतुः । यथैवेमौ निर्धारितं सोपानमुपपन्नौ तथैवासौ कुमारो यन्त्रकीलिकां विचित्य तां [1]रंहसा समपीपिडत् । उपपीडनक्षणमेव घोररवेण समं सा शिला समुच्छलन्ती समपतदेकत. । एतौ चोभौ सानन्दं बहिर्निर्जग्मतुः । अथेयं शिला पुनर्निजस्थलमलङ्कृतवती ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ ब्रह्मचर्यशतकसतीर्थ्ये कुमुदिनीचन्द्रे द्वितीया कला ॥ * ॥

---

# अथ तृतीया कला ।

" अपूरस्य प्रवाहे· किं कायक्षालनसंभवः ।
विराट् भागीरथ्यद्रो योऽसौ मूल्यविवर्जितः ।" ( पञ्चतन्त्रके )
" संतानवाहीन्यपि मानुषाणां दुःखानि सम्बन्धिवियोगजानि ।
दृष्टे जने [2]प्रेयसि दुःसहानि स्रोतःसहस्रैरिव [3]संप्लवन्ते ॥ " ( उत्तररामचरिते )

---

१ बन्धे । २ स्निग्धे । ३ महोर्मीभवन्ति ।

" मृगेषु मैत्री मुदिता मदष्टौ कृपा मुहुः प्राणिषु दुःखितेषु ।
येषां न ते कस्य भवन्ति वन्द्याः कौशेयकौपीनभृतो मुनीन्द्राः ॥ "

(नलचम्प्वाम्)

" सम्पत्तौ च विपत्तौ च महतामेकरूपता ।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ " (पञ्चतन्त्रके)

अथ चन्द्रसिंहो वीरकुमारमनुमितः सह नयन् कियन्मुहूर्त्तैरेव विजयनगरदुर्गमुपाजगाम। तदीयपक्षद्वारेणाभ्यन्तरं प्रविश्य प्रासादे स्वस्थानमायर्यौ। तत्रागम्यायं कुमारमेनं सत्कृत्य सुखासन्दिकामेकामासेदिवान्। अभ्यागतञ्च कुमारमात्मसम्मुखस्थापयामासन्यामुपवेश्य–'भ्रातः! किमभिधानं ते ? ' इत्यप्राक्षीत्। अस्मानपि– 'मां रणवीरं वदन्ति जना ' इत्युदवारीत्।

' एवं किमु ? ' इति व्याहृत्य चन्द्रसिंहो विस्मयाकुलेन चक्षुषा क्षणमेकमसुं निरीक्ष्य पृष्टवान्‌अयम्– ' कुमार ! किन्ते पितुर्नामधेयम् ? कश्च त्वमसि ? इति शीघ्रं मां निवेदय। मा स्म मामधिकं संशयगर्ते निक्षिप । ' इति ।

रणवीरः । ' रणवीर ' इत्यभिख्यातोऽस्मि मन्दभागधेयः । आसीत्– ' चन्द्रसिंह ' इति प्रख्यातो ममैको वीरवरो ज्येष्ठबन्धुः । अखिलभुवनप्रथितपराक्रमशोभिनो महामहिमशालिनोऽजितदुर्गाधीश्वरस्य महाराज शक्तिसिंहस्य कनीयान् पुत्रोऽस्म्यहम्।

चन्द्रसिंहः । ( सानन्दाश्चर्यम् ) प्रभो ! विलक्षणा तव लीला ! ! वत्स रणवीर ! एहि एहि । परिष्वजस्व माम्। तवैवाहं बन्धुश्चन्द्रसिंहोऽस्मि ।

रणवीरः । ( सविस्मयम् । ) कः को नु भवतु ! ! रक्षको मम मदग्रजन्मा आर्यश्रीचन्द्रसिंहतातः किमु ? ( इति सानन्दमालिङ्गति । )

चन्द्रसिंहः । ( गाढमाश्लिष्यन्नेव । ) अयि प्रियतमबन्धो । अयि मदीयहृदयानन्द ! चिरकालनष्टं मे रत्नमद्यायाममेवाद्य सम्प्राप्तम्। वीर! इयं ते दशा ! भवतु । न चिन्त्यं खलु ! त्वामीदृगवस्थं विधातुरहं निश्चितमेव वैरं [1]निर्यातयिष्यामि । संनिवेदय मे– ' कियदयं नराधमस्त्वां पीडयाञ्चकारेति । '

रणवीरः । आर्य ! यदाऽयं दुर्गमो मामरक्षत् व्यचिन्तयत्ततः किञ्चिदूर्ध्वममी भेजा– ' वत्स रणवीर ! इत आगम्यताम्, गृहाणायं प्रसादः । ' इत्याकार्य मां [2]शर्करामादापयत् । शर्करामक्षणमात्रेणेव मम चक्षुषोरग्रतोऽन्धकार इवाजनि । क्षणेनैवाहं निःसंज्ञीभूय भूमावपतम्। अथ जागरितोऽजानिषम् ' कुत्रचिदहं भयङ्करस्थले तिष्ठामीति । ' यतो गुप्तगृहान्तो भवान् बहिर्निःसारयामास तस्मिन्स्थलेऽहं समन्ततो दृक्पातमकार्षं परं कोऽपि मानवस्तत्र नावालोकि मया । इतस्ततोऽहं यावत्तत्र विचरामि तावदेव शूरसिंहमहं स्वमन्तुसमापान्तमवालोकयम्। एतमस्तोकयाऽहं प्रकुपितहृदा तमालिङ्गितुमन्वधावम्। परं यथैवाहं तदन्तिकमागमं तथैवायं दुरात्मा मां कोपेन दूरमपसार्याधूय च– ' रे बाल ! दूरमपसर !

1 शोधयिष्यामि । 2 शर्करा–खण्डविकारः ।

त्वमिदानीमस्य जगतः किञ्चित्कालमेवातिथिर्भवसि ' इत्यवादीत् । नाहमबोधिषं तस्य कथनं किमपि । पुनरहं तम्— ' क्रूरसिंह ? किमर्थं मामिहाऽऽनीतवानसि ? नय मां मत्पितुः समीपम् ' इत्यचकथम् । ततः स दुरात्मा— ' नैवाधुना त्वं निजपितुरन्तिकं गन्तुं शक्ष्यसि ? कियत्कालानन्तरमेव चण्डिकार्थे त्वामुपहरिष्यामि ' इति मामूचिवान् । ईदृग् वचनमाकर्ण्याहमादावबिभयम्, परं पश्चाद् धैर्यमाकलय्य— ' क्रूरसिंह ? अपि मारयिष्यसि माम् ? अये ? यदा मे तातस्त्वाम्— ' क्व नु गतो मम वत्सो रणवीरः ? ' इति प्रक्ष्यति । किमुत्तरयिष्यसि तदा त्वम् ? किंनु खलु रे ? तवापराद्धं मया ? ' इत्यवादिषम् ।

ममेदृशं भाषणं निशम्यासौ [1]जनंगमः परम रुषारुणः सन्— ' प्रोच्यालं रे बाल ? स्मर स्मरहरं स्मरणीयञ्चोत्किञ्चित् ' ! पिता भ्राता च द्रष्टव्यौ यदि [2]त्रिदिव एव द्रक्ष्यसि ! कियता दिनेन तावपि तवान्तिकमागन्तारौ । रे केसरिसिंह ? यस्त्वमिमं क्रूरसिंहं राजसभायां सर्वजनसमक्षमवाज्ञासीस्तदल्पेनैवा[3]नेहसा प्रतिकरिष्येऽहम् । दुष्ट ? तव रुधिरपानाय भृशमातुरा मे चण्डिका ' ! ' इति [4]व्याहार्षीत् । अथ कोपेन वेपमानोऽयं समीपवर्तिनं जनम्— 'बालमेनमधुनैव देव्या बलिं विधास्यामस्तदस्य स्नानादिविधिमवसाय्य सज्जीकारयामुम् । एष आगतोऽहम् । ' इत्यादिश्य ततः प्रययौ ।

प्रयाते तस्मिन् स पुरुषो मा स्नपयित्वा सुन्दरवसनालङ्करणैरलञ्चक्रे । कण्ठे स्थलकमलमालामाससञ्ज । ललाटतलञ्च कुङ्कुमाञ्चितमकरोत् । अर्धावसितेऽस्मिन्नखिलकर्मण्यहमपृच्छममुम्— ' बन्धो ? किंनु खलु ममेदानीं सवत्स्यति ? अपि निहन्ता मामयं दुरात्मा ? कथय । बन्धो ? कथय । कोऽपि नास्ति सम्प्रति मदीयः । त्वमेवासि मे सहायः । तदये प्रियबन्धो ? मदीयपरित्राणाशा सम्प्रति वरीवर्ति न वेति ब्रूहि ' इति ।

इत्थं मदीयमालपितं कर्णे कृत्वाऽसौ नराधमो मा [5]सोल्लासमुपहस्य वक्तुमुपचक्रमे— ' परित्राणाशा ! ! त्यजेदानीं रे [6]डिम्भ ? निजरक्षणाशाम् । अधुनैव महाराजश्रीक्रूरसिंह उपस्थाय स्वतो [7]देवीसपर्यां निर्वर्तयिता । ततस्तत्राग्निकुण्डे धगधगिति दन्दह्यमानातिरुणारुणलोहकीलैस्त्वदङ्गेषु प्रवेश्य निष्कासितेन तेन [8]पिशितेनायं [9]श्रीवैश्वानरमाराधयिष्यति । तदनु निकृत्तस्य [10]तवोत्तमाङ्गस्य [11]कवोष्णरुधिरैरेव चण्डिकादेवीं [12]प्रीणयिष्यति ' इति नावगतं खलु त्वया ! ' इत्युक्त्वा साट्टहासं हसितवानसौ नरपिशाच । अत्रान्तरे क्रूरसिंहस्तत्रागत्य ' तेजस्विसिंह ? अपि सज्जितमासिलम् ! ' इत्यप्राक्षीत् । एष च प्रणम्य— ' आ धीमन् ? ' इत्युवाच । तत्रान्तरे द्वावपरौ पुरुषौ तत्रोपस्थितौ । आसीदतिकृष्णाम्बरधारी तयोरन्यतरः । अदृश्यमभूदस्य वदनम् । परं नयनयोरग्रतः केवलं द्वे छिद्रे अभूताम् । पाणौ चामुना नग्नकृपाणो गृहीतः । अयमेव देव्या मम बलिदानं विधातेत्यहमज्ञासिषम् ।

---

१ चण्डालः । २ स्वर्गे । ३ कालेन । ४ अवदत् । ५ ' सोल्लुण्ठनं तु सोत्प्रासं सोपहासः— मनाग्रयः । ' इति हलायुधः । ६ पोतः पाकोऽर्भको डिम्भः । ७ पूजाम् । ८ मांसेन । ९ अग्निम् । १० शिरसः । ११ ईषदुष्णम् । १२ संतर्पयिष्यति ।

योऽभावपरः पुरुषः स नु साधारणवेषधरोऽभवत् । आसीदेष शूरस्य किङ्करः । क्षणेनैव देवीनिकटवर्तिनि हवनकुण्डे प्रज्वलितो बृहद्भानुः । अथ मदभिमुखीभूय शूरसिंहः ' रे बाल ? इत आगत्यार्चय देवीं ' इत्यभिहितवान् । भिया कम्पमानोऽहं तदन्तिकमगमम् । स मत्तो देवीपूजनं कारयित्वा— ' बाल ? निवेद्यं ते किमपि ? परमेश्वराभ्यर्थनं विधेयञ्चेद् विधेहि, ' इत्यप्राक्षीत् । इत्थमाकर्ण्य करौ सम्पुटीकृत्याहम्— ' शूरसिंह ? दयस्व दयस्व माम् । गृह्णामि ते चरणौ ' इत्यभिधाय तच्चरणयोरपतम् ।

एतदवलोक्यायं दुरात्मा मां धिक्कुर्वन्नब्रवीत्— ' रे बाल ? नेदं स्थलं दयाशब्दप्रयोगस्य । क्षत्रियबटुक ? तद् वृत्तमामरितरं निवेद्य त्वया यो मदीयारभातो विहितस्तं विस्मृतनाऽयमनीव त्वत्तो दण्डः । आः ? त्वमेव मे रहस्यं प्रकाशसि ? विजहीहि तदधुना त्वं निजरक्षणाशाम् । एहि । सज्जो भव ' इति ।

" शूरसिंह ? देहि मे प्राणभिक्षाम् । क्षम्यतामयमपराधः । बालकोऽस्मि ते " इत्येतादृशीं कातरतरगिरं मे निशम्यापि दुरात्मनस्तस्य किञ्चिदपि हृदि नाजनि दया । अथायं नीलाम्बरधरं नरं सङ्केतयामास । तमर्थं तमसकालमेवासौ शनैर्नेङ्गितज्ञोऽपि भयङ्करस्वरेण— ' बाल? ध्यायताभिष्टदेवस्त्वया ' इति व्याहृत्याभिसृत्य मां दन्दशूकानानाय्यानायसकीलान् बहिर्निस्सार्य मदग्रतो रक्षा स्थितवान् । [1]असौ दुर्धीमा ममरणेऽस्ममवधार्याहं रोदितुमारब्धवान् । अहं निवार्य देवीसम्मुखे स्थातुमादिष्टः । सविनयमहं परमेश्वरमध्यायम् । ततः कृष्णाम्बरधारिणाऽमुना शूराभिमुखं [2]निरगामि । तत्क्षणमेव दुरात्मा शूरसिंहस्तानुन्मत्तोहकीलान्मदङ्गेषु निखातुं निर्दिष्टवान् । अथायं सन्तलोहकीलधरं करं समुत्तम्भितवान् । परं को नु खलु प्रभुं प्रभुलीलामवगन्तुम् ? तत्क्षणमेवाशनिवद्घोरो महाध्वनिरजायत । तस्यायसकीलस्तु तस्य हस्तश्चित्रलिखित इव, अदीकृत इव निश्चलमवतस्थे । अथान्तो निजमन्तर्निमग्नं कषायवसनधारिणं [3]विशालजटामण्डितोत्तमाङ्गं रुद्राक्षमालालङ्कृतकण्ठं प्रशान्तमुखमण्डलं तेजःपुञ्जशालिनं कञ्चन योगीन्द्रमद्राक्षम् । साश्चर्यचकितं निरीक्षमाणमेनमहं प्रागमम् । स च ' वत्स ? सुखी भव । ' इत्युदीर्य निजकरं मम मूर्धनि निदधे ।

शूरसिंहस्तु— इयत्कालं यन्त्रपुत्तलिकायित इव स्तब्धीभूय स्थितोऽभूत् । ' कोऽन्वयं भवेद् योगी ? कथमिहायमागतः स्यादकस्मात् ? ' इति सोऽधुना विचिन्तयामास । विचिन्त्य पश्चात्समन्तोऽतिरुद्धः सन् योगीन्द्रमवादीत्— ' कस्त्वं रे तापस ? किमिहागमनप्रयोजनं ते ? न खलु कदाचिदप्यन्तरं ते यदेवमनिमन्त्रितः परिसरमिदं मदनुरागेणाविशानसि ?

योगीन्द्रः । दुरितकर्मगन्धां निवारयितुं निर्दोषस्य बालकस्यास्य प्राणान् रक्षितुमहमागतोऽस्मि । न खलु जानासि त्वं यदस्मादृशां मादृशां समानं सर्वस्थलमिति । जगतां [4]शेषमस्मादृशं कुरयणानां नृपस्य सम्मार्गदर्शनमेवास्माकं प्रधानः [5]कल्पः ।

---

१ आरब्धम् । २ गमनदेशि । ३ पीनम् । ४ कम्पनम् । ५ स्थिरः कर्मणिति वा ।

क्रूरसिंह । नाहमाकर्णयितुमभिलषामि तवोपदेशम् ? अपि जानासि कस्याग्रतस्त्वं स्थितोऽसीति ?

योगीन्द्र. । आम् । सम्यग् जानाम्यहम् ! परमात्मना सृष्टस्य कस्यचन जन्तोरग्रत !! यदा निर्मितस्त्व प्रभुणा तदानीमासी पवित्रस्त्वम्, परमिदानीं न तस्य पवित्रस्य जन्तोरग्रे ? किन्तु कस्यचिन्नरकीटकस्याग्रत स्थितोऽस्मि !!!

क्रूरसिंह । आ ? तापसापसद ? विमृश्य ब्रूहि । आ ? किमहं त्वा कुर्याम् ? दूषित. स्यामहं तव हत्यया, अन्यथा खण्डशस्त्वामहं व्यधास्यम् । न खलु विदित ते कीदगहं भयङ्करो नर इति ।

योगीन्द्र । आ विदित मे—नराधम ? न किमपि कर्तुमीश्वरस्त्वम् ? अरेरेऽखर्वगर्वबर्बर ? अण्वपि दर्पं मा कार्षी स्वशौर्यस्य । त्वमात्मानमतिबलशालिन मन्यसे किमु ? त्वयाप्येकदा मरणीयमेव । अये ? येषा फूत्कारमात्रेण पर्वता प्राकम्पन्त, येषाञ्च पदप्रहारेण धरणिरपि व्यदीर्यत तेऽपि प्रचण्डप्रतापवन्तो महान्तो महीपतय परश्शतदासजनवृत रमणीयरमणीजन मण्डितमन्त पुरमन्ततो विहाय कथामात्रता गतवन्त । अहह ? रावणसदृशो दर्पशालिनो नृपचक्रवर्तिनोऽपि क्षणेनैव दृष्टनष्टा अभूवन् । तत् कियती मात्रा त ? अतो मिथ्याभिमान मपहाय स्वमेन निरागस बालक विनहिहि ।

क्रूरसिंह । तूष्णीभ्भो भव रे तापसाधम ? नाहं शुश्रूषे तव भाषणम् । इदानीमहमीशोऽस्मि स्वमनीषित पूरयितुम् । इतस्ततो भ्रमतस्त्वादृशस्य तापसस्य कथनेन स्वहस्तगतमाखेट विजह्यामहं किमु ? नेद सभाव्यते ।

योगीन्द्र । किं कर्तुं समर्थोऽसि रे मूढ ? नैव सिध्येत् किमपि तवाभिलषितम् ? स एव विधाता विधाता खलु ? इच्छेच्चेदसौ क्षणेनैव त्वा विनाशयेत् । अरेरे विनश्वरैश्वर्यमोहमदिरामदमत्त मूढ ? विमृश किमपि । चिन्तय प्रभुम् ।

क्रूरसिंह । प्रभु ? अस्त्येव कुत प्रभु ! नाहं गणयामि तं किमपि । इदानीन्तने समये तु वसुन्धरायामिह क्रूरसिंह एवाय केवल बलशाली पुरुषोऽस्ति । नैव विद्यते कोऽपि मादृशोऽत्र महीमण्डले । सम्पत्स्यते सम्प्रति मदीयमेव मनीषितम् ? अपसर तदितस्त्वमधुना । जीवन्तमहं त्वां मुञ्चामीति महती मे दया । गच्छ, भटोऽयं मम पन्थान ते दर्शयिष्यति ।

योगीन्द्र । नैव । नाहमिदानीं जिगमिषामि । नापेक्ष्यते तत्राय भटोऽपि । शृणु रे मूढ ? न भविष्यति निधारित ते किमपि ? प्रभोरेव स्यान्निर्धारितम् । तस्मादृशस्य संन्यासिन उपदेशमङ्गीकृत्य सन्मार्गमनुवर्तस्व येन ते श्रेयो भविता । दयनीयोऽयं बाल. । पश्य—*निरन्तराश्रुबिन्दुनी सञ्जातेऽस्य नयने । विहस्य*—क्रूरसिंह ? विमृश । अरेरे वृथाभिमानमहणदुर्विदग्ध ? क्षत्रियकुलकलङ्क ? पतनमपदस्य दुरात्मन् ? विमृश । अथवा, आम् ? विदितं मया ननु—' विनाशकाले विपरीतबुद्धिस्तव जातेति ।'

क्रूरसिंह । प्रभु ? किं करिष्यति प्रभुः ? किं कर्तुं पारयिष्यति मे तव प्रभुः ?

'¹संयच्छाधुना प्रजल्पन्तीमात्मरसनाम्। नाहमाकर्णयितुमभिलषामि नवैकमप्यक्षरम्। गच्छ गच्छसि चेद्, अन्यथा तवापि बालकस्यैवास्य दुर्गतिर्भवित्री' इत्यवेदि। याहि याहि। अधुनापि त्वामितो गन्तुं कथयामि।

योगीन्द्रः। अमरस्यैनं बालकं रक्षोपायैरपि ते नेतो गमिष्यामि। यत्राहं स्थितोऽस्मि ततः पदमेकमपि पश्चादपसरामि? कुरु, यत्कर्तुं शक्नोषि? किन्तु मयमवेहि–क्रूरसिंह? न किमपि कर्तुं शक्यते त्वया। श्रृणु–भूतार्थम् अयमेव बालकस्त्वामन्ते पराजेष्यते, एष एव तव मनोरथं धूलिसात्करिष्यति, अस्यैव चरणयोरात्मनस्त्वकं मस्तकं नमयिष्यसि। अनेनैव तव विनाशोऽपि विधास्यते। पापिष्ट? इदमपि ते भावि! कुरु यत्कर्तुमीशः। ²तवाभ्याशमेव स्थितोऽस्मि।

'अ एवम्? एहि तावत्त्वमपि यमनगरातिथी भव।' इति प्रोच्य कृपाणमाकृष्य क्रूरो योगीन्द्रमभ्यद्रवत्; परं योगीन्द्रः प्रसन्नवदन एव शान्तं तस्थौ। तस्मादयं न बिभाय किमपि। यदैव क्रूरस्तदन्तिकं प्राप्तस्तदैवायं योगीन्द्रः केवलं, स्वहस्तमुद्यम्य– 'स्तं क्षणेन?' इत्यवादीत्। तत्क्षणमेव क्रूरसिंहस्तत्रैव जडीभूय स्थितवान्। ततोऽग्रतोऽयं पदमेकमपि चलितुं न शशाक। इत्थं योगीन्द्रस्य योगबलमवलोक्य क्रूरसिंहो नितरां व्याकुलोऽभवत्। तदनु तदवस्थामालोक्य योगीन्द्रः– 'किं विचिन्तयसि क्रूरसिंह? कथमेवं स्तब्धो जातः? परीक्षस्व निजबलम्।' इति जगाद। ³प्रह्वीभूय क्रूरसिंहो योगीन्द्रम्– 'क्षम्यताम्, महानुभाव? क्षम्यतामयमनुचरः। नाहं पूर्वं पर्यचैषमत्रभवन्तम्। अनुगृह्यतामयं भगवता। शिरसा वहामि श्रीमदादेशमनन्तम्।' इति प्रोवाच। तस्य नम्रं वचनं निशम्य योगीन्द्रः– 'क्रूरसिंह? बालकममुं त्वं न किमपि पीडयितुं शक्नोषि, तदपसरैनम्' इत्यब्रवीत्। करौ सम्पुटीकृत्य क्रूरसिंह ऊचे– 'प्रभो? बालमेनं वर्जयित्वा यदन्यत् किञ्चिदादेक्ष्यति श्रीमान्। सन्नद्धोऽस्मि तदहं पालयितुम्। परममुं बालकन्तु नैव त्यक्ष्यामि।' इति।

ईदृशं तस्य भाषणं निशम्याहमतीवाकुलीभूय योगीन्द्रमावेदिषं 'भगवन्! परित्रायतामयं भगवता। बालोऽस्मि श्रीमतान्। न गम्यतामेकाकिनं मामिह परिहाय भगवता। चाण्डालोऽयं मम पूर्वजन्मनो वैरी' इत्यकथयम्। मम मूर्द्धनि पाणिपङ्कजं निधाय योगीन्द्रो मां व्याजहार–' राजकुमार? निश्चिन्तो भव। कदाचिदपि ते पीडा न भवित्री' इति। अथ योगीन्द्रः क्रूरसिंहमवादीत्– 'क्रूरसिंह! रक्ष साम्प्रतमेव बालकम्! नाहमितोऽमुं निनीषामि। यथेच्छमेनं स्वकीय कारागृहे निरुन्ध्याः। किन्तु बालस्यास्य बालोऽपि न पीडनीयस्त्वयेति स्मरणीयम्। इदन्तु चेदेनं कदापि प्रताडयिष्यसे तदा त्वमेव स्वयं विनङ्क्ष्यसे। पञ्चवर्षपर्यन्तमयं गुरुगृहे त्वयाऽऽगन्तुं न पारयिष्यते। त्वमिहागन्तुं कियदपि यतेथाः परमिदं स्थानं नैवोपलप्स्यते त्वया। यदैकदिवसाधिकपञ्चवर्षाणि भविष्यन्ति तदानीमेव स्मरिष्यसि गुरुगृहमिदमिति।'

---

१ निरुन्धि। २ निकटमेव। ३ नम्रीभूय।

‘ आम् । भगवन् ? शिरसा वहामि भगवदादेशमालाम् ’ इति प्रणम्य प्रोवाच शूरसिंह । तदनु मामवदद् योगीन्द्रः– ‘ कुमार ? साधयाम्यहमिति ।’ ‘भगवन् ? सह नयतु मां श्रीमान्’ गमवति भगवति दुराशयं क्रूरो देव्यै मम बलिदानं विधाता । ’ इत्यभिधायाहं भृशमरुदम् । रुदन्तं मां निवार्य निजवक्षसा समामज्य योगीन्द्रेणोक्तम्– ‘ मा भैषीः कुमार ? क्षत्रियपुत्रो भूत्वा किमेवमधीरो भवसि ? अधुना तु त्वया महापराक्रमशालि कृत्यं करणीयमस्ति । [1]कच-मेकमपि ते न पीडयितुमयं शक्ष्यति क्रूर । निजयोगबलेनाहं त्वत्परित्राणं करिष्यामि । शृणु-चेदम् ’–इत्युदीर्य मन्दं मदीयकर्णे–इतोऽग्रे त्वं पञ्चसंवत्सरावधि न द्रक्ष्यसि शूरसिंहमेनम्’ । इति प्रोक्तवानयम् । ईदृशेन तदीयवचसा शान्तिरन्तर्ममावर्तत । पुनरपृच्छमहम्– ‘ किं तदात्र स्थले बन्दीभूय मया सकलं जीवनं यापनीयम् ? ’ इति । योगीन्द्रस्तु विहस्य– ‘ न समर्थोऽस्मि तत्कथयितुम्, परं कियत्कालमत्रैव स्थेयं त्वया । यथाकालं सकलं मङ्गलं भविता? तव हस्तेनैव कियन्ति महान्ति कार्याणि करणीयानि सन्ति । भद्रं भूयात्तव । ’ इति मां निगद्य शूरसिंहं तदनुचरांश्च पृथग्विधायान्तर्दधे । कुत्र केन पथा गतवानिति नाज्ञायि केनापि ।

योगीन्द्रे गतवन्तमवधार्य क्रूर. सावधानः सन् व्यचारयत्–‘अपि सत्यं भवेद् योगीन्द्रेणो-दीरितम् ? किमस्य वधे विधीयमाने न लभ्येत गुप्तगृहमिदम् ? ( क्षणं मनसि विमृश्य । ) नैव नैवम् ! ! किंनु खलु स्यादेतादृशस्य कथनेन ? अस्य बालकस्य बलिदानं तु करिष्याम्ये-वाहम् । क्षणमेकमपि तमहं जीवन्तं नाभिलप्यामि । पश्यामि– ‘ किं भावीति ’ । शूरसिंहश्चे-दहम् ? अस्य तापसस्य वचनं वितथं विधास्यामि । ’ इति विचार्य बलिदातारं नरमुच्चैरा-ह्वयत् । विस्यद् विस्यदसौ तदन्तिकमुपसृत्य कृताञ्जलि सम्मुखमवतस्थे । तदभिमुख-मालोक्य क्रूरेणाभिहितम्– ‘ बन्दीकुरु कुमारमेनम् । स्वयमेवाहमस्य बलिदानं करोमि । तदाज्ञासमक्षणमेव मदीयकरचरणं लोहशृङ्खलया [2]नियन्त्र्य देवीसम्मुखमहमुपस्थापित । क्रूरसिंहो मम शिरश्छेदनाय कृपाणमाकृष्य यावन्मदुपरि संचालयति तावदेव महता निःस्वनेन समं क्रूरसिंहमुपरि निरवलम्बं प्रलम्बमानमद्राक्षम् । ततो मण्डलाकारेणोपरि वर्तुलं परि-भ्रमन्नेष तारस्वरमाचक्रन्द । परं को नु खलु समर्थस्तमधोऽवतारयितुम् ? क्षणादेव [3]निलीनो-ऽयं क्वापि । न मर्मा सम्प्रति हृदि मम दर्पं । इदानीमेवाहमवागमं तथ्यं योगीन्द्रकथनमिति । अहम्, स कृष्णवेषधारी पुरुष , अन्यश्चैकः सामान्यवेशो भट ’ इत्येते त्रयो वयं तत्र स्थिता । अनन्तरं स कृष्णवेश पुरुषोऽपरं पुरुषं किञ्चिन्मन्दमुदीर्य क्वापि प्राहिणोत् । प्रयाते तस्मिन्नथासौ निजनीलवसनमत्यजत् । ददृशे सम्प्रति तदीया रमणीया मूर्ति । आसीदसौ पञ्च-विंशतिवर्षदेशीय. । मदभिमुखीभूय मामकथयदयम्– ‘ कुमार ? रक्षितोऽसि त्वमधुना । अद्यारभ्यत्र धीरो विपदम्बुधेर । सुखमास्तामिह । भावानुभावानन्दिष्यात । त्वमिवाहमपि पूर्वं क्रूरसिंहेन बलिदानार्थमानीत । परं समाजीवकारण्यपूर्णया गिरा बलिदातु पुरस्सया-

1 कचः केशः । 2 निबध्य । 3 अदृश्य. ।

भाविन चार्यं मह्यं प्राणभिक्षां ददौ । सम्प्रति तन्निदेशानुवर्ती सन्नहमत्र निवसामि इति । अथायं मम करचरणं निःशृङ्खलं विधाय मदर्थं भोजनमानेतुं ययौ । प्रतिदिनं [1]सकृदेवासौ मह्यं भोजनं प्रदाय प्रयाति स्म । तत्राहं कथं कथमपि दिनान्यगमयम् । एतस्मिन्नवधौ तत्रत्यमखिलं गुप्तस्थलमालोकयमहम् । परं नालम्भि मया ततो बहिर्निर्गन्तुमवसरः । तत्र क्वचित्प्रकाशः कुत्रचिच्च घनोऽन्धकारोऽलक्ष्यत । "विना चन्द्रं कुत्र एष प्रकाशः ? " इति पृष्टश्चैव कृष्णवेशधारी पुरुषो मां व्यजिज्ञपत्– 'अस्ति इतोऽविदूरमेको महान् गिरीन्द्रः । तस्मिञ्जलैरिव प्रवालादिभिः पदार्थैः परिपूर्णमेकमतिसुन्दरं सरोवरं विराजते । सकृदेव भित्तिषु तदीजलसेकेन चिरकालं तस्य प्रकाशो भवतीति तज्जलमानीय क्रूरसिंहोऽत्र गुप्तगृहे क्वचित् क्वचित्स्थाने न्यषिञ्चत् । तस्यैवायं प्रकाशः कन्दरेषु । ' इत्येवं मया प्रकाशस्य रहस्यमज्ञायि । तात ? समाप्तप्रायमिदानीमिदं मदीयमितिवृत्तम् । महता कष्टेनाहं तत्र दिवसाननैषम् । यद्यपि तत्र मे किमपि दुःखं नाभवत् तथाप्येकान्तनिवासेनाहमतितरामुद्विग्नोऽभूवम् । 'अहह! आगतस्य मम वर्षत्रयमतिक्रान्तम् । ततो मम पिता भ्राता चाधीरं विह्वलौ भविष्यतः । कथमितो विमुक्तो भवेयम् ? ' इत्येवमहर्निशं विचिन्तयतो मे कथं कथमपि पञ्चवर्षाण्यतीतानि । बन्दीभूतस्य मम वत्सर एष पञ्चदशः सम्पूर्णः । ह्यो दिवसे कृष्णवेशभृता पुरुषेणाहं विज्ञापित – 'आगत नरसिंह, सचाद्य निशीथे तत्र देव्यै बलिदानं विधाता' इति । इत्थमाकर्ण्य नितरामहमाकुलोऽभवम् । अथ मुहूर्तानन्तरमुपगम्य कश्चन पुरुषो मम हस्तपादं लोहनिगडेन निगडितवान् । गते तस्मिन्नहमात्मानमेकाकिनमवगम्य तद्धस्तान्मरणापेक्षया निजहस्तेनैव मरणीयमिति निश्चित्य तद्गृहनमागच्छम् । अत्रान्तरे तु–अयि तात ? त्वयैवागम्य परित्रातोऽस्म्यहम् । "

इत्याकर्ण्य योऽसौ चन्द्रसिंहः शान्तमनसा रणवीरोदितं वृत्तान्तं शुश्राव स इदानीं रणवीरमाचचक्षे– 'वत्स ? 'अतिमात्रमतुलोद्यं नृशंसस्त्वाम् । भवतु । यथेश्वरेच्छा ! ! इति । '

रणवीर । तात ? मा कार्षीः शुचं मुधा । भावि हि भवितव्यमेव । अपि कथयिष्यसि मां कथं तत्र भयानकस्थले त्वमुपगतवानिति ? अपि कुशलिनः पितृचरणाः ?

चन्द्रसिंहः । किमाख्यामि ते वत्स ? हतस्त्वममुना दुरात्मनेति यदाऽशृणोत् तातस्तदा ज्वलितः [3]रोषानलभुजा क्रूरसिंहमेन निग्रहीतुं परितोऽधारोहान् विसर्जयामबभूवायम् । परं नोपलेभे त्वदाकृतिमपि । त्वदर्थमत्यर्थमशोचीत्तातः । तमहं सम्यगाश्वास्याऽऽदाय च तदादेशं त्वदन्वेषणार्थी निरगच्छम् । विशालेषु नगरेषु, विकटेषु महारण्येषु, भयङ्करेषु गिरिकन्दरेषु चापि त्वामहं व्यचिनवम् । परं निराशोऽहमजनिषि त्वामनुपलभ्य । न्यूनादनिन्यूनं त्वां विचेतुमहं वर्षद्वयमनयम् । अनन्तरं खिन्नातुरो भूत्वाऽहं पुनरजितदुर्गराजधानीं न्यवर्तिषि । आसन्नवर्तिन्यां तु राजधान्यां कञ्चन ग्रामीणवेषं पुरुषं मत्सकाशमायान्तमहमवालोकयम् । उपसृत्य सहस्पर्शमयं मां प्रणनाम । तमहमभाषम्– 'आर्य ? कस्त्वमिति । ' स तु

१ एकवारम् । २ अपीडयत् । ३ कोपाग्निना ।

प्रतिवचनमदत्त्वैव मत्पाणिमादाय मा दूरमनयत् । ' विक्षिप्तो वा मूको वाऽय स्यादित्यहम वाधारयम् । यत्राऽयं मामनयत् तत्रैवाहमगच्छम् । स्तोकमन्तर गतोऽय मत्पाणिमुत्सृज्य समन्ततो निरैक्षिष्ट । यदा कोऽपि नादृश्यत तदाऽसौ सममापत– ' महानुभाव ? क प्रस्थीयते भवता ' इति । ईदृशीं तदीयां वाणीमाकर्ण्य भृशमकुप्यमह तस्मै । रुषा चाह तमगादिषम्– ' किन्तु ते प्रयोजनम् ? क्वाऽह व्रजामीति ? किमर्थं मामत्र त्वमानय ? राज कुमारोऽस्म्यहम् । स्वनगरं प्रयामि ' इति । गिरमीदृशीमाकर्ण्याय विलक्षणो जन कृताञ्ज लिरवदत्– ' राजकुमार ? धैर्यमाकलयय क्षण निषीदतु भवानत्र । श्रूयतामस्याकिञ्चनस्य वचनम् । महद् भयमग्रे वर्तते । न गन्तव्य भवता नगरे ' इति । अतोऽहं चकित सन् निरचैषम्– ' विक्षिप्तोऽयमिति । ' तमपृच्छमहम्– ' कस्त्व रे ? किमर्थञ्च मा नगराग्यन्त रगमनान्निवारयसि ? ' इति । ' कोऽहमस्मीति निरीक्ष्यतां श्रीमता । ' इति समाप्यायासौ शिरसो ग्रामीणभद्रया वेष्टितं[1] मुष्णीषमपनीयाग्रवेषेण तस्थौ । तत्क्षणमेवाह तमभिज्ञाय न्यगदिषम्– ' कोऽयम् ? विक्रमशाली विश्रम्भभाजनममात्यवर्यं प्रतापसिंह किमु ? कुतोऽ त्रभवान् साम्प्रतमिहाऽस्मिन् वेषे ? अपि विद्यते नवाऽत्रभवान् पितृवरोऽधुना नगरे ? किमुप लब्धो नवेति वत्सो रणवीर ? अकृतार्थोऽस्म्यह तदन्वेषणे । किं प्रयोजन गुप्तवेशमीदृशमा कलयितु भवताम् ? ' इति । ईदृशो मम प्रश्नान्निशम्य स्वललाटे कर निधायायाचष्टामात्यवर्य - ' हन्त ? अमन्दतु खप्रदमिदममङ्गलमुदन्तजातमावेदयितुमहमेव केवलमवशिष्टोऽस्मीति । ' ' किमस्ति ? कथनीयमञ्जसा–मा विधा मामधिक सन्देहवन्दीमन्दिरे । किन्तु किञ्चनाम ङ्गलमयं वृत्तं समुद्वृत्तम् ? ' इति पर्याकुलहृदयोऽहमन्वयुञ्जि तम् । सोऽब्रवीत्–राजकुमार ? भयङ्करी घटना घटिता ! ' ' भयङ्करी घटना किमु ? ' इति पृष्टमाकुलेन मया । अथोक्त वान् श्रीप्रतापसिंह.– ' आम् । भयङ्करी घटना । श्रूयताम्–केनाऽपि दुरात्मना हृते रणवीरे त्वयि च त गवेषयितु निर्गते कृष्णपक्षनिशायामेकदा महाराजो योगाभ्यासार्थं पुण्यभद्रातीर प्रस्थितः । तत्रैकाकी गच्छन् महाराजो मया न्यषेधि । पर हन्त ? न कृतं मनसि मे वचनं महाराजेन । एकाकिनैव प्रास्थायि नृपतिना । ततो निवर्तमानो महाराज क्रूरेण क्रूरसिंहेन कपटप्रपञ्चै[2]र्विप्रलभ्य वन्दीकृत इति । ' ' प्रियबन्धो ? उपश्रुत्यैवैनमुदन्तमहमतीवकुद्धोऽ भवम् । परममात्यवर्येणाहं सान्त्वयित्वाऽभिहित — ' राजकुमार ? महाराज बन्दीकृत्यायं दुष्टहतक क्व नष्ट इति न व्यज्ञायि मया । बन्दीकृत नरेन्द्र निशम्याहमल्प सैन्यमादाय तन्मार्गमेव निरगाम् । उपलभ्यावसरमसुमयमाम्भीयानुचरै सममिहाभिगम्यास्मदीयमव शिष्टं सैनिककुलमलं निहत्यानायासेनास्मद्दुर्गं प्रविश्य निर्भयः सैस्तत्रैव न्यवसत् । अत्रा न्तरे निजबलं[3]मुपचित्य स्वैरं प्रकृतिमण्डलमेव पीडयामास । अल्पेनैवानेहसा महाराजमनुप लभ्य निराशहृदयेन पुनर्न्यवर्तम् । [4]अनतिदुर्गोपशल्ये शिबिरं सन्निवेश्याहं न्यवात्सम् ।

१ ' उष्णीषः शिरोवेष्टकिरीटयो । ' इत्यमर । २ वञ्चयित्वा । ३ संवर्द्ध्य । ४ उपशल्ये ग्रामान्ते ।

तद् दुर्गमरातिहस्तगतं विधायाधिवसतीति निशाय दुर्गमाक्रमितुमहं व्यचिन्तयम्। परं निष्फलो मम मनोरथः। यत आसीदधिकमखिलम्। न कदर्थनीया वृथा [1]वरूथिनीति विचिन्त्य [2]योधनमहं नाकार्षम्। [3]स्वकटकादेकं गुप्तचरं सपत्नोदन्तमवगन्तुकामोऽहं प्राहिणवम्। आनीतश्चायं संदेशस्तेन— 'विना प्रयासमजितदुर्गमरातिनाऽऽचिच्छिदे, महाराजश्च व्यापादित' इति। 'हा हन्त! किं तदा सुरलोकं सनाथितवन्तः पितृचरणाः? अहह! पितृदर्शनमपि नैवासीन्मे? हन्त! किमिदानीं करोमि?' इत्यालप्याश्रुवर्षिणि रणवीरे। तदश्रुबिन्दुवृन्दमात्मपटखण्डेन परामृश्य चन्द्रसिंहस्तमसान्त्वयत्— 'वत्स! किमेवं विह्वलीभवसि! अनतिवर्त्या कर्मणां गतिरियम्। यावज्जीवं वयं पितृघातकस्यास्य वैरं निर्यातयिष्याम' इति।

रणवीर। बाढम्। क्रूरहतकायास्मै तस्य क्रूरकर्मणः फलं तु प्रदेयमेव। किन्तु तात! तदनु किं व्यधायि भवता?।

चन्द्रसिंहः। पितृवधवृत्तान्तमाकर्ण्यात्यन्तमेव कुपितः सन्नहं तदानीमेव स्वामवशिष्टां [4]अनीकिनीं सज्जयितुममात्यवर्यमादिशम्। सदसद्विवेकशाली बुद्धिमानतीवनिपुणोऽमात्यवर्यस्तु— 'राजकुमार! न शक्यते योद्धुमिदानीमस्माभिः। किञ्च प्रागेवास्मदीयराज्यममुना नृशंसेनाऽऽक्रम्य [5]इन्द्रद्विनेऽमरकण्टकाधीश्वराय रणजितसिंहक्षितिपालाय तस्माद् विपुलं द्रव्यमादाय समर्पितम्। तद्द्रविणमेष कुत्रचिच्छद्मभूमौ निदधे। साम्प्रतमसौ दुरात्मा क्रूरसिंहो विजयनगराधिराजश्रीविजयसिंहनरेन्द्रस्य राज्ये सेनापतिपदं कलङ्कयति। तावत्तु सुरालयमलङ्कृतवानेव? किन्तु वयं [6]तदीयवैरनिर्यातनं विधास्यामहे। प्रियनरेन्द्रनन्दन! धैर्यमाधत्स्व। किन्तु बोधयितव्यं नाम बुद्धिमति त्वयि?' इति बोधयित्वा मामशमयत्। पश्चादपृच्छमहम्—'अमात्यवर्य! तत्किमिदानीं करणीयम्? कथञ्च प्रतिकार्यं पितृवैरम्?' इति।

प्रतापसिंह। अनुमन्यसे चेन्मदनुमतिम्? इदं मे सम्यक् प्रतिभाति। श्रूयताम्— 'सकलमिदमात्मबलमादाय यतोऽयं नृशंसो निवसति तत्रैव विजयनगरराजधान्यां गुप्तवेषेणोषितव्यं मया। येनाप्युपायेन महाराजश्रीविजयसिंहं साक्षात्कृत्य सेवयाऽऽराधनीयः। प्राप्यावसरं [7]प्रतार्यामुं दुरात्मानं प्रकाशनीयमस्य [8]गर्ह्यं कर्म। राजकुमार! महात्मभिरुपदिष्टं किल— 'न हर्षणीयमभ्युदये जनेन, नापि विषादनीयमापदि, सदा प्रसन्नेनैव मनसा स्थेयम्' इति। सर्वं प्राप्तकाले फलति। प्राकाशि मया निजमन्त्रितमिदानीं निवेद्य किमभिमतं ते? अहमकथयम्— 'सम्यग् विचिन्तितं भवता। कियत्कालमहं रणवीरमितस्ततः परिभ्रम्य मार्गयिष्यामि। प्राप्तोऽप्राप्तो वाप्यसौ मया प्रच्छन्नवेषेणैव महाराजश्रीविजयसिंहस्य सकाशमवस्थास्यते। मन्ये। यतः शूरसिंहस्त्वमिव रणवीरोऽपि भवेदिति सोऽपि विजयनगर एव प्राप्येत, तद् भवानपि निपुणं गवेषयतु तत्र रणवीरम्। गच्छामि सम्प्रति। अल्पेनैव कालेन पुनरहं भवन्तं सेवा

१ सेना। २ युद्धम्। ३ शिबिरात्। ४ सेनाम्। ५ [illegible]। ६ वैरशुद्धिम्। ७ वञ्चयित्वा। ८ निन्द्यम्।

तिथीकरिष्यामि ! ' इति निर्दिश्य प्रधानमापृच्छ्य विसृज्यामुमहं त्वां गवेषयितुं निरक्रमिषम् । आहिण्डमानोऽहं विजयनगरान्तिकवर्तिनि घोरकान्तारे विस्मृतवर्त्माऽभूवम् । उपस्थिता रजनी तदानीमग्रे । आसमपरिचितपथश्चाहम् । तस्मान्मार्गं मार्गयितुमना अटवीमभितोऽहं पर्यटम् । अत्रान्तरे श्रवणसरणिं मम भीषणमेकं चीत्कृतमुपागतम् । तदुद्दिश्याभिगम्याज्ञासिषम्—'स एव क्रूरसिंहोऽनुचरयुगलानुगतो राजकुमारीं कुमुदिनीमाहृतवानिति ।' परिरक्षिता मया क्रूरहस्तात्सा राजकुमारी ।

मध्य एव रणवीरो जगाद— ' किम् ? परित्राता किमु भवता राजकुमारी ? अहो ? आश्चर्यम् ! ! तात ? तत्राप्ययं चण्डालः कृतघ्नतां दर्शितवान् किमु ? धिग्धिगेनं क्षत्रियहतकम् ! ! इति ।

चन्द्रसिंहः । भ्रात ? पूर्णोऽधुनाऽमुष्य [1]कालुष्यकलशः । तदानीमेवाहं किल्बिषकारिणमेनमहनिष्यम्, परं दिष्ट्याऽयं मम पाणिपञ्जरान्निःसृतः । अथ राजकुमारीं सहाऽऽनीयाहं विजयनगरमुपागमम् । सुतरां सत्कृत्य मां प्रशशंस महाराजश्रीविजयसिंहः । न्यवेदीच्चासौ मां स्थातुमत्र, परमहं तं सप्रश्रयं न्यषेधिषम् । यदैव कुमुदिनी मां भृशं [2]निर्बबन्ध तदाभ्युपेत्य वचनमस्या अतिष्ठमहमत्र । महाराजेनाहं प्रधानसेनानायकपदवीमधिरोपितोऽस्मि । नावेदयमहमिदानीमपि तं निजनाम राजनी । सर्वे मां योगिराजपदेन संभावयन्ति ।

रणवीरः । तात ? किं वृत्तं तदनु क्रूरसिंहस्य ?

चन्द्रसिंहः । तन्निग्रहणाय सर्वत्र सादिनः प्रेषिता महाराजेन । परं क्व पलायितोऽयमात्महतक इति न विदितं केनाऽपि । तं निग्रहीतुं गताः सादिनः पुनः परावृत्ता निराशहृदयाः । मुदाहमत्र न्यवसम् । अस्मत्प्रधानेन श्रीप्रतापसिंहेनाऽपि परमचातुर्येण विजयनगराधिपस्य प्रधानपदमुपक्रान्तम् । एषोऽत्र वीरसिंहनाम्ना विख्यातोऽस्ति । परश्व एवाहमत्र नगरे समावासिषम् । प्रात्याहं सेनापतिरहं त्रिमार्गां पर्यटितुं निरगाम् विचिन्वन् तत्रैव प्रभुच्छीलामवलोकमानः कानने तस्मिन् गुप्तगृहस्य द्वारशिलामासादयम् । अथाहं तां शिलामध्यतिष्ठम् । समयेऽस्मिन्निमग्नमासीन्मम मनो गम्भीरविचाराम्भोनिधौ । विचारयन्नेवाहमकस्मादवनितलं चरणेन प्राहरम् । पदाघातेन मदुपवेशनशिला सहसा निरालम्बीभूय मनाग्दूरं स्खलिता । तदधस्तादेकमारोहणमालोक्य सोपानैरवरुह्य गुप्तगृहं प्राविशम् । सकलं गुप्तस्थलमालोकि मया तदीयम् । देवीमन्दिरमपि दृष्टम् । अनन्तरं त्वदधिष्ठितप्राङ्गणपृष्ठवर्तिन्यां कन्दरायां निलीय—' एष किंकर्मुमना ' इति वीक्षितुकामोऽहं स्थितवान् । मुमूर्षुं त्वामवधार्य त्वदभ्यर्णमागत्य त्वामहं मरणान्न्यवारयम् । रणवीर ? अवसानं गतेयं कथा ऽमुत्र । परमेश्वरानुकम्पयाऽद्य फलितं मम प्रयत्नैः । प्रमुदितमिदानीं हर्षेण मम हृदयम् !

सम्प्रति प्रावर्तत प्रेमबाष्पप्रवाहो रणवीरस्य नयनाभ्याम् । अतीवोत्कण्ठया बन्धुमाश्लिष्य—' किं करणीयमग्रे ? ' इत्यप्राक्षीदयम् ।

1 पापघटः । 2 निर्बन्धः—आग्रहं कृतवती ।

चन्द्रसिंह ! वत्स ! गुप्तवेषेण मदन्तिके स्थातव्यं त्वया । केनचिद् युक्तिप्रकारेण योगिराजान्तेवासिनं रणधीरनामानं त्वमाप्याहि । भवगत ननु वत्स ! राजसम्बन्धिनि कर्मणि कौशलज्ञानमावश्यकम् । प्रत्यर्थिवर्गादपि निस्तन्द्रेण निपुणं रक्षणीयम् । श्रुत्वा तदुदीर्यं मौनमालम्ब्याङ्गीचकार चन्द्रः ।

आलपतोरेवानयो रजन्यास्तृतीयः प्रहरोऽतिक्रान्तः । परिवर्तिताः प्रहरिणः । उपवनतरुनीडावलम्बिनां विहङ्गमानां कदम्बकानि मधुरकलरवैः 'समाप्तेव विभातप्राया विभावरी' ति सकलजनेभ्यः सूचयामासुः । चिरकालानन्तरमवलोक्य परस्परमालिङ्ग्य सुखदुःखमयीं घटनामाख्यायोभावपि भ्रातरौ सुखं सुषुपतुः ॥

॥ ७ ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ दयानन्दलहरीसतीर्थ्ये कुमुदिनीचन्द्रे तृतीया कला । ३ ॥

---

# अथ चतुर्थी कला ।

" स्मरराजराजधानी प्राङ्गणलक्ष्मी विलासविहगानाम् ।
शृङ्गारस्कन्नाला हरति न बाला मनः कस्य ॥ "
" दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि ।
इत्यपवादभयादिव हरिणाक्षी [3]वेधसा विहिता ॥ " ( नलचम्पू )
' नैवाश्रितेषु महतां गुणदोषशङ्का । " ( स्फुटम् )
" कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ " ( मेघदूते )

☞ योगिराजोऽस्मद्रहस्यं प्रकाशयिष्यतीति न मातीवाऽऽनन्दो राजनन्दिन्याः कुमुदिन्याः महाराजधानीविनयसिंहस्य चान्तःकरणे । कदा तावत् कालः समुपस्थास्यते; कदा चैव योगिराजो निजोदन्तं निवेदयिष्यतीत्युभयोरेव हृदये भवति महतीयोत्कण्ठा । याव- *[illegible]* 'कीदृशोपमिदं हर्षामृततरङ्गिणी हृदयं तरङ्गयतीति ।'

भाग्यार्थमेव केवलं निर्मितमिदं विश्रामोद्यानं नरेन्द्रेण । [4]अभिख्यानुरूपमेव विश्रामि-जनहृदयानन्दप्रदमिदमुद्यानम् । प्रफुल्लितकमलान्यपकाशोकपनसजम्बुजम्बीरनिम्बकदम्ब

---

१ पृष्ट । 'अथ ऽनुयोगः पृच्छा च' इत्यमरः । २ अक्रमेण । ३ ब्रह्मणा । ४ नामधेयम् 'अभिख्या नामशोभयोः' इत्यमरः ।

कदलीप्रमुखविविधतरवरा विराजन्तेऽस्मिन्नुद्याने। अनेकदेशोपनीतविविधवर्णसुन्दर[1]विहङ्गवृन्दमण्डितानीहानेकानि विलसन्ति [2]जालमन्दिराणि। प्रफुल्लमहसद्दलकमलानुकारिरुचिरमणिमयमुखरमणीय[3]जलोद्गारियन्त्रनलिकालङ्कृतान्तरालाः पदे पदे सहस्रशः प्रोल्लसन्ति [4]स्फटिकाश्मनिर्मिता मनोहरा [5]दीर्घिकावर्तंसिकाः। यासां निर्मलसलिलाभ्यन्तरेषु नीलारुणहरितादिरागरञ्जितवपुषः क्रीडन्ति कोटिशो मत्स्याः। मध्यभागे चास्योद्यानस्य [6]सुन्दरोपलविरचितोऽन्तःप्रदर्शितदर्शनीय[7]कन्दरो जलोत्क्षेपिप्रमयन्त्रमुखनिःसरदमलशीतलतरसलिल[8]निर्झररुचिर[9]शिखरो राजते कृत्रिमगिरीन्द्रः। क्रीडाशैलस्यामुष्य जलधारा तदन्तिकवर्तिन्यां कस्याञ्चन [10]नागवल्लीदलानुकारिण्यां [11]पुष्करिण्यां प्रवहन्ती मुदं जनयतितराम्। यस्यां हंसमयूराकाराः [12]सुपरिष्कृता विभान्ति [13]कतिपयास्तरणयः। अमुष्मिन्नुद्याने विविधस्थलेषु ललितबाललतामण्डपकुलानि कामपि कान्तिं [14]कलयन्ति। आयुष्णकालेऽपि कोऽपि तदभ्यन्तरं प्रविशेद् यदि सद्य एवासौ तदीयातिशीतलतया निद्रापारतन्त्र्यमेवाकलयेत्। समन्तादुद्याने संचरणाय विरचिता स्फटिकमणि[15]कुट्टिममयी रुचिरा मार्गावली। उभयतो मार्गं प्रतिकिञ्चिनान्तरालमायोजिता धवलोपलनिर्मिता[16]आसन्दिकाः। यदुपान्तिकवर्तिकङ्केल्लिवल्लरीवेल्लितवृक्षवलयनीडावलम्बिकोकिलकीरसारिकाकपोतादिविहङ्गवरा निजमञ्जुलकलरवैः समीपस्थासन्दीस्थितानां नृणां हरन्ति हृदयानि। [17]वितत्य निजकलापमण्डनं [19]शिखण्डिमण्डलमात्म[20]ताण्डवै[21]र्हिण्डमानानामुद्यानखण्डे [22]नरप्रकाण्डानां [23]मुष्णाति चक्षूंषि सुतराम्। क्रीडाशैलस्यानतिदूरमेव सुन्दरेन्द्रनीलपद्मरागमरकतमणिमयभित्तिको महार्घश्वेतपाषाणनिबद्धो भव्यप्रासादश्चैकास्ति। क्वचिदवसरे नरेन्द्रचूडामणिरिमं प्रासादं निजचरणारविन्दैरलङ्करोति। अद्य महाराजश्रीविजयसिंहो विलासोद्यानमिदमुपस्थातुमना अस्तीति प्रहरिणः प्रतिकियदन्तरालं स्वकार्यं निर्वहन्ति स्म। प्राप्ते मध्याह्नकाले रमणीयेऽस्मिन्नुद्याने कलहंसगामिन्यस्तिस्रः प्रस्फुरितयौवनास्तरुण्यः समुपस्थिताः। आसां द्वे पुरस्सरे अभूताम्, तयोः पृष्ठे कियदन्तरेणापरागच्छति स्म। ये इमे पुरोगामिन्यौ तयोरन्यतराऽऽसीद् राजनन्दिनी कुमुदिनी। अपरा चेयं सेनापतिदुहिता प्रियम्वदा नाम तत्सखी। पापीयं तयोरनुगामिनी सा तु नरेन्द्रबालाया मुग्धा दासी।

आसीत्पञ्चदशवर्षेयं मृदुतन्वी नृपनन्दिनी। सेयम्—[24]वदनेन शारदचन्द्रमण्डलम्,

---

१ पक्षिसमूहः। २ पक्षिनिवासार्थं रचितानि सूक्ष्मलोहजालिकागृहाणि। ३ नानाविधजलोत्क्षेपधारायन्त्रम्। ‘फुवारा’ इति भाषा। ४ धवलपाषाणकृताः। ५ वापीश्रेष्ठाः। ६ उपलः पाषाणः। ७ ‘दरी तु कन्दरो वा स्त्री’। इत्यमरः। ८ ‘प्रवाहो निर्झरो झरः’। ९ शृङ्गम्। १० ताम्बूलवल्ली। ११ पुष्करिणी—खातमल्पं सरः। १२ सुशोभिता। १३ नौका। १४ धारयन्ति। १५ ‘कुट्टिमोऽस्त्री निबद्धा भूः’। १६ आसनविशेषाः। १७ प्रसार्य। १८ बर्हभूषणम्। १९ मयूरवृन्दम्। २० नृत्यैः। २१ परिक्रमताम्। २२ जनश्रेष्ठानाम्। २३ हरति। २४ मुखेन।

नेत्राभ्यां मृगलोचने, दन्तकान्तिभिः [1]कुन्द[2]कुड्मलद्युतिम्, [3]कुन्तले [4]रोलम्बकदम्बकम्, हास्येन चन्द्रिकाम्; भ्रूयुगलेन [5]मदनचापद्वयम्, [6]दन्तच्छदेन बिम्बफलम्, [7]कुचद्वन्द्वेन चक्रवाकमिथुनम्, स्वरेण [8]कलकण्ठकलरवम्, [9]श्रोणिभारेण [10]वनराजकटितटम्, ऊरुमण्डलेन [11]रम्भास्तम्भम्, [12]काञ्चनञ्च [13]कायकान्त्या तिरस्करोति-इति सर्वाकारहृदयङ्गमेयं धन्या कापि देवकन्या ।

अरुणकौशेयाम्बरं परिहितमिदानीमनया । अस्या हि महार्हललितमुक्तावलीमण्डितः कण्ठः । रमणीयरत्नखचितवलय[14]रुचिरौ सुकुमारौ करौ । कमनीयकर्णिका[15]युगलचोचुम्ब्यमानं कपोलयुगलम् । [16]प्रवालहीरकमणिखचितकनककुसुमिकालङ्कृता नासिका । मञ्जु[17]मञ्जीरशिञ्जनमञ्जुलं चरणयुगलम् । शिरीषकुसुमसुकुमारञ्च वपुः । एतस्या मुखमण्डलं निष्कलङ्कमानवप्रतिबिम्बतामिव विभराम्बभूव । कमनीयमिद[18]माल्यमिदानीमस्या भरुणकिरणता–पेतातितराम[19]रुणिमानं बभार । ततोऽपीयं [20]रुचिरपत्रभङ्गमकरिकाचर्चितकपोलेति लावण्य[21]रसनिर्झरिणीमेनां सुन्दरीमवलोक्य को नु मुह्येत नरवरः ? नूनमियं सुन्दरबाला शान्तात्मना वेधसैकान्तस्थले निरमीयतेति मन्ये एव कोऽपि व्याहरेद्युष्मन्तो भवत. ? यादृशी बहिरियं सर्वाकाररमणीया दृश्यते ततोऽप्यधिकमियमतिमनोहराऽभ्यन्तरे ।

आसीदियं सुशिक्षिता नरेन्द्रनन्दिनी गुर्जरदेशभाषायाम् । देववाण्यामपि परं निष्णाता । शिक्षणक्रमोत्रमेणेयं सद्गुणवती बभूव । संगीतविद्यायान्तु [22]लब्धवर्णेयम् । निजराजमहालये[23]चन्द्रशालामुपविश्य यदेयं वीणारवेण [24]स्वमधुरकाकलीं मेलयन्ती मञ्जुलं गायति स्म तदा तस्या गानमाधुर्येण समीपवर्तिनो जनाः पशुपक्षिवर्गोऽपि सर्वो मूर्च्छित इवाजायत । आसीदियमेकैव केवलं महाराजस्य दुहिता । अतो महाराज एनां पुत्रादेकस्मादप्यधिकं मेन्यत पैप्रच्छत् । कुमुदिन्यपि पित्रोरादेशमालां वहति स्म शिरसा । कुमारीदशायामेवाभवद्यापि राजकुमारी । अजितदुर्गाधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजश्रीचन्द्रसिंहराजकुमारात्ते कोऽप्यस्या अनुरूपोऽन्यो वर एव नासीत् । परं हन्त ? राजकुमारोऽय नाधुनिष्टे साम्प्रतमाम्भनगरे । क्वाऽऽस्ते सोऽयमिति जानन्त्येव प्रियशाद्यपिताः ।

राजकुमार्याः प्रियसहचरीयं प्रियम्वदाऽपि [25]तदनुरूपमेव परमसुन्दरी सुगुणशालिनी चासीत् । समवयस्के इमे वयसे शिक्षामोद्याने पर्यटन्त्यौ [26]धारायन्त्रान्तिकवर्तिन्यामेकस्यां

1 कुन्दं माघ्यं कुसुमम् । २ ' कुड्मलो मुकुलेऽस्त्रियाम् । ' ३ केशैः । ४ रोलम्बः-भ्रमरः । ' इन्दिन्दिरोऽलौ रोलम्बो द्विरेफः ' इति हैमः । ५ कामधनुः । ६ ओष्ठेन । ७ स्तनयुगेन । ८ कलकण्ठः कोकिलः । ९ श्रोणिः कटिः । १० वनराजः सिंहः । ११ कदलीस्तम्भम् । १२ सुवर्णम् । १३ कायः शरीरम् । १४ वलयः कटकः । १५ कर्णिका कर्णभूषणम् । १६ हीरकनिबद्धनासाभूषा । १७ मञ्जीरः नूपुरः । १८ मुखम् । १९ अतिशोभमानम् । २० कपोले कस्तूरीचित्रः पत्ररचनाविशेषः । २१ नदीम् । २२ निपुणा । २३ विचक्षणा । २४ चन्द्रशाला शिरोगृहम् । २५ काकली-सूक्ष्मरवः । २६ अद्भुतम्-सदृशम् । २७ धारायन्त्रम्-कृत्रिमनिर्झरम् ।

सुन्दरासन्दिकायामुपविश्य सानन्दमालपताम्। अत्युष्णतया ग्रीष्मकालस्य तयोरनुगामिनी दासी मयूरपिच्छैर्वीजयामास सहचरीयुगलम्। आलपन्त्योरेव तयो. कुमुदिनी प्रियम्वदामाह- ' सखि ! योगिराजोऽद्य निजवृत्तान्तमावेदयिष्यति। तदातिहर्षो भविताऽस्माकं तदाकर्णने। कियानयं परोपकारी ननु ? निजप्रियेण चन्द्रेण त्वां संयोजयिष्यामीति प्रतिज्ञातममुना। सखि ! नूनमयं कोऽपि महानुभाव इति प्रत्येमि।'

' प्रियम्वदा। आम्, सखि ! ममाप्येवमेव प्रतिभाति। तद् वपुषः सौन्दर्यम्, तद् विशालं ललाटम्, मनसस्तद् गाम्भीर्यम्, तन्माधुर्यं वचसः, सा च कापि 'भावणभङ्गी- इति' सर्वमपूर्वमिवामुष्य महानुभावस्य। सखि ? किमर्थमीदृक् सुन्दरः पुरुषो योगिपदमलञ्चकार ?।

कुमुदिनी। प्रियम्वदे ! विचिन्तयन्त्यापि तन्नावगम्यते खलु मया ? उपस्थितेदानीं तदागमनवेला। आगते तस्मिन् वार्तान्तर एव त्वं तमनुयुञ्जीथा[1]। किमयं तदानीमुत्तरं वितरिष्यतीति समाकर्णयिष्यामो वयम्। तातचरणानामपि समुपस्थितोऽयमागमनसमयः।

इत्थमालपन्त्योरेवैतयोर्नयनसरणिमुपेयिवानभिमुखमागच्छँश्चन्द्रसिंहः। तमवलोक्य जगाद कुमुदिन्या- ' पश्य पश्य-प्रियम्वदे ! योगिराज एव समायाति पुरतः। कस्मिन्नपि विचारे निमग्नोऽयमिति प्रतीयते। एहि, सखि ? वयमस्य जलोद्गारियन्त्रस्य पश्चान्निलीय- ' किमयमालपति ? ' इति शृणुम इति विचार्योऽपि युवतयो धारायन्त्रान्तर्हिता भूत्वा स्थिताः।

विचरन्नयं चन्द्रसिंहस्तदेव स्थानमुपगम्य तामेवासन्दिकामधिष्ठाय समन्ततश्चक्षुषी निक्षिप्य मनसैवमालपत्-' अहह ! प्रभो ? अगम्योऽयं तव महिमा। अल्पीयस्येव समये कियन्तो घटना घटिताः। कुतो ममेहागमनं नगरे ? कुतश्चेदं मे भ्रातृदर्शनम् ? धन्यं ते विभुत्वम् ? विभो ? कुमुदिनि ? विचित्रोऽयं तवापि प्रेमा। प्रियतमे ? नूनं रत्नमसि त्वमपि ससारेऽस्मिन् ? सुन्दरि ? भाग्यशाली भवेयमहं त्वामासाद्य ! परमियद्वधि किमिति कोऽपि नायातः ? अद्य तु मयाऽऽत्मीय पूर्ववृत्तं निवेदनीयम्। अये ? कियन्तमतुलमानन्दमाकलयिष्यति कुमुदिनीयं मामभिज्ञाय ? महाराजश्रीविजयसिंहस्यापि हृदयाम्बुनिधिरानन्दोर्मिभिराप्लुतो भविता ?' इति विचिन्त्य ततः समुत्थायेतस्ततः संचरितुमारेभे। योगिराजस्यालापं श्रोतुमनोभिर्धारायन्त्रान्तर्निलीनाभिस्तरुणीभिरताभिर्यदा चन्द्रभाषणरहस्यं नावागम्यत तदा ततो बहिर्निर्गम्य चन्द्रसिंहचरणारविन्दपवित्रस्थानमागम्यत। कुमुदिन्या चन्द्रं प्रणम्य- ' योगिराज ? प्रियसखीयं मे प्रियम्वदा भवन्तमभिवादयते ' इत्यभ्यधायि।'

चन्द्रसिंहः। ( विहस्य। ) भद्रे ? भद्रं भूयाद् भवत्योः। कदाऽत्र समागतवत्यौ भवत्यौ ? कथमद्यापि नोपस्थितास्तातचरणाः ?।

---

१ आगताशैली। २ धारायिष्यति।

कुमुदिनी । आगतयोरावयोरल्पीयानेव कालो जातः । अधुनैवोपस्थास्यते पितृचरणैः । अथ तु स्वीयं पूर्ववृत्तं श्रावयितुं प्रतिश्रुतं श्रीमताऽस्मभ्यमिति स्मर्यते न वेति भवता ? योगिराज ! अत्र भवानतीव चतुर इति मे भाति ।

प्रियम्वदा । ( मध्य एव । ) सखि ? न शक्नोषि खलु त्वमत्रभवन्तमभिज्ञातुम् ? लप्स्यते यदि नामामुना मादृशी; विज्ञास्यते तदानीमेवात्रभवता ? परं को नु खलु जानीयाद् यदेवमत्रभवान् योगिवेषेण परिभ्रमतीति ? क्षम्यतामयमविनयो योगिराजेन । पाणिग्रहणमङ्गलं विधास्यते न वेति निवेदयतोऽनुयुज्यतेऽत्रभवाननया ? ।

चन्द्रसिंहः । ( विहस्य । ) प्रियम्वदे ! न जानीषे खलु त्वम्-किमिदं पाणिग्रहणमिति । नेदं क्रीडनकं बालस्य । इदानीन्तने समये जगति यादृशं पाणिग्रहणं भवति तस्यान्ततः कीदृशी परिणतिर्जायते- इति न विज्ञायते खलु त्वया ? हन्त ? यत्रैव विलोकयामि तत्र एवाक्रन्दध्वनिर्निशम्यते । अहो ! प्रारम्भे यदा विवाहकौतुकं सम्पद्यते तदा [1]समुद्वेलते सर्वेषां हृदि [2]मुदम्बुनिधिरतिवेलम् । परं पश्चादिदं पाणिग्रहणमङ्गलं विषरूपेण परिणमति । [3]दम्पत्योर्मिथो[4] हृदये [5]सौहार्दाभावादनिशं गृहेषु कलहाङ्कुराः प्रादुर्भवन्ति । समुद्भवति चान्तेऽतीवदुष्परिणामः । नाहं कर्तुमना ईदृक् पाणिपीडनमङ्गलम् । नैष्ठिकब्रह्मचारिणा भूत्वा सच्चिदानन्दकन्दजगदीश्वरोपासना विधेयेति मम सिद्धान्तः ।

प्रियम्वदा । यथार्थमभिधीयते योगिराजेन । कोऽपि विलक्षणः पुरुषोत्तमो भवान् । अननुरूपमिव ममाधिकभाषणं विदिताखिलधर्म[6]मर्मणि समधिगतपरमात्मध्यान[7]शर्मणि भगवति । परमिदन्तु विज्ञप्येव भवन्तो गृहिणीं विना स्मशानं गृहमिति । भवादृशा महापुरुषा यदि गृहं त्यजेयुस्तदाऽस्मादृशीनामधमानामबलानां का दशा भविष्यति ? योगिराज ! न गोपनीयं किमपि हृदि । यदेव स्याद् हृद्गतं निवेदनीयं तदखिलं श्रीमता ।

चन्द्रसिंहः । प्रियम्वदे ! संसारसमुद्रेऽस्मिन् पुरुष[8]प्लवस्य कलत्र[9]मरित्रमिव वर्तते । प्लवस्यारित्रमिव नास्य कलत्रमत्यावश्यकम् । स्त्रीजातिरधमेति यदु गण्यते न तत्तथा । गृहराज्ये गृहिणी परममन्त्रिणीव । अमूल्यरत्नानां [10]खनिरियं नारी । [11]यत्कुक्षितो मर्यादापुरुषोत्तमश्रीरामकृष्णयुधिष्ठिरप्रतापशिवराजप्रमुखा वैदिकधर्मरक्षाकाङ्क्षिणो धर्मपरायणा वीराग्रगण्या, पुण्यवन्तो महानुभावा महर्षयश्च समुत्पन्ना. सेयं स्त्रीजातिः कथमधमा गणनीया ? प्रियम्वदे ? परिणेष्याम्यहम् । उपसीदति वेला । तव सहचारिण्या कुमुदिन्या यथा चन्द्रो न दृश्यते तथैव मदीयहृदयानन्दिनी चकोरिकाऽपि सम्प्रति भ्रान्तेव प्रतीयते । तस्या आगमनीय तां सुखयितुमिदानीमल्पीयानेव कालोऽवशिष्यते ।

चन्द्रनामश्रवणसमकालमेव कुमुदिन्या हर्षेण रोमाञ्चितान्यङ्गानि; दुःखेन परिप्लुतमिव

---

१ संप्लवते । २ हर्षसमुद्रः । ३ जायापत्योः । ४ परस्परम् । ५ सौहार्दम् प्रेम । ६ मर्म-तत्त्वम् । ७ शर्म-सुखम् । ८ प्लव. स्वल्पनौका । ९ अरित्रम्-जलनिर्गमनपात्री । 'अरित्रं केनिपातकः' । १० खनिः-आकरः । ११ कुक्षिः गर्भः ।

हृदयम् । युगपदानन्दशोकाविर्भावेन चानया मुक्तानि मौक्तिकानीव नयनाभ्यामश्रुबिन्दुवृन्दानि । दुःखितमनसा चेयं विरचिताञ्जलिर्योगिराजवेषं चन्द्रं जगाद- ' योगिराज ? स्वप्रियेण चन्द्रेण त्वां मेलयिष्यामीति यत्प्रतिपन्नं श्रीमता; निष्फलं भविता किमु तत् ? महानुभाव ? न कदापि निरर्थं भवति वचनं सताम् । भगवन् ? संयोजयतु मां निजहृदयेश्वरेण श्रीमान्; शरणं प्रपन्नाऽस्मि भगवताम् ' इति निगद्य कुमुदिनी चन्द्रचरणयोर्निपतिता ।

उत्थाप्य निजकरेण तां राजकुमारीं चन्द्रोऽभणीत्- ' कुमुदिनि ? किमिति ग्लपयसि व्यर्थमात्मानम् ? सर्वथा मङ्गलं करिष्यति भगवानखिलमङ्गलमूलमहेश्वरः । स्वल्पेनैव कालेन स्वयमेव चन्द्रस्त्वत्समक्षमुपस्थाता । नास्ति निष्पन्नं मे वचन निष्फलम् । जानास्येव खलु- " निजवचनपालनाय क्षत्रियबालकैः स्वप्राणा अपि परित्यक्ता ' इति । ' प्रचलति यदि मेरु शीततां याति वह्निर्न चलति खलु वाक्यं सज्जनानां कदाचित् । ' इति सत्यमवेहि । पवित्रहृदये कुमुदिनि ? वचोभ्रष्टानां सर्वाण्येव धर्मकर्माणि विफलतां यान्तीति विश्रब्धं जानीहि ' इति ।

कुमुदिनी । धन्योऽसि, क्षत्रियकुमार ? धन्योऽसि । भवन्मुखारविन्दाच्चिस्रुतैर्मधुरसान्त्वनवचनैः शान्तिमापन्नं मम हृदयम् । मदीयचन्द्रेण मां संयोजयिष्यति भवानिति दृढं विश्वसिमि । योगिराज ? नाहं विस्मरिष्यामि कदापि श्रीमतामिमं परममुपकारम् ।

एतदालापान्तराल एव क्रूरसिंह. प्रच्छन्नं विलासोद्यानं प्रविवेश । निलीयमान एवाऽयं क्रूरो यत्र कुमुदिनीचन्द्रौ समालपतां ततः किञ्चिद् दूरमुपगम्य स्थितवान् । समालपन्तौ कुमुदिनीचन्द्रौ विलोक्यानितरामाश्चर्यचकितोऽभवत् । मनसा चैव विचारयाञ्चकार- ' अये ? किमिदमवलोकयामि ? अपि वञ्चयतो मां निजलोचने ? ( विमृश्य । ) मा मैवम् ? स एवायं मद्भुजपञ्जरात्कुमुदिनीं मोचयिता ममोग्रवैरिहतकः ? एहि । निलीयमान एवाहं तदीयवार्तालापं शृणोमि ' इति ।

अथ तदन्तिके वर्तमानां प्रियम्वदां विलोक्य कलुषहृदयोऽयं मनसि व्यचिन्तयत्— ' अहह ! कियान् मङ्गलमयोऽयं समय. ? युगपत्सुन्दरीयुगलं लभेयाहमिदानीम् । सद्य एवाहममुं पुरुषं सुरलोकं प्रेषयामि ' इति निगद्य निजकक्षगुटिकायां[1] स्वहस्तं प्रावेशयद् भुशुण्डिकां निष्कासयितुम् । परं नासीदिदानीं भुशुण्डिका तत्कक्षगुटिकायाम् । भुशुण्डिकां निजकिङ्करसकाशाद् गृहीतुं विस्मृतवानयम् । अतो मनस्येव जल्पितुमारभत क्रूरः- ' कियानहं मूढो यदात्मभुशुण्डिकामपि सहादातुं व्यस्मरम् । किमिदानीं करोमि ? कोऽपि नास्ति मदुपकण्ठे । अन्यथा साम्प्रतमेव यदि स्थितस्य स्वमूल्यस्य समीपाद् भुशुण्डिकामानेतुमकथयिष्यम् । कोऽप्यन्यो जनोऽपि न दृश्यते । किमिदानीं करोमि ? ( विमृश्य ) भवतु । साम्प्रतमिहैवान्तरितस्तिष्ठामि । कोऽपि समागच्छन्नितो दृश्येत चेत्तं युक्त्या पराधियित्वा स्वभु-

1 कक्षगुटिका-' जेब ' इति प्रसिद्धा ।

गुप्तिकामानेतुं कथयिष्यामि ' इति । अनन्तरमयं दुरात्मा— 'पश्चादेवाहं स्वमृगयां लक्ष्यीकरिष्यामि ' इति समवधार्य तस्य क्रीडाशैलस्य कन्दरायामन्तर्धाय सावहितः मामिष्यमाणमध्यैषीत् ।

'किमद्यापि पितृचरणा नोपस्थितवन्तः ?' इति पृष्टं प्रियम्वदया ।

कुमुदिनी । कथं विज्ञायेत ? कस्मिंश्चिदपि राजकर्मणि व्यापृता भवेयुस्तातचरणाः । तेषामागमनवेला तु संजातैव ।

अत्रान्तरे शङ्खध्वनिरश्रूयत । प्रविवेश महाराजश्रीविजयसिंहो विलासोद्यानम् । महाराजं प्रणेमतुः कुमुदिनीप्रियम्वदे । ताभ्यामाशीर्वादं दत्त्वा समलञ्चकारैकामासन्दिकां महीवल्लभः । अथ चन्द्रः प्रागमन्महाराजम् । महाराजोऽपि किञ्चिदानम्य कुशलं पृष्ट्वा स्वसमीपवर्तिनी-मासन्दीमधिष्ठातुं निर्दिदेश । निषण्णे तस्मिन् कुमुदिनीप्रियम्वदे स्वस्थानमलञ्चक्रतुः । क्षणं [1]जोषमासन् सर्वे । अथाब्रवीन्महाराजः— ' योगिराज ? अस्मत्प्रासादे निवसतः श्रीमतो-ऽद्य जातान्यष्टदिनानि । अद्यैव भवतामात्मरहस्यं प्रकटयितुं स्वीकृतवानिति स्वकथना-नुरूपं निजवृत्तमावेदयिष्यति श्रीमानित्याशास्महे वयम् । अतीवोत्कण्ठाऽस्माकं मनसि भवदीयवृत्तान्तश्रवणस्य ।

चन्द्रसिंहः । ( सविनयम् । ) आम्, राजन् ? पूर्णान्यत्रागतस्य ममाष्टदिनानि । अद्याहं भवद्भ्यः सकलमात्मरहस्यं निवेदयिष्यामि । परं राजेन्द्र ? वार्तान्तरे न प्रष्टव्योऽहं केनापि ' इति श्रीमन्तमभ्यर्थयेऽहम् ।

महाराजः । समीचीनम् ? शान्तचित्तमाकर्णयिष्यामो वयं भवद्वृत्तान्तम् ।

चन्द्रसिंहः । राजेन्द्र ? अजितदुर्गराजधानीमनुलक्ष्याहमात्मवृत्तं कथयिष्यामि । तत एव मदीयं रहस्यं ज्ञास्यति देवः ।

महाराजः । वरम् ! कथनीयमिदानीमात्मवृत्तम् ।

योगिराजवृत्तान्तश्रवणे सर्वेषामतीवोत्कण्ठाऽभवदिति सर्वेऽपि दत्तकर्णा आकर्णयाञ्चक्रुः । चन्द्रसिंहः कथयितुमुपाक्रमत— ' अस्तीतः शतक्रोशानितदूरे रमणीयमेकमजितचरमजित-दुर्गाख्यं विशालं राजनगरम् । यत्र धावितुर्दर्शनीयपुलिनतोयसततरमणिडनीरा शीतलतर-विमलनीरा गम्भीरा स्वविपुलवारिविहितजलचरजनपुलिनप्रमुदा पुष्पभद्रा नाम्नी नदी प्रवहति । यत्राधिवसति स्म भूमिहृदयरञ्जनचतुरो नीतिनिपुणो धीरतरो महाराजश्रीकेसरीसिंहनामा नृपवरः । समये तस्मिन्नरकण्टकाधिपतिर्महाराजश्रीरणजितसिंहो विजित्य परराज्यानि [2]स्वायत्तीकरोति स्म । सकलराष्ट्रैकचक्रे विक्रमशालिनो रणजितसिंहनृपचक्रवर्तिनो [3]विजुम्भो महापराक्रमः । [4]शिशिरागमेऽयं वीरसमागमो गम्यते । बहूनि राज्यानि विजित्य [5]सौ महीश्वरः । तत्रत्याः सर्वेऽपि नरपतयस्तस्य [illegible] कार्येषु संसृताः । परं परमेश्वरकृपया

---

१ जोषम्—तूष्णीम् । २ स्वाधीनः प्रजाः । ३ स्वाधीनानि कुरुते स्म । ४ मन्दके । ५ स्थितः । ६ [illegible] स्थिरः । ७ [illegible]—[illegible] दिन. । ' [illegible] ।'

महाराजश्रीकेसरिसिंहस्य बाहुबलेन चायमजितदुर्गपर्यन्तं नागन्तुं शशाक । महाराजश्रीकेसरिसिंहस्य राज्ये सर्वत्र शान्तिदेवी विचचार । सानन्दमासीत् प्रकृतिमण्डलम् । धर्मपरायणाः पुरुषार्थशालिनश्च यत्रत्याः पुरुषा बभूवुः । किम्बहुना-राज्यमिदमतीव सुखकरं सर्वथा । ' एतावदुक्त्वा चन्द्रो दुःखेन दीर्घं निरश्वसत् ।

तत्रान्तर्हितः शूरसिंहस्तु चन्द्रोदीरितं वृत्तान्तमाकर्ण्य विचिन्तयामास ' अये ? अजितदुर्गस्यायं वृत्तान्तो ननु ? कोऽयं स्यादेतद्वृत्तान्तनिवेदक ? संशयितोऽस्मि । उद्विजते मम हृदयम् ' इत्यात्मनैवालप्य पुनरवधायाशृणोत् ।

पुनरात्मवृत्तमारभताग्रे वक्तुं चन्द्रसिंहः-' महाराजश्रीकेसरिसिंहस्य द्वौ तनयावभूताम् । चन्द्रसिंहस्तयोर्ज्येष्ठराजकुमारः[1] यवीयाँश्च रणवीरो नामासीत् । अथैकदा राजसभासनासीने महाराजे-प्रविश्यान्यतम प्रतीहारो नरेन्द्र व्यजिज्ञपत्-' प्रभो ? बहिः कश्चनैक स्थविरो निजतनयेन सम समुपतिष्ठते । आकृत्याऽयं कोऽपि राजवंश्य प्रतीयते । सच प्रभुदर्शनमपेक्षते' इति । ' सुखं प्रवेश्यतामयम् ' इति प्राप्तप्रभुनिदेशः क्षणेनैव तनयानुगतं वृद्धपुरुषं राजसभामुपस्थापयामास प्रतीहारः । सादरं प्रणम्यैव वृद्धो महाराजमेकतस्तस्थौ । अथापृच्छदेनं नरेन्द्रः -' कस्त्वम् ? किमर्थञ्चात्र नगरे तवागमनम् ? मुखाकृत्या तु भृशं दुःखाकुलोऽसीति प्रतीयसे । कथयास्मद् दुःखनिदानम् ? अपाकरिष्याम्यहं तदिति । ' शान्तिप्रदमिदं वचनं निशम्यैव वर्षीयान् बभाषे- 'दयालो देव? सूर्यसिंहाभिधोऽहमतिमन्दभागधेयोऽस्मि । अयञ्च ममात्मज शूरसिंहो नामेति । ' तद् वचनमाकर्ण्याब्रवीन्महाराजः - ' किं सूर्यपुराधीश्वरः सूर्यसिंहो भवान् ? कथमस्मिन् वेषे ? सत्वरं निवेद्यतां यदेव घटितम् । किं भवद्राज्यमपि हृतममुना वैरिहतकेन ? इत्थमेव मया प्रतीयते ' इति ।

सूर्यसिंहः । आम् । श्रीमन् ? तथैव संवृत्तम् । मदीयमतिविश्वस्तं [2]बलं रणे निपातितम् । विजयेन मया संवृता पुरद्वारः । अन्ततो भित्त्वा दुर्गभित्तिमरातय प्रविष्टा नगरम् । मदीयमवशिष्टबलमयुध्यत शत्रुसेनया । परमधिकाभि [3]सपत्नवाहिनीभिरहन्यतास्मदीयसैन्यम् । शत्रुर्विजिग्ये । अरातिहस्तगमनापेक्षया तत पलायनमुचितमवधार्यावां [4]गुप्तवाटेन बहिर्निरगच्छाव । परिभ्रमन्तौ सूर्यपुरतो दशयोजनविदूरमागम्यावां कस्याचन धर्मशालायां निवासमकृष्वहि । तत्र मुहूर्तं विश्रम्य स्वराज्यसमाचारं विज्ञातुकामो बहिर्निर्गम्याहं लोकमुखादश्रौषम्-' मदीयनियागरस्य प्रलयं व्यधादराति । प्रासादमभिसाद् विधाय तत्रत्यमखिलं द्रव्यमलुण्टदरिः । मत्प्राणप्रिया महिषी सङ्ग्रामे निहतं मामवगम्य सतीभूता । शत्रुणा च मम निग्रहणाय परितो दूता विसर्जिताः ।' इति । इदममङ्गलं वृत्तमुपश्रुत्य चिन्ताकुलमनस्कोऽहं धर्मशालामुपगम्य रहसि समुपविश्य व्यचिन्तयम्-' इदानीमहं कस्य बलशालिनं राजानं शरणमुपपद्य सेविष्ये । प्राप्यावसरमरातिं शत्रुमभियोक्ष्ये । अमरकण्टकाधीश्वरस्य कोऽपि प्रतिद्वन्द्वी नरेन्द्रो नारोहति मे स्मरणसरणिम् । चिरं विचिन्तयतो मे श्रीमानेव तदनु-

१ पे दम् । २ न्त्रद । ३ रोगाभि । ४ घ टेरमार्गेण । ५ पदतीम् ।

गुणविक्रमशाली नरेन्द्र इति विभाव्य श्रीमच्चरणशरणमुपगन्तुं मतिर्जाता। शरणागतं रक्षिताऽग्रभवानित्याशासे।

केसरिसिंहः। मोद्विजेथाः ! सूर्यसिंह ! शरणागतपरिपालनं हि क्षत्रियाणां परमो धर्मः। तदुभावपि भवन्तौ मदीयराज्ये सुखेन निवसताम्। भवन्तमस्मत्सैन्ये सैनापत्ये नियुनज्मि। भवत्तनयञ्चामुमहमुपसेनापतिं करोमि। सत्यवसरे भवत्प्रसार्थिनं तदीयकर्मफलमास्वादयितास्मो वयम्।

सूर्यसिंहः। कृपालो राजन् ! चलवदुपकृतोऽस्मि महाराजेनाहम्। कथमहमानृण्यमुपयास्यामि श्रीमदुपकारस्यामुष्य। मङ्गलं तनोतु श्रीमतां परमेश्वरः। आवामुभौ कृतज्ञतया सेविष्यावहे भवन्तम्। इत्थं तौ जनकतनयौ अजितदुर्गराजधान्यामूषतुः। कियद्वर्षानन्तरं [1]वर्षीयानेष सूर्यसिंहः पञ्चत्वमाप। यावज्जीवमयं भक्त्या सम्यगुपाचरन्नरेन्द्रम्। तन्मरणोदन्तं निशम्य भृशं दुःखितोऽभवन्महाराजः। एतद्घटनानन्तरं चिरकालेन रहसि समाहूयामात्यमवादीन्महाराजः 'अमात्यवर्य ! पश्य–अहमिदानीमशीतिवर्षदेशीयोऽभवम्। न ममास्ति विश्वासो जीर्णकलेवरस्य। तत्रानुमतिश्चेदहं स्वसमक्षमेव राजकुमारचन्द्रसिंहस्य राज्याभिषेकं कर्तुमिच्छामि। पश्य, चन्द्रसिंहस्यापि प्रत्यङ्गं तारुण्यं स्फुरति। देशान्तरेभ्यो नरेन्द्रकुमारीणामामन्त्रणमपि तदर्थं मुहुर्मुहुरायाति। परं चन्द्रानुगुणा कापि राजकन्यैव नारोहति मम हृदयम्। श्रूयते किल विजयनगराधिपतेः कन्या कुमुदिनी नामानुरूपा चन्द्रस्येति। अनुमन्यसे चेदिदं कार्यद्वयमिदानीं द्रुतमेव निर्वर्तयामीति।'

'सम्यगामन्त्रितं देवेन। तद्राजपुरोहितमाकार्य शुभमुहूर्तं निश्चित्य महाराजविजयसिंहस्य सन्निधौ राजकन्यायाचनाय पुरोहितं प्रेषयाम' इति समुवाच प्रधानपुङ्गवः। प्रधानानुमत्या महाराजो राजपुरोहितमाहूय निवेदयामास तं सकलं वृत्तमिदम्। तन्मङ्गलकार्यसम्पादनायासौ पुरोधा वसन्तपञ्चमीदिनं शुभं विज्ञापयामास। ततो महाराजकेसरिसिंहेन महाराजविजयसिंहसमीपे राजकन्यायाचनार्थं राजपुरोहितः प्रहितः। महाराजश्रीविजयसिंहो राजकुमारश्रीचन्द्रसिंहाय स्वकन्याप्रदानमङ्गीचकार। अल्पेनैव समयेन तं मङ्गलसमाचारमादाय राजपुरोहितोऽजितदुर्गनगरमुपागम्य महाराजाय न्यवेदयत्।

आसीद् दूरे सम्प्रति वसन्तपञ्चमी। तत्र पूर्वमेव नगरे समारब्धाः समारम्भाः। अस्मादे नगरेऽपि सकले [3]कारवरा विविधस्थानेषु शोभां विधाय स्वकौशलं दर्शयामासुः। एतस्मिन्नन्तर एवातीवैका [4]हृदयोद्वेगिनी भयङ्करी घटना घटिता।' इत्युदीर्य क्षणं मौनमाकलयाञ्चकार चन्द्रः।

विजयसिंहः। राजकुमार ! सर्वं वृत्तान्तमनु महाराजकेसरिसिंहं मायानुमन्यन्ते। को नु खलु सम्बन्धोऽस्य वृत्तान्ते भवतः ?

'सपुरस्ताद् विज्ञास्यते' इति संक्षेपेणोक्त्वा पुनरग्रे वक्तुमारभत चन्द्रसिंहः– 'सूर्यपुरा-

१ अतिवृद्धः। २ एकान्ते। ३ चित्रकारिणः। ४ मर्मभेदिनी।

धीशितुः सूर्यसिंहस्य मरणानन्तरमस्य पुत्राय क्रूरसिंहाय महाराजश्रीकेसरिसिंहो राजनगरकोट्टपालपदवीमर्पयामास । दुष्टहृदकः क्रूरसिंहोऽयमतीव नीचप्रकृतिरासीत् । दृढभक्तोऽसौ चण्डिकादेव्याः । बाल्येऽयं कस्यचन योगिनः सकाशादशिक्षत साधारणतन्त्रविद्याम् । स्वच्छन्दमाचरदयं नगरे । येनास्मादतिसंत्रस्ताः प्रजाः । एकदा तुरङ्गमारुह्यासौ नगराद् बहिः सरोवरतीरमगमत्पर्यटितुम् । दैवयोगेन तस्य सरससरस्तीरेऽजितदुर्गनगरश्रेष्ठिनः [1]स्नुषा स्वसखीभिः समं पर्यटन्ती समुपस्थिता । नयनगोचरीकृत्य तामयं क्रूरसिंहो मदनशरताडितः सद्यएव तां निश्चिकाय । तदनु तुरङ्गमं कशया प्रहृत्य धावमानेनैव वाजिना तस्या अन्तिकमुपगम्य तां तरुणीं निपुणतया पाणिना गृहीत्वा हयपृष्ठमारोप्य पलायतासौ । तदनुगामिन्यः सहचर्यस्तु समाक्रन्दन्त्य एव गृहं प्रगम्य— ' कोऽपि दुरात्मा युवतिमेनामपहृत्य पलायितवान्' इति नगरश्रेष्ठिनं न्यवेदयन् । वृत्तान्तमिममुपश्रुत्य नगरश्रेष्ठिनो निकेतने हाहाकारोऽजनि । स्नुषागवेषणार्थञ्च परितः प्रेषिता प्रेष्याः ।

इतोऽयं क्रूरसिंहस्तां [2]वनितामादाय निर्जनपथेन [3]निजसदनमाससाद । ललनारत्नमिदं निजचन्द्रशालामुपनीय चायं समुपभोक्तुमियेष; परमुच्चकुलप्रसूता युवतिरियममुमतिमात्रं तिरस्कृतवती । समयेऽस्मिन् कनिष्ठराजकुमारो रणवीरस्तदीयनिकेतनवर्त्मना गच्छन्–'एहि, इयद् दूरं यदागतोऽहं क्रूरसिंहं साक्षात्कृत्य गच्छामि' इति मनसैव विचार्यासौ क्रूरसिंहसदनं प्रविवेश । क्रूरो गृहद्वारं विधातुं विस्मृतवानिति रणवीरोऽनायासेनाभ्यन्तरं प्रविश्य तं विचिन्वन्नेव चन्द्रशालामुपययौ । शुश्रावायं तत्र किमपि कोलाहलजातमिव । गवाक्षेण निपुणं निरीक्षमाणेऽयं तस्या अबलाया उपरि बलात्कारं कर्तुं प्रवर्तमानमिव क्रूरसिंहं ददर्श । 'पामरोऽयमवश्यं मम शीलभङ्गं विधास्यति ' इति भिया सा स्वहस्तेनैवात्मकण्ठमाघुट्य पश्यत एव तस्य निजप्राणान् विससर्ज । गतजीवितामिमामवलोक्य आत्महतकोऽयं भयेन वेपमानो निजपापं गोपायितुमना धैर्येण तस्या मृतकलेवरं स्वकरवालेन शकलीकृत्य भूमावाच्छादयितुमारेभे । क्षणमात्रेणैवेदं वृत्तम् । यावदभ्यन्तरं प्रवेष्टुं विचिन्तयति रणवीरस्तावदेव वृत्तमिदमखिलम् । क्रूरसिंहस्येदमविनिर्दिष्टं [4]कृत्यमालोक्य तं मनस्येव रणवीरो बहुविधं धिक्कृतवान् । तन्मुखात्– ' अरेरे बहिःसुन्दराकार; अन्तरतिकिल्बिषागार क्षत्रियकुलाङ्गार ? पापैः परिपूर्णं तव हृदयम् । चण्डाल ? किमिदमाचरितं त्वया ? स्त्रीहत्या विहिता खल्वन्ते ? ' इति शब्दा निर्जग्मुः ।

अथ रणवीरोऽकस्मात् क्रूरसमीपमुपस्थितवान् । पुनरवलोक्यैव क्रूरो भिया चकम्पे । [5]विवर्णमिव वदनमस्य । ततो मृदुगिरा क्रूरं पप्रच्छ रणवीरः 'क्रूरसिंह ? किन्नु विधीयते भवता ? आसीत् किमपि कारणमेवमाचरितुं ते ? ' इति । किमुत्तरं तस्मै प्रदेयमिति नाज्ञासीदसौ । अन्ततोऽयं दुरात्मा रणवीरमपि निहन्तुं निश्चित्योत्तरमदत्त्वैव तस्मै-

---

१ पुत्रवधू. । २ ' स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । प्रतीपदर्शिनी वामा वनिता महिला ' इत्यमरः । ३ भवनम् । ४ गर्हितम् । ५ निष्प्रभम् ।

'एष आगच्छामि' इति निगद्य कोष्ठान्तरं गतवान्। कोष्ठवर्येकां निशिततरां छुरिकां बाहुवस्त्रान्तर्गोपयित्वा बहिरायातोऽयम्। बालोऽपि धूर्तोऽयं रणवीरस्तदाशयं विज्ञाय तत्क्षणमेव तत पलायितुं निश्चित्य क्रूरमभ्यधात्— 'क्रूरसिंह! त्वं हत्यामकरोरिति जानाम्यहम्। स्वचक्षुषा तत्कृत्यमालोकि मया। किन्तु मा भैषीः! नाहमिदं वृत्तं कमपि निवेदयिष्यामि। पश्य, अद्यापि तवावशिष्यन्ते कलेवरशकलानीमानि भूमौ प्रच्छादयितुम्। अपावृतञ्च गृहद्वारम्। यद् कोऽपि चेदिहागच्छेन्महानर्थं भविता' इति गत्वाऽधस्ताद् द्वारं संवृणोमि। समापयात्मकृत्यं त्वम्' इत्यभिधाय प्रत्युत्तरमनपेक्ष्यैवायं रणवीरो नीचैरवतीर्य बहिरागम्य स्वप्रासादं प्रति प्रतस्थे।' इति निगद्य चन्द्रः क्षणं तूष्णीमस्थात्।

विजयसिंहः। (ससंभ्रमम्।) राजकुमार! मध्ये ब्रवीमीति क्षम्यताम्। कं क्रूरसिंहमुद्दिश्य कथयति भवान्?।

'राजकन्यायाः कुमुदिन्या अपहर्तारं श्रीमतामेव सेनापतिं दुरितात्मानं क्रूरसिंहमनुलक्ष्य कथयामि' इति प्रत्यवादीत्समुल्लसन्[1]मन्युः श्रीचन्द्रसिंहः। आः! किं कथयसि? इयानीवक्रोऽयं दुरात्मा? हन्त!! पूर्वमहं चेद् व्यज्ञास्यम्; सत्वरमेव दुरात्मानममुं व्यापादयिष्यम्। नियतमेनं कदापि नाऽपोषयिष्यम्' इत्यात्मगतं विचिन्तयामास विजयसिंहः।

ततोऽन्तर्हितः क्रूरस्तु निशम्यैवामुं वृत्तान्तमतिमात्रमाकुलीबभूव। आकर्ण्य च स्वविनाशं विजयसिंहमुखात्संजातमन्युर्मनसि प्राजल्पदसौ— 'आम्! स एवाहं क्रूरसिंहः! सोऽहं क्रूरसिंहः!! घोर विजयसिंह! त्वं मां विनाशयितुं चिन्तयसि किन्तु तत्पूर्वमेवायं विकरालः केसरी स्वखरनखैस्त्वामेव विदार्य व्यापादयिता खलु! अये? कोऽयं सकलवृत्तमिदमावेदयिता? नावगम्यते मया!! एनं तु केवलमहं कुमुदिन्या रक्षकत्वेनैव परिचिनोमि। कोऽभिप्रायः खलु भवेदस्यैतद्वृत्तनिवेदने? अये? सकलं ममेतिवृत्तमयं विजानीते—इति प्रत्येमि। सम्प्रति ममैव वृत्तान्तं कथयति। नहीयान्येव छिद्राण्यपावृणोति?। हन्त! किमहं कुर्याम्? निःशस्त्रोऽस्मि, अन्यथा सद्य एवामुष्य रसनामच्छेत्स्यम्' इति मनसैव विमृशन् पुनरेष क्रूरः शान्तिमाकलय्य दत्तकर्णः शुश्राव। 'परम्। राजकुमार! ततः किं जातम्?' इति जोषमासीनं चन्द्रसिंहं निरीक्ष्य समगादीन्महाराजविजयसिंहः।

पुनरपि पश्चात् प्रावर्तत चन्द्रः— 'तदनु कथमुपरि नायातो रणवीरोऽद्यापीति' तमन्वेषमाणो नीचैरवततार क्रूरः। रणवीरमनवलोक्य बभूवायं संभ्रान्तमनाः। अथ द्वारं संवृत्य पुनरयं चन्द्रशालामुपगम्य शिरसा शवशकलान्यनेन सम्यगाच्छाद्य, स्नात्वा स्वकर्मणो निवृत्य शयितुं पर्यङ्के पपात। [2]निर्वापयाया सम्प्रति निशीथिनी। परं नालिङ्गितोऽपि निद्रया दुरात्मा। इतस्ततोऽपि पर्यङ्के परिवर्तमानः कथं कथमपि हृदयं शान्तं विधाय निद्रापरतन्त्रो बभूव।

---

१ मन्युः क्रोधः। २ निशीथोऽर्द्धरात्रः।

अन्येद्युः प्रातःसमये सकलेऽपि नगरे प्रससारेयं नगरश्रेष्ठिपुत्रवधूहरणवार्ता। तस्या मार्गणाय गता अनुचराः सम्पूर्णां रजनीं नगरवीथिकासु, नदीपरिसरेषु वनान्तेषु चापि सर्वत्र गवेषयाम्बभूवुः; किन्तु क्वापि नालभ्यतेयं तरुणी। घटनयाऽनया सकलमपि राजनगरं शून्यमिवाबभासे। सचिवसेनानायकराजकुमारचन्द्रसिंहकोट्टपालक्रूरसिंहप्रमुखसज्जनपरिवृतो राजसभायां समासीनोऽभवन्महाराजश्रीकेसरिसिंहः। अत्रान्तरे समागन्दत्यतिदुःखेन राजसभां प्रविश्य नगरश्रेष्ठी— 'न प्राप्ताऽधुना तस्याः प्रवृत्तिरपि' इति नरेन्द्रं न्यवीविदत्। भयानकामिमां घटनामाकर्ण्य महाराजो रुषारुणनयनः कोट्टपालम्— 'क्रूरसिंह? नैवाद्यावधि कदापीदृशी हृदयप्रमाथिनी घटना घटितास्मन्नगरे। अद्य तु कथमियं संवृत्तेति भावगम्यते खलु! तदनुसंधीयतां त्वया। त्वय्येवोत्तरदायित्वमस्य कर्मणः' इत्यादिदेश। परं कुतः प्रवृत्तिरुपानीयेत कोट्टपालेन? स तु स्वयमेवापराधीति किमनुसंदधीत? महाराजनिदेशमुपश्रुत्याचख्यौ क्रूरसिंहः 'कृपालो? ह्योऽखिलाऽपि रात्रिरविरहिता तदनुसंधाने एव मया। संशोध्यापि सकलं नगरं नालभ्यत क्वापि प्रवृत्तिर्मया तस्या' इति। तदीयं वचो निशम्यातिमात्रं चिखेद महाराजः। सभासदोऽपि सर्वे चिन्तातुरा बभूवुः। अत्यन्तमेव विललाप नगरश्रेष्ठी। क्षणेऽमुष्मिन् रणवीरो राजसभां प्रविवेश। रणवीरमवलोक्यैव क्रूरसिंहो भियाऽकम्पत।

'आगतोऽसि वत्स रणवीर?' इति प्रोच्य प्रेम्णा तमाहूय स्वसमीपमुपवेश्याचकथन्महाराजः 'वत्स? अद्यास्मन्नगरे संवृत्तैका भयङ्करी घटना। अस्मदीयनगरश्रेष्ठिनः पुत्रवधूमहरत् कोऽपि दुरात्मा। नोपलभ्यतेऽसौ क्वापि' इति। अथासनादुत्थाय प्रोवाच रणवीरः— 'तात? तदपहारकस्तु समीप एवास्ति। कथं न निगृह्यते तातचरणैरिति?' अये? कोऽयं चण्डालः? अविलम्बितं कथय माम्' इति संक्रेडमाचष्ट राजेन्द्रः। 'तात? अस्मन्नगरकोट्टपालस्य क्रूरसिंहस्यैवास्य दारुणं विचेष्टितमिदम्' इति प्रकाशमभाषिष्ट रणवीरः। 'आ एवं किमु?' इति साश्चर्यं प्रोचुः सर्वेऽपि सभ्याः।

तत्क्षणमेव चन्द्रहासमाकृष्य महाराजः क्रूराभिमुखमभिगत्य यावत्तदुपरि कौक्षेयकं निक्षिपति तावदेव युवराजचन्द्रसिंहो महाराजं निवार्य निवेदितवान् 'तात? शाम्यतु भवान्। आदौ निशम्यतामपराधिनः कथनम्। कथमीदृशं साहसं विदधाति श्रीमान्' इति। अथ क्षितिपतिः पुनर्निजासने समुपविश्य क्रूरमप्राक्षीत्— 'कथय-दुरात्मन्? अस्ति तवापराधो न वेति।'

'देव? सर्वथा निरपराधो जन एष' इत्यात्मानं गोपायितुं प्रत्याचष्ट क्रूरः। तदीयप्रत्याख्यानं संश्रुत्य व्यचिन्तयन्महाराजः— 'अये? कथमिदानीमनुसंधेयोऽयं दोषी?' इति विचिन्तयन्नेव रणवीराभिमुखं विलुलोके महीपालः। स्वपितृचरणानामाशयं विज्ञाय रणवीरोऽब्रवीत्— 'तात? एष दुरात्मा ह्योदिने सायंसमये सरोवरतीरात्तां तरुणीमाहृत्य स्वगृहं नीतवान्। तामयं चन्द्रशालायां नीत्वा तस्याः पातिव्रत्यं भ्रंशयितुमनाश्रुपरि बला-

१ रथ्यासु विशिखासु प्रतोलीषु वा।

रकारं कर्तुं प्रवृत्तवान्। तदानीमहं तेन पथा प्रासादं प्रत्यावर्तमानः कूरसिंहं साक्षात्कर्तुं तदीयगृहाभ्यन्तरं प्राविशम्। विचिन्वन्नहममुं चन्द्रशालायामगमम्। तत्र गवाक्षेण निरीक्षमाणोऽहं तस्या निरागसो ललनाया उपरि बलात्कारं कर्तुमुद्यन्तमेनमपश्यम्। सा तरुणी तु निजसतीत्वभङ्गभियाऽऽत्महत्यामकरोत्। सहसा [1]परासुं तामवलोक्य भीतोऽप्येष तायं दुष्टः। तथापि साहसमाधाय स्वतरवारिणा शवं शकलीकृत्य तस्या निजपापं [3]निगूहितुं तानि खण्डानि भुवि निखातवान्। तदनुपदमेव दोषमस्य निर्णेष्यति श्रीमानिति।'

उपश्रुत्य तद् वचनं तत्क्षणमेव क्षितीन्द्रश्चन्द्रसिंहं वीरभटैः सह कूरसिंहनिलयं गत्वाऽनुसंधातुमादिष्टवान्। अतोऽतिव्याकुलमनाः सदयं क्रूरो भयेन ततोऽपसर्तुमवसरं प्रतीक्षितवान्। चतुरोऽमात्यवरस्तदाशयं विज्ञाय कूरसिंहं [4]निगडयितुं वीरानादिशत्। तदादेशमनन्तरमेव बन्दीकृतोऽयं वीरद्वयेन। एतस्मिन्नन्तरे तत्तरुणीकलेवरखण्डान् पोटलिकायामाबध्य कतिपयवीरभटानुगतो युवराजचन्द्रसिंहस्तत्रोपस्थाय पोटलिकामुद्घाट्य तान् कलेवरखण्डान्महाराजं समदर्शयत्। तदीयमीदृशं निर्घृणं दारुणञ्च कृत्यमालोक्य सर्वे सभ्या दिङ्मूढा इव स्तब्धाः समवातिष्ठन्त। वराकोऽयं नगरश्रेष्ठी स्वस्नुषाया ईदृगकस्माद् दारुणं मरणं विलोक्य [5]विक्षिप्त इवाभवत्। क्रुधाऽतिमात्रमतप्यत नरेन्द्रः। तदनु रोषाग्निना दिधक्षुरिव कूरसिंहमपृच्छन्महाराजः 'कथय, नराधम! किं कथयस्यधुना' इति। महाराजस्य प्रश्नं निशम्य दुष्टहृदयोऽयं धैर्येण स्वदोषं प्रत्याचष्ट। दोषमनङ्गीकुर्वाणमेनमवलोक्य महाराजोऽतिरोषारुणनयनः सन् संस्वेद्य जगाद- 'अरेरे विश्वासघातिन् क्षत्रियापसद! किमहं त्वां करोमि! तव दुष्कृतमवलोकयता मया त्वत्कलेवरस्य राशिशानीमानि शकलानि कणीयानि। परं त्वद्दोषजनकाय प्रतिश्रुतमस्ति त्वां रक्षयितुमिति विवशोऽस्मि। प्रतिश्रुतभङ्गभिया न किमपि तव कर्तुं पारये। रे कृतघ्न! त्वामहं जीवन्तं विमुञ्चामि। आज्ञापयामि केवलं सर्वसभ्यजनसमक्षं त्वां तीव्रकशाप्रहारशतेन ताडयितुम्। तवापराधं पश्यता मृत्युना दण्डनीयस्त्वम्। किन्तु स्ववचनानिबद्धोऽहं जीवन्तमेव त्वां त्यजामि' इति।

राजेन्द्रनिदेशसमकालमेव कूरसिंहं सभामध्ये समानीय नग्नपृष्ठं विधाय सुदृढया कशया ताडयितुमारेभिरे वीराः। अक्रन्दितुमारेभे कूरोऽमुना। प्रावर्तत बाहुमूलादस्य कशोत्थरुधिरधारा। शतार्द्धे प्रहृतोऽयं निःसंज्ञीभूय भूमौ पपात। तत एव वीराः शीतलं जलं निक्षिप्य प्रत्यागतचेतनं विधाय तमवशिष्टैः कशाप्रहारैरताडयन्। अस्य पृष्ठे [6]इत्यधुना सत्वविलिप्तं कशाप्रहारजाङ्कनमस्ति। इत्थमयं क्रूरोऽवाङ्मुखोऽवस्थितवान् सभामध्ये।

अथैनं सम्बोध्य प्रावदन्नरेन्द्रः- 'नराधम! अद्य एव त्यजेन्मम नगरम्। नाहमालुलोकयिषामि ते मुखम्। कदाचित् त्वं यदि मनाग् राज्यपरिसीमानि दृश्येथाः; तर्ह्यवस्थितमात्ममरणमित्यवेहि। अपसर मम सम्मुखतः। वीराः! बहिरपसारयत मुष्टिप्रहारैरेनम्' इति। वीरास्तं मुष्टिप्रहारेण बहिर्निःसारयामासुः। इदमेव वाञ्छितमस्य दुरात्मनः।

---

१ मृताम्। २ धाष्टर्येन। ३ प्रच्छादयितुम्। ४ बन्धनेन बद्धुम्। ५ विमूढः। ६ शरीरशोषेण।

राजसभाया बहिरपसारणानन्तरमयं स्वनिलयं प्रगम्य सञ्चितहीरकमण्याद्यनर्घरत्नद्वयमादायाजितदुर्गनगरं जहौ।'

एतावदुदीर्य पुनस्तूष्णीमवस्थितवानयं चन्द्रसिंहः।

ततोऽन्तर्हितः क्रूरस्तु मनसि–'अरेरे दुष्टवैरिहतक ? वारयैनामात्मरसनाम्। अये ? कोऽयं नरपिशाचो भवेदिति न विज्ञायते ?' इत्युक्त्वा पुनर्दत्तकर्णः स्थितः।

क्षणं मौनमाकलय्य पुनरमे प्रवृत्तवानुपर्यवस्तु चन्द्रसिंहः–'ततो महाराजश्रीकेसरिसिंहो नगरश्रेष्ठिनं सान्त्वयित्वा-गतं न शोच्यमित्यभिधाय बहुविधमुपदिश्य तं निजालयं व्यसृजत्। अथ गच्छता कालेन नगरनिवासिनो जना घटितमिदं वृत्तं विस्मृत्य मुदा दिनानि गमयाम्बभूवुः। उपस्थिता वसन्तपञ्चमी। राजमहालये राज्याभिषेकसंभारा अक्रियन्त जनैः। परं किन्तु वा निर्धार्यते नरेण किन्तु वा क्रियते प्रभुणा ? येनावगम्यतेऽयमगम्यो महिमा परमात्मनः। दैवगतिमवगन्तुमपारयिष्यच्चेत्तर्हि कथं प्रातःस्मरणीयः सुगृहीतनामधेयो महीमहेन्द्रः श्रीरामचन्द्रो वनमगमिष्यत् ? कथं वा सत्यवादी पुण्यश्लोको वसुमतीवासवः श्रीहरिश्चन्द्रो दुःखाम्बुनिधौ न्यमङ्क्ष्यत् ? महान्तो देवम्वरूपा अपि पुरुषा दैवगतिमधिगन्तुं नापि शक्ताः; नापि वा शक्ष्यन्ति।

एकदा सायंकाले नृशंसः क्रूरसिंहः प्रच्छन्नवेषेण नगरं प्रविश्य कनिष्ठराजकुमारं रणवीरं गवेषयामास। समयेऽस्मिन् रणवीरो मृगयाया निवृत्य नगरं प्रति प्रतिष्ठते स्म। दैवमन्येव क्रूरसिंहस्तेन सङ्गतो बभूव। प्रच्छन्नवेषममुमभिज्ञातवानाश्चर्यपरवशो बुद्धिमान् रणवीरः। रणवीरमालोक्य क्रूरसिंहस्तदभ्यर्णमागम्य विरचिताञ्जलिः सविनयं क्षमामयाचत। दुष्टरितस्यास्य प्रार्थनया विप्रलब्धोऽयं रणवीरः। जालाभ्यन्तरपतितं मीनमिव निजवाग्जालप्रतारितं रणवीरमवधार्य ततः कियद्दूरं नीत्वा तस्मै स्वसन्निहितां शर्करां समर्प्य–'राजकुमार ? क्षमया कृतार्थितोऽयं भवता। श्रेयस्तनोतु भवतां भगवानजस्रम्। भुज्यतामयं देव्याः प्रसादः।' इति निगद्य तां शर्करां तमाशयत्। शर्कराभक्षणसमक्षणमेव भ्रमरिकयाऽऽक्रान्तं रणवीरमस्तकम्। 'विप्रलब्धोऽस्म्यमुनेति' विज्ञाय यावदाक्रोष्टुं प्रवर्तते रणवीरस्तावदेवायं क्रूरस्तं निरुद्धगिरमकरोत्। क्षणेनैव रणवीरमुत्थाप्य हयपृष्ठमारोप्य काननपथेन पलायत क्रूरसिंहः।

इतस्तु 'संवृत्ता रजनी। कथमद्यापि नायातो रणवीरः' इति चिन्तयन्नास्त महाराजः। मुहूर्तानन्तरमेवात्यन्तमो वीरभटो यो रणवीरं क्रूरसिंहकरपञ्जरगतमवालोकयत्-समुपेत्य महाराजान्तिकम्–'प्रभो ? कश्चिदपरिचितः पुरुषो राजकुमारमपहृतवान्' इति राजानं व्यजिज्ञपत्। समाचारमुपश्रुत्यामुं तत्क्षणमेव महाराजः कतिचनाश्वारोहान् रणवीरगवेषणाय प्रैरितवान्। प्रातःकालपर्यन्तमितस्ततो गवेषयित्वा निराशहृदा परावृत्ताः-सादिनः। हाहेत्युच्चरितार्तनादभरितं जातं समस्तं पुरम्। रणवीरमनुपलभ्य महाराजो नितरां किंकर्त-

१ वधयितुम्। २ पुण्यकीर्तिः। ३ महीमहेन्द्रः। ४ पथि। ५ मत्स्यम्। ६ भ्रमरिकाशिरोभ्रमणम्। ७ वञ्चितः।

व्यथामूढ इवाभवत्। तदा युवराजचन्द्रसिंहः स्वपितुरमात्यस्य तदीयहृदयं सान्त्वयित्वा तदाज्ञया भ्रातुरन्वेषणाय निर्जगाम। मुहुर्मुहुरीदृशया भयानकघटनया महाराजकेसरिसिंहस्तदीयाः प्रजाश्च संभ्रान्तचित्ता बभूवुः। सर्वेषामेषां दुरितकर्मणामयमेव क्रूरसिंहो निदानमिति सर्वेऽमन्यन्त।

इत्थं मासद्वयं व्यतीतम्। तदपि नालभ्यत प्रवृत्तिरपि रणवीरस्य। तत्रापि रणवीरमार्गणाय गतश्चन्द्रसिंहोऽपि न निवृत्त इति दुःखान्तरमिदमापतितम्। अतो महाराजोऽतिशोकाकुलोऽजनि। अखिलमैश्वर्यं श्मशानमिवास्य प्रतिभाति स्म। अथ विरक्त इव प्रत्यहं पुष्पभद्रातीरे योगाभ्यासार्थं गच्छति स्म। मुहुर्मुहुर्जायमानां भयानकघटनां पर्यालोच्य बुद्धिमान् नीतिचतुरः प्रधानवरो महाराजमेकाकिनं गन्तुं न्यवारयत्। परं नाभ्युपेयाय मन्त्रिवचनं नरेन्द्रः।

एकदा तमःपटप्रावृतायां कृष्णपक्षनिशायां योगमभ्यसितुं प्रातिष्ठत पुष्पभद्रातीरं नरेन्द्रः। प्रभुणा निवार्यमाणोऽप्ययममात्यवर्योऽङ्गरक्षकमेकं केनाप्यलक्षितगमनं महाराजपृष्ठगामिनमकरोत्। योगाभ्यासविधिमवसाय्य पुष्पभद्रातीरान्निववृते महीवल्लभः। तदलक्षितानुगमनोऽयमङ्गरक्षकोऽपि क्षितिपतिमनुससार। 'विलक्षणा दैवघटना'। न प्रभुस्तां कोपि विज्ञातुम्। प्रत्यावर्तमानो मेदिनीशः शस्त्रपाणिनां वीराणां पञ्चविंशत्या पथि समाक्रान्तो बभूव। निःशस्त्रत्वान्महाराजस्तान्नाशक्नोन्निरोद्धुम्। कलितधृतिरयमप्राक्षीन्नरेन्द्रः- 'अये ? किमर्थं भवद्भिरहमाक्रान्तोऽस्मि। किमीहन्ते भवन्तः ? केसरिसिंहनामाहं नृपतिरस्मि' इति।

महाराजवचो निशम्य तेषामधिपतिरभिमुखीभूय महाराजमब्रवीत्- 'केसरिसिंह ! मया बन्दीकृतस्त्वम् ! त्वामहमत्युग्रं दण्डयिष्यामि। परिचिनोषि मां किमु ? शृणु- यं त्वं सर्वस्वजनसमक्षं भृशमवामंस्थाः स एवायं क्रूरसिंहोऽद्य त्वां प्रग्रहीतुमिह समायातोऽस्ति। तदेहि, दुर्गमिदानीमायाहि मे शरणम्' इति। क्रूरसिंहवचांसि कर्णे कृत्वैव क्रोधानलेन जाज्वल्यमानोऽभवन्महाराजः। अथ मुष्टिकाभ्यां तस्करगणं प्रहर्तुमारेभे नरेन्द्रः। 'किम् ? बन्दीकृतो महाराजकेसरिसिंहः किमु ? कथमेवं संबोभवीति ? रे दुरात्मन् नराधम ! तिष्ठ, अधुनैव तव गर्वमपहरामि। अस्तु, केसरी समाक्रान्त इति श्रुतं कदापि किमु ?' इति वदन्नेव परितः पर्यभ्राम्यन्महाराजः। तस्य प्रचण्डमुष्टिप्रहारैः परलोकं प्रस्थितवन्तः पञ्चशः पुरुषाः। महाराजस्य कृतज्ञोऽङ्गरक्षकः स्वकर्तव्यमनुतिष्ठन् वीरगतिं गतवान्। निजान् पञ्चषान् पुरुषान् रणे निपतितानवलोक्य कोपारुणनयनः क्रूरसिंहः स्वसैनिकानवदत्- 'मदीययोधाः ! किं पश्यथ यूयम्। सद्य एवैनं निगृह्य बन्दीकुरुत' इति। स्वनायकनिदेशसमकालमेव सर्वेऽपि सैनिकाः सोत्क्रोशं महाराजस्य परितः समापतन्। महाराजोऽप्यतुलधैर्येण शत्रुनाशमकार्षीत्। रिपूणां शस्त्रप्रहारैर्नरेन्द्रवपुरतितरां मर्माहतमभूत्। प्रारब्धासृग्धारा भृशं वपुषः। तस्मान्निःशक्तो भूत्वा भूमौ निपत्य मूर्छितोऽभवन्महाराजः।

१ कर्तनम्। २ असृग्धारा-रक्तप्रवाहः।

मूर्छितमेवैनं बन्दीकृत्य शिबिकायामारोप्य निनाय क्रूरसिंह । क्रूरसेनामुना स्वस्थानं नीत्वा व्यापादितो नरेन्द्र इति श्रूयते किल मया । अथासौ क्रूरोऽमरकण्टकाधीश्वराय स्वराज्यात् कश्चिदंशं समर्पयितुमुरीकृत्य तदीयसैन्यसाहाय्येनाजितदुर्गनगरं प्रविवेश । महाराजकेसरिसिंहस्य विश्वस्तोऽमात्यस्तु महाराजमकस्मात् प्रनष्टमवगम्य स्वल्पसैन्यमादाय महाराजान्वेषणाय गतोऽभवत् । सोऽपि तदानीं नासीन्नगरे । तथापि स्वावशिष्टसैन्यसाहाय्येन महाविक्रमशाली सेनानीरजयसिंहः सपत्नानपरोद्धुं सम्मुखो बभूव । महापराक्रमं प्रदर्श्यान्ते स्वसैन्यैः सममयं सेनापतिर्वीरगतिं गत. । ततोऽनायासेनैव नगरं प्राविशदयं क्रूरसिंहः ।

एष दुरात्मा प्रजा भृशमुपप्लुत्य ताभ्यो विपुलं द्रव्यमादायाजितदुर्गराज्यममरकण्टकाधिपतये रणजितसिंहाय समर्प्य तस्मादपि क्षितिपते पुष्कलं द्रविणमग्रहीत् । तदनु क्रूरसिंहोऽयमजितदुर्गं परित्यज्य कियन्ति दिनानि कान्तारे समतीत्य श्रीमता प्राणान् संरक्ष्य श्रीमत्कृपाभाजनञ्च संवृत्य श्रीमन्तं सेवमानो न्यवात्सीदत्र ।

इतस्तु रणवीरमन्वेष्टुं प्रस्थितश्चन्द्रसिंह स्वबन्धुमनवाप्य निराश सन् निजनगरं प्रति निवर्तमान पथि महाराजगवेषणाय निर्गतेन सैन्यानुगतेन मन्त्रिसत्तमेन सङ्गतो बभूव । चन्द्रसिंहं परिचित्य मन्त्रिवर. स्वावगत सकलं राजकीयवृत्तं तस्मै निवेद्य विशेषत – ' अस्मदीयं राज्यमधुना रणजितसिंहनृपतेर्हस्तगतम् ' इति न्यवेदयत् । ततो महाराजमरणोदन्तमश्रावयदमात्यवरः । स्वपितृचरणमरणवृत्तमुपश्रुत्य रुरोदातिवेलं चन्द्रसिंहः । तमाश्वासयाञ्चकार प्रधानपुङ्गवः । मुहूर्त्तानन्तरमामहदयं शान्तं विधाय चन्द्रसिंह प्रधानवर्यमकथयत्— ' अमात्यवर्य ! आगम्यताम् । स्वनगरं गत्वा प्रत्यर्थिनोऽपसारयामः ' इति । राजकुमारवचः श्रुत्वा प्रोवाच प्रधानवर्यः — ' राजकुमार ! न गन्तव्यं नगरेऽस्माभिरधुना । यतोऽस्मत्पार्श्वे स्वल्पमेवास्ति सैन्यम् । तस्य विरोधिहतकस्येयमाज्ञा नगरे– ' क्वापि केसरिसिंहस्य तनयौ दृश्येतां चेत्तौ प्रगृह्य मदन्तिकमानेयौ ' इति । साम्प्रतमसाम्प्रतं तत्र गमनम् । पुनः प्राप्तकालं यतिष्यामहे ' इति राजकुमारं बोधयित्वा सम्यगुपदिश्यासौ मतिमता वरो मन्त्रिपुङ्गव श्रीमत्सनीडे स्वविश्वस्तसैन्यैः समं समुपस्थाय श्रीमन्तं सेवमानः सम्प्रति प्रधानपदवीं समलङ्करोति । "

विजयसिंहः । ( साश्चर्यम् )[1] किं केसरिसिंहनरेन्द्रस्य विश्वस्तो मन्त्रिवरः सम्प्रति मदुपकण्ठे वर्तते ? आम् ! ' इदानीमेव विदितं खलु मया यदयं गुणवानमात्यवर्योऽसकृन्मह्यं सम्यगनुमतिं ददाति । अस्य बुद्धिचातुर्येणैवाहं रणजितसिंहनृपतिना सह योद्धुमपारयम् । अन्यथा तदीयसैन्यमुपरुध्य कर्तुमसमर्थ एवाहमभवम् । धन्योऽयं सुबुद्धिशाली "। परं योगिराज ! तदा को नु खलु भवान् ? इदानीमपि नैवाज्ञायि कोऽपि भवद्वृत्तान्तो मया ? ।

चन्द्रसिंहः । अविलम्बितमेव मामभिज्ञास्यति श्रीमान् ।

---

१ शिबिका–पालखी । ' पल्की ' इति भाषा ।

विजयसिंह । आ एवम् ? भवतु । अथ चन्द्रसिंहस्य किमभूत् ? तद् विज्ञायते चेन्निवेद्यतां भवता ।

चन्द्रसिंह । तदप्यहं वेद्मि । श्रूयताम्–' प्रधानवर्यतः पृथग्भूत्वा चन्द्रसिंहो रणवीरं विचिन्वन्नेव वनाद् वनान्तरं विचचार । परं क्वापि न लब्धो रणवीरः । तदासौ व्यचिन्तयत् ' एहि । अहमपि विजयनगरं गत्वा तं नृशंसं क्रूरसिंहं तदीयदुष्कर्मफलमास्वादयामि । तत्रैव कदाचिन्मम प्रियबन्धोरपि प्रवृत्तिरुपलभ्येत ? ' इति विचिन्त्य श्रीमदन्तिकमागन्तुं निरियाय । राजकुमारोऽयमागच्छन्नरण्ये विस्मृतवर्त्माभवत् । मार्गं मार्गयत एवास्याग्रतो पुरस्तादुपस्थिता निशादेवी । परं नालभतासौ पन्थानम् । अतो निराशवदनो राजकुमारं इतस्ततो बभ्राम वने । अत्रान्तरे तत्कर्णशष्कुलीमविशदेकः करुणचीत्कारमयो ध्वनिः । चीत्कृतध्वनिमुपश्रुत्य राजकुमारस्तां दिशमभिद्रुत्य ' सुन्दरबालिकामेकामाहरतस्त्रीन् पुरुषानपश्यत् । अवधीदमी तेषां पुरुषद्वयं भुशुण्डिकया । चन्द्रहासेनाथ चन्द्रसिंहो योद्धुमारेभे तृतीयेन नरेण । प्रतिद्वन्द्विनो मण्डलाग्रो राजकुमारचन्द्रहासेन समं सधूल्य वसुन्धरातलमालिलिङ्ग । अतः शत्रुरात्मप्राणत्राणमनीषया वञ्चयित्वा राजकुमारचक्षुषी पलायाञ्चक्रे । योऽसौ प्राणरक्षणार्थमपसृतः पुरुषः सोऽस्य राजकुमारचन्द्रसिंहस्य प्रचण्डवैरी क्रूरसिंह एवाभवत् ।

तदनु चन्द्रसिंहस्तां बालामुपगम्य सान्त्वयित्वा तदीयवृत्तान्तमन्वयुङ्क्त । आत्मपरिचयं ददत्या तया बालया–' कुमुदिनी नामाहम् ' इति न्यवेदि । कुमुदिनीमादाय श्रीमच्चरणशरणमुपागतो नैवायं योगिराजः किन्तु महाराजश्रीकेसरिसिंहस्य युवराजश्चन्द्रसिंहो नाम राजकुमारोऽयं साक्षाद्युष्मन्तमभिवादयते ' इति निगद्य चन्द्रो महाराजश्रीविजयसिंहं प्रणनाम ।

अथाऽकस्मादाश्चर्यचकितः सन् व्याजहार विजयसिंह – ' मदीयकुमुदिनीरक्षकोऽयं योगिराजवेषश्चन्द्रसिंहराजकुमारः किमु ? ' इति व्याहृत्य मुदा समुत्थाय महाराजश्चन्द्रसिंहं हस्तेन गृहीत्वा गाढमालिलिङ्ग । जगाद चायम्– ' चन्द्रसिंह ! अननुगुणमिदमकारि भवता । आसीद् भवदीयमेव राज्यमिदम् । किमर्थमात्मा गोपायितो भवता ? ' इति राजनन्दिनी तु योगिराज एवायं ' चन्द्रसिंह ' स्वयमिति विज्ञाय लज्जया भुवमालुलोके ।

॥ ६ ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ गिरिराजगौरवसोदरे कुमुदिनीचन्द्रे चतुर्थी कला ॥ ४ ॥



# अथ पञ्चमी कला ।

"तासामाविरभूच्छौरि[1]: स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः" ( भागवते )

"हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ।" ( उत्तररामचरिते )

"अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥" ( पञ्चतन्त्रके )

"दैवी विचित्रा गतिः ।" ( स्फुटम् )

"उष्णत्वमग्न्यातपसम्प्रयोगा[2]च्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥" ( रघुवंशे )

विलासोद्यानमध्यवर्तिनः क्रीडाशैलस्य कन्दरायां निलीनो योऽयं शूरसिंह इयत्कालपर्यन्तं योगिराजवेषस्य चन्द्रसिंहस्य वृत्तान्तमाकर्णयति स्म; 'सोऽधुनाऽकस्माच्चन्द्रसिंहं प्रकटीभूतमवलोक्य केनाऽपि चक्रेणाहन्यमान इव पीतं रक्तं कृष्णमिव च दिङ्मण्डलं विलोकयन् कराभ्यां शिरो धृत्वा भूमौ निषसाद[3] । इदानीं क्रूरसिंहोऽयमत्र कथमायात इत्यस्माभिरवगन्तव्यम् ।

गुप्तगृहे योगीन्द्रस्य तिरोधानानन्तरमयं नृशंसस्तदीयनिदेशमुल्लङ्घ्य रणवीरं निहन्तुं सन्नद्धोऽभूत् । अथ तस्य का दशा संजातेति विदन्त्येव वाचयितारः । वर्तुलं मण्डलाकारेणोपरि परिभ्राम्यन्नयं क्रूर कुत्रचिद् विकटायामटव्यां निपपात । निपतत एवास्यास्थीनि विशीर्णानि बभूवुः । चिरकालमसौ क्रूरो वने रुग्णः समवर्तत । अथ वन्यैः पुलिन्दै[4]रुपचरितोऽयं संजातदयैश्चिकित्सया । तेषां प्रयत्नेन स्वल्पेनैव कालेनायमुल्लाघो[5]ऽजायत । तान् वन्यपुलिन्दान् युक्त्या वशयित्वा तेषां परिवृढः संवृत्य निकटवर्तिनः पत्तनग्रामानलुलुण्ठत् । ततोऽयं तस्मिन्नेवारण्ये महाराजश्रीविजयसिंहस्य प्राणानरक्षदिति विदितं च खलु !! तत्राप्यमुना कृतघातिना भूत्वा गुप्तगृहं प्रति प्रास्थायि । वन्यैः पुलिन्दैरेवास्मै प्रदर्शितमभूदिदं गुप्तगृहम् । तैः सममयं गुप्तगृहमेवाप्युवास । अतीते पञ्चाब्दे योगीन्द्रशापानुसारं सस्मारायं गुप्तगृहम् । गुप्तगृहस्मरणेनैवायं क्रूरहतको रणवीरं व्यापादयितुं त्वरया तत्रोपययौ । परम्—को नु खलु हन्यात् प्रभुरक्षितम् ? तदागमनात् पूर्वमेव रणवीरस्ततो निर्गम्य भ्रात्रा सङ्गतो बभूव । रणवीरापसरणवृत्तं निशम्यैव क्रूरसिंहः कोपकृशानुदन्दह्यमानहृदयस्तत्क्षणमेव तुरङ्गममारुह्य रणवीरनिग्रहणाय निर्ययौ । परिभ्राम्यन्नयं क्रूरोऽष्टमदिवसे विजयनगरपरिसीमनि समाजगाम ।

---

१ कृष्णचन्द्र । २ सम्प्रयोग—संसर्ग । ३ उपाविशत् । ४ पुलिन्दाः—म्लेच्छजातयः ।
५ उल्लाघ—रोगनिर्मुक्त । 'उल्लाघो निर्गतो गदात् ।'

तत्र गुप्तवेषेणानुसंदधताऽमुना— 'समयेऽस्मिन् राजकन्या कुमुदिनी विलासोद्याने वर्तते' इति प्रवृत्तिरुपलेभे।

रणवीरं गवेषयितुं निर्गतस्यास्य वृत्तान्तमुपलभ्यैव हृदयं परमानन्दसमुद्रे निमग्नम्। कुमुदिनीमुपलब्धुमयं भृशमातुर इति नगरे गत्वा ततो द्वित्रान् सहचरानानीय बाह्यवर्त्मनैव विलासोद्यानमुपाजगाम। तानुचरान् बहिरेव स्थातुमादिश्य स्वयमेकाकी विस्मृतराष्ट्रः प्रच्छन्नं विलासोद्यानाभ्यन्तरं प्रविश्य— 'कुमुदिन्या सह स्थितः कोऽयं युवा ?' किञ्चालपतीति श्रोतुमनाः समीपवर्तिन्यां क्रीडागिरिगुहायां न्यलीयत। कुमुदिनीचन्द्रयोर्वार्तां निशम्य स्वयमपि तेन सकलं रहस्यम्। शिशिरं च चन्द्रसिंहमाविर्भूतमवलोक्य तस्य नयनयोरग्रतः समजायतान्धकार इव; यतोऽयं शिरो धृत्वा भुवि न्यषीदत्।

अत्रान्तरे भृत्यवेषेण रणवीरस्तत्रोपस्थाय महाराजं विजयसिंहं प्रणम्य सविनयम्— 'प्रभो ? संजातप्रायोऽयं सायंसमयः। तदिदानीं भोजनाय प्रस्थीयतामत्रभवता' इत्यभिधायैकतस्तस्थौ।

भोजनसमयं सम्प्राप्तमवगम्य महाराजश्चन्द्रसिंहमगादीत्— 'चन्द्रसिंह ? एहि। उपस्थिता भोजनवेलेति गन्तव्यमधुना' इति।

चन्द्रसिंहस्तु— 'प्रस्थीयतामग्रभवता। अल्पसमयेनैवाहमागच्छामि' इति निगद्य ततः स्तोकमन्तरं गत्वा पर्यटितुमारभत।

अथ 'अपि समायासि वत्से कुमुदिनि ?' इति कुमुदिनीं पप्रच्छ विजयसिंहः। तत्र स्थातुकामया तयाऽपि— 'तात ? एषाऽहं प्रियम्वदया सह भवदनुपदमेवायामि। प्रस्थीयतां भवता' इति जगदे। ततः प्रमुदितहृदयो महाराजविजयसिंहः प्रासादं प्राविशत। राजकुमारो रणवीरोऽपि केनाप्यनुपलक्ष्यमाणगतिरेकतोऽन्तर्धाय स्थितवान्।

ताते गतवन्तमालोक्य प्रियम्वदामुवाच कुमुदिनी— 'सखि ? परमेश्वरकृपयाऽन्ततो मदीयहृदयलतावल्ली प्रफुल्लेव ? अद्यायो मे चन्द्रो नयनचकोरद्वन्द्वानन्दनो जातः। अस्मुदितं मम सौभाग्यचन्द्रेणाधुनेति।'

प्रियम्वदा तु— 'सखि ? अमन्दानन्दमयेऽस्मिन्समये पुष्पहारमेकं रमणीयं निर्मायानयामि' इति निगद्य पुष्पाण्यवचेतुं पुष्पवाटिकायां गतवती। दूरं गतां प्रियम्वदामालोक्य चन्द्रः कुमुदिन्या नेदीयान् संवृत्य तामुवाच— 'सुन्दरि ? अपि प्राप्तो न वा तव चन्द्रः ? पालितं न वा मयात्मवचनम् ? किमिति नालप्यते त्वया ?' इति।

कुमुदिनी तु द्विधा भूतलं निभाल्याधश्चकार। पुनश्चन्द्रोऽब्रवीत्— 'देवि ? किमिति नालप्यते ? पूर्वं तु बहुतरमालप्यते स्म। साम्प्रतन्तु भाषणेनापि नानुकम्प्यते त्वया ?' इति। तदपि भूतलं विलोकयन्त्येव स्थिता कुमुदिनी।

ततश्चन्द्रसिंहः कुमुदिन्या नेदिष्ठो भूत्वा तदीयकरं विधृत्य— 'प्रिये ? अपि कुप्यसि मह्यम् ?

---

१ अतिहर्षात्फुल्लेव। २ विरच्य।

अपराद्ध ननु मया किमपि ते ? कुमुदिनि ? कथं न संभाषसे ? ब्रूहि, मन्मनोमोहिनि ? ब्रूहि सकृद्' इति प्रोवाच ।

कुमुदिनी तु— ' गम्यताम् । नाल्पनीयं मया साकं ' मित्यभिधाय चन्द्रसिंहपाणि पङ्कजमपसारयामास ।

चन्द्र । ( विहस्य ) प्रिये ? किमपि कारणं नन्वेव कर्तुम् ?

कुमुदिनी । अविवञ्चको ननु भवान् ।

चन्द्र । ( सविस्मयम् । ) वञ्चकोऽस्म्यहं किमु ?

कुमुदिनी । आम्, आम् । वञ्चको भवान् ।

चन्द्र । ( सस्मितम् ) कथं नु विप्रलब्धासि ? उपकृतो भवेयं सन्निवेशेन चेत्तावु ग्रहम् ? कुमुदिनी तु— ' अये मत्प्राणवल्लभ ? मदीयहृदयेश्वर ? ' इति वदन्ती प्रेम्णा चन्द्रमालिलिङ्ग । विलोचनाभ्यामविरलं विगलन्ती प्रेमाश्रुजलबिन्दुधारा मुक्तावलीव तस्याः कपोलतलयुगलमलङ्कृतवती । आत्मपटखण्डेन तदश्रुजलबिन्दुवृन्दं प्रोञ्छ्य चन्द्रः कुमुदिनी मवादीत्—' जीवनसङ्गिनि ? ईदृशि मङ्गलमयप्रसङ्गे नार्हसि खलु विलोचनाभ्यां बाष्पबिन्दुजलं विगलयितुम् ' इति ।

कुमुदिनी । प्राणेश्वर ? असदृशमिदमकारि भवता ? नाहं विज्ञापनीयाऽभून् ननु भवतेदृग्वेषान्तरजुषाऽपि ? समीपवर्तिनमवलोक्य भवन्तमहं कियदानन्दिष्यम् ? अहो ! विचित्रा तव माया । अहमपि सुतरां वञ्चिता खलु ! ! भवतु । ममाप्यधुनोपस्थितोऽवसरः । तद् भवानपि सार्ता । ' ( इति वदन्ती जहास । )

चन्द्र । मदीयहृदयङ्गमे ? त्यज चिन्ताम् । जातोऽयमिदानीन्तु भूयानानन्दो ननु ?

कुमुदिनी । आम् । हृदयवल्लभ ? आगम्यताम् । सम्प्रति यथ प्रासादं प्रति प्रतिष्ठामहै । प्रतिपालयेत्खलु तातोऽस्मान् । किन्तु, अयि प्राणनाथ ? कस्मिन्नपि महति विचारसिन्धौ निमग्नो भवानिति भवन्मुखमुद्रया प्रतीयते । तत् किं नु विचिन्तयति भवान् ? अपि नैव निवेदयिष्यति माम् ? ।

[ ततोऽन्तर्हितो रणवीरस्तु स्वात्मजमनो राजकन्यायाश्च प्रेमालापमाकर्ण्य नितरां मानन्द । ]

चन्द्र । कुमुदिनि ? को न विचारयति खलु ? विचारशून्यो नरो नरो न किन्तु पशुरेवायम् । तत्कथं न विचारयामि ? प्रिये ? यावन्न भवेत् पितृवैरनिर्यातनं तावदुदासिष्ये ऽहम् । एहि-प्रिये ? मुहूर्तमात्रं साम्मुखीनायामासन्दिकायामुपाविशाव ' इति प्रोच्य चन्द्रसिंहः कुमुदिनीं सहादायामन्दीमुपगन्तुं प्रवृत्तवान् । अत्रान्तरे प्रियम्वदा समोपातिष्ठत । विनोदं कुर्वाणौ कुमुदिनीचन्द्रौ विलोकयन्तितरामानन्दन्ती व्याहृतवती प्रियम्वदा— ' हला कुमुदिनि ? गृह्यतामयं रमणीयपुष्पगुम्फितो मनोहरः पुष्पहारः । अलङ्क्रियतामनेनायम्

१ परिमृज्य । २ उदासीनो भविष्यामि ।

प्रियतमकण्ठस्त्वया ' इति पुष्पहारं कुमुदिन्यै ददौ । सा तु लज्जापरतन्त्रतयाऽधोऽवलोकितवती ।

अथ कुमुदिनीकराम्बुजात्पुष्पहारमादाय चन्द्रः कुमुदिन्या एव कण्ठे स्वीयं मूर्तिमन्तमनुरागमिवासंसञ्ज रुचिरम् । सा तु तेन पुष्पहारेण दयितेनेव कण्ठार्पितबाहुपाशेन समालिङ्गितमिवात्मानं मन्वाना मन्दीक्षेण मेदिनीतलमालोकयन्ती स्थितवती । लज्जमानामिमामवलोक्य प्रियम्वदयोक्तम्— ' सखि ? किमिति हृणीयसे ? न लज्जनीयं त्वया ' इति ।

ततः प्रियम्वदा तौ कुमुदिनीचन्द्रौ समीपस्थासन्दीसकाशं नीतवती । तामधिश्रित्य त्रयोऽपि ते वार्ताविनोदं वितेनिरे ।

इतो मूर्च्छितः क्रूरसिंहस्तु संज्ञामुपलभ्येदानीमवदत्– ' चन्द्रसिंह ? परित्यक्तस्त्वयोऽयमसारः संसारस्त्वयाधुना । त्वां प्रतीक्षते तव सुरलोकगतः पिता । विह्वलोऽयं खलु त्वद्विरहेण । तदधुना त्वमपि सञ्जीभव त्रिदिवगमनाय । आः । अमुनैव मम मनीषितं धूलिसात्कृतम् । असावेव मम करपञ्जरात्कुमुदिनीमपहृतवान् । हन्त ? राजकन्यया सह समासीनमेनमवलोक्य दन्दह्यते मदीयहृदयम् ! अये ? शस्त्रमपि न वर्तते मदभ्यर्णे । कश्चिदितो मानवोऽपि न दरीदृश्यते; यं शस्त्रमानेतुं बहिः प्रेषयेयम् ? ' इति वदन्नेवायं दुरात्मा समन्ततो विलोकयाञ्चकार । उपगतमस्य नयनपदवीमन्तर्लीनो रणवीरः । रणवीरं विलोक्यैव विचिन्तितवानसौ– ' किमर्थमत्रायं निलीनो भवेद् बालः ? अये ? अयमपि बालो निर्निमेषलोचनाभ्यां कुमुदिनीमवलोकयति । किमहर्निवार्यं किमपि रत्नमपहर्तुमुपागतो नु ? एवमपि सम्भवतितराम् । तदेतमहमाहूय युक्त्या वशीकृत्य भुशुण्डिकामानेतुं प्रेषयामि ' इति विमृश्य शनैः रणवीराभ्यर्णमुपससार । अवलोक्यैवैनं चमच्चकार रणवीरः । परं संवृताखिलवदनविकारभारमङ्गतरङ्गोऽयं शान्तमुद्रया स्थितवान् । तदुपकण्ठमुपेत्यासौ तदीयस्कन्धे हस्तं निधाय मन्दस्वरमगादीत्– ' कुमार ? किमर्थमिहान्तर्हितोऽसि त्वम् ? ' इति ।

रणवीरः । कथनीयमादौ स्वनाम, पश्चादहमात्मानं परिचाययिष्यामि ।

क्रूरः । ( स्वगतम् । ) चतुरोऽयं बालो दृश्यते । ( प्रकाशम् । ) कुमार ? भवोवाहं सम्पत्तिशाली पुरुषोऽस्मि ।

रणवीरः । आ एवम् ! अतिहर्षकरमिदम् । भवतु, कुत्र भवतो निवासः ?

क्रूरः । इतोऽनतिदूरं निवासस्थानं मे ।

रणवीरः । अस्तु । तदत्र किमर्थमुपास्थायि महानुभावेन ?

क्रूरः । ( विमृश्य ) कुमार ? कश्चिद् भृत्योऽभिलष्यते मया । तदर्थमेव ममात्रागमनम् । पश्य-सुरभमहं सकलमात्मवृत्तमावेदयम् । तदिदानीं त्वयापि निवेदनीयमात्मवृत्तम् ।

---

१ आस्फालनरोद । २ लब्धा । ३ लभ्यते ।

रणवीर । (सपरिहासम्) तथ्यमभिहितं श्रीमता ! अहमपि भवानिव पर्यटक ।

क्रूर । (सामर्षम्) कुमार ? त्वं पर्यटकमवधारयसि किमु माम् ?

रणधीर । क्षम्यतां दयालुना । भवन्मनो व्यथितं त्वा ममामुना भाषणेनेति नाह-मवागमं खलु ! अहमपि कश्चन पर्यटकोऽस्मि । कैङ्कर्यान्वेषणार्थमितस्ततोऽहं संचरामि, किन्तु नोपलभ्यते निजमनोऽनुकूलः कोऽपि श्रेष्ठी ।

क्रूरः । (सहर्षम् ।) कुमार ? प्रसीदामितमामहममुना तव भाषणभङ्ग्या ।

रणवीर । सत्यमाह श्रीमान् ?

क्रूरसिंह । तत्व भविष्यसि मम किङ्कर ?

रणधीर । सहर्षमङ्गीकरोमि कैङ्कर्यमहं श्रीमताम् ।

क्रूर । तदहं त्वां विशिष्य स्वाम्यर्थमेव नियुनज्मि । यदहं त्वां कथयामि तत्त्वया दृढं स्मरणीयम् । शृणु—मम निरालस्थले स्थित्वा यच्छ्रवमाकर्णयिष्यसि यद्वा द्रक्ष्यसि तत्तत्कदापि कस्मैचिदपि न निवेदनीयं त्वया । किञ्चिदपि कदापि चेत्तत् प्रकाशयिष्यसि तदा नियतमेवा ममरणमुपस्थितमित्यवेहि ।

इत्थं तदीयवचो निशम्य रणवीरो व्यचिन्तयत्— 'अस्य सविधे निवासेन तु सर्वमस्य दुश्चरितं विज्ञास्यते मया । प्राप्तकालमथाहं पितृवैरनिर्यातनं करिष्यामि । भवतु ।' इति । अथाऽय प्रोवाच क्रूरसिंहम् 'श्रीमन् ? नाशङ्कनीयं किमपि मद्विषये भवता । सतोष यिष्यामि सुतरामहं भवन्तमात्मकृत्यैरिति ।'

क्रूरसिंह । किमभिधानं ते ?

रणवीर । रणधीर' इति मां वदन्ति जना ।

क्रूरसिंह । अहो ? कियन्मनोहरमभिधानम् ? रणधीर ? इदानीमहं त्वां कार्यमेकं कथयामि । तत्व सत्वरमेव करिष्यसीति प्रत्येमि ।

रणवीर । किमिदमभिहितं श्रीमता ? प्राणानपि विजह्यामहं भवदर्थम् ? (इति क्रूरसिंहं विश्वासयितुमवोचद् रणवीर ।)

क्रूर । पश्य । ये इमे सम्मुखीनाश्रयो जना उपविष्टा सन्ति तेषामन्यतमः पुरुषोऽस्ति द्वे च स्त्रियौ विद्येते । अपि दृश्यन्ते त्वया ? ।

रणवीर । आम्, दृश्यन्ते । कः स्वत्व धो भवतस्तैः सार्द्धम् ?

क्रूर । अस्ति स्वार्थातिशयोऽस्माकम् । शृणु तद् युवतियुगलमपहरणीयमस्ति । परं यदवधि पुरुषोऽयं वर्तते तदवधि तु शक्यमिदमिति त्वमितो गत्वाऽस्योद्यानस्य बाह्यदेशे स्थितेभ्यो भृत्येभ्य इदं मदीयमङ्गुलीयकं प्रदर्श्य भुशुण्डिका सीसकगोलिका अपि कति पया समुपानय ।

रणधीरः । बाढम् । तत किं कर्तुं निर्णीतं भवता ?

क्रूरः । त्वयि समागते पुरुषममुं व्यापाद्य तद् सुन्दरीद्वयमपहरिष्यामो वयम् । रण

धीर ! येयं वरीयसी सुन्दरी दृश्यते तया सह त्वां परिणाययिष्यामि । किं प्रमुदितोऽसि तवा सम्प्रति ! ( इत्युक्त्वाऽतिमन्दमताडयत् तदीयस्कन्धे ॥ )।

'अतिसमीचीनम्' इत्युदीर्य शूरसिंहप्रदत्तमङ्गुलीयकमुपादाय रणवीरो गतवान्। गच्छंश्चायं मनसा- 'आततायिहतक ! शूरसिंह ! त्वं कियदपि प्रयत्नं कुर्याः परमयं रणवीरो नैव सफलयिष्यति तव मनोरथम्। त्वं मां बालं मन्यसे किन्तु नास्म्यहं बालः। वयसा यद्यपि बालोऽस्मि तदप्यवागच्छमहं तव दुरभिवाञ्छितम्। केशरिकिशोरोऽस्म्यहमपि। आहरिष्यामि तवासूनहम्। दुरात्मन् ? मदीयबन्धुमाहन्तुमध्यवसितं त्वया किन्तु यावदहं जीवामि कदापि नैव फलिष्यति तव वाञ्छितम्। दुष्ट ? निस्तन्द्रोऽवतिष्ठस्वाधुना त्वमस्माद् रणवीरात्। एहि, साम्प्रतं तु बोधनीयोऽयं मया निजाग्रजन्मा' इत्यालप्य यत्र कुमुदिनीचन्द्रौ न्यषीदतां ततः कियद्दूरं स्थित्वा कस्यचन महीरुहस्याभिमुखमवलोकयन् प्रोवाच तारस्वरेण- 'अयि सारिके ? हे कीर ? शीघ्रमुड्डीयेतो भवन्तौ। समक्षोऽयं लुब्धको वां लक्ष्यीकर्तुम्। त्वरितमुपवतं युवाम्' इति प्रोच्याऽयं संकेतमाचष्टनिमकृत। तदीयमिदं कृत्यमवलोक्य चन्द्रमुवाच कुमुदिनी- 'हृदयेश्वर ! इह विलोकयतु भवान्। कियान् सुन्दरोऽयं बालः ? एष तद्वनिरुद्धाङ्गावलिविनिद्रसमैः समं किमपि हृदयङ्गमं समालपन् क्रीडति' इति।

नावगतमद्यापि किमपि स्वबन्धुनेति सम्भाव्य तं श्रावयितुकामः पुनरयं तारस्वराभिमं श्लोकमपठत्-

"यद्वधि मृगयुः शरवागलक्ष्यं नहि विदधाति भवन्तमेष तावत् ।
अपसर कलहंस ! हंसिकाभ्यां झटिति विसृज्य मनोज्ञहार्ददीर्घिकाम् ॥"

इति श्लोक्य रणवीरः कुमुदिनीचन्द्रयोरमतो गच्छद्विजआतरं'ततो गन्तुं संकेतयित्वा त्वरया निष्क्रान्तः।

चन्द्रसिंहो रणवीरकृतं संकेतं तदीयश्लोकरहस्यमपि सम्यगवगत्य समुत्थाय दिक्षु गवलोकयामास। कोऽपि नावालोक्यतामुना तदन्तराले! अथासौ विचिन्तितवान्-- 'किन्तु यदाऽनृतमुदितं भवेद् रणवीरेण ! नैव, नैवं कथयेदनृतं कदापि रणवीरः ! तदधुनास्मात्स्थानाद् द्रुतमपसरणमेव श्रेयस्करम्। यतो मया सह तिष्ठति सम्प्रति सुन्दरीद्वयम्। तदेतद्रमणीयुगलं निर्भयस्थले प्रापणीयमेव मया' इति निगद्य कुमुदिनीमवादीच्चन्द्रः- 'एहि प्रिये ! गच्छामितोऽस्मत्तु......।'

कुमुदिनी। आम्। गन्तव्यमस्माभिः। किन्तु प्राणनाथ ! कनीयानयं बालो गच्छन् किमबोचत् ?।

चन्द्रसिंहस्तु- 'मार्गे एवं विज्ञापयामि तद्' इत्युदीर्य कुमुदिनीप्रियम्वदे सह नीत्वाऽश्रमो ततो निर्यातः। गच्छन्तौ कुमुदिनीचन्द्रौ विलोक्यातितरामाकृष्टोऽभवत्कुमारः।

१ 'कदापि नृपश्यामीयो मृगयुर्लक्ष्यहोऽपि सः' इत्यन्तरः। २ प्रेमदीर्घिकाम्। ३ पाठान्तरम्।

परं किमिव कर्तुं पारयेथ्विष्लेदहरणोऽयम् ? अत्रान्तर एव धावन् रणवीरस्तत्रोपगम्य शूराय भुशुण्डिकां समर्प्यैकतोऽवतस्थे ।

शूरसिंहः । रणधीर ? अद्दीयन्त शकुन्ता ।

रणवीरः । ( सविस्मयम् ) किम् ? किमुच्यते भवता ? कुतः शकुन्ता ?

शूरः । ( स्फुटम् ) तत्सुन्दरीद्वयमस्माकमपसृतम् ।

रणवीरः । ( कृत्रिमभावदर्शनपुरस्सरम् । ) किम् ? अपसृत किमु ? इयत्येवावधौ ?

शूरसिंहः । ( तं प्रमादयितुमिव । ) रणधीर ? किमिति त्वयोदास्यते ? त्वं यदि मदन्तिके कृतज्ञतया समर्प्यसे तदा तु तदपेक्षयाप्यधिकसुन्दरीं कुमारीं तुभ्यमानीय समर्पयिष्यामि ।

रणवीरः । ( तं प्रतारयन्निव । ) नैव धीमन् ? नाभिलष्यते मया कापि कन्या । मम तु या भवता मे प्रदर्शिता सैवाभीप्सिता । चिरकालमहं महीरुहान्तरितो भूत्वा तस्याः कलितवदनाम्बुजं विलोकयन् स्थितोऽभवम् । तामुपलभ्य भृशमातुरोऽस्म्यहम् । अर्पणीया चेत्सैवानीयार्पणीया मे ।

' अतिसमीचीनम् । तदायाहि साम्प्रत ' मित्याख्याय रणवीरं सहादाय क्रूरसिंहो त्रिलासोद्यानाद् बहिराजगाम । तत्र स्थितयोर्गृहीताश्ववल्गयोरनुचरयोरन्यतरं पञ्चरामागन्तुमादिश्याऽऽजानेयमेकं रणवीरमारोप्य स्वयमपरं वनायुजमारुह्य काननाभिमुखं प्रचचाल । क्षणेनैवामी निम्बकदम्बकुरबकवटोदुम्बरनिकुरम्बसङ्कुले महारण्ये निलिल्यिरे ।

अमन्दानन्दमयं दिनमिदमद्यतनं विजयनगरे । अद्य कुमुदिनीचन्द्रयोः पाणिग्रहणमङ्गलमहामहो भवितेति किमिव वर्णनीया ननु निखिलनगरसुन्दरालङ्कारसुषमा । तथाहि–मनोहरतोरणद्वारकमनीयकुसुमगुम्फाकडकृतवल्लरीवलयैः समुन्नतवैजयन्तीवृन्दमनोज्ञकान्तिवरैः प्रफुल्लमिव पुलकाङ्कितमिव चालोक्यते नगरमखिलम् । सर्वतो हि मङ्गलतूर्यप्रमुखवाद्यानां सुखास्वाद्यानां हृद्या मधुरध्वनयः श्रूयन्ते । क्वचिच्चारुहासिनीनां सुवासिनीनां श्रुतिमञ्जुलमञ्जुमङ्गलगीतयः, कर्हिचिद् ब्रह्मविदां ब्राह्मणानां पुण्यमया ब्रह्मघोषाः, कुहचिन्मृदङ्गानां निनादाः, कुत्रचिद् रणन्तीनां विपञ्चीनां पञ्चमरागभङ्गतरङ्गाश्चाखिलजनहृदयं शाङ्कयन्ति । पथि पथि केतकवासैर्वासितवाससो महार्हरमणीयवेषजुषो मनोहरमणिमयभूषणभूषितलोचनाभिनयवपुषः सुन्दरवपुषो नागरिकपुरुषाणां सञ्चारः, चत्वरे चत्वरे निगमोपदेशामृतवर्षिणां महर्षीणां सदुपदेशाः, गृहे गृहे होमहुतहव्यद्रव्याणां सुगन्धाः, प्रत्यङ्गणं रम्भास्तम्भमङ्गलमण्डलाः, प्रतिकदलीस्तम्भमाम्रकिसलयावली, प्रतिद्वारं चन्दनकुसुममालिकाश्च कामपि परमानन्दरस-दोहसहोदरामिव मनोमुदं जनयन्ति जनिमताम् ।

---

१ निःशङ्क । २ पक्षिण । ३ वल्गा–रश्मिः प्रग्रहो वा । ४ प्रशस्तोऽश्वः । ५ वनायुदेशभवहयम् । ६ निकुरम्बकम्–समूह । ७ महोत्सव । ' मह उद्धव उत्सवः ' । ८ परमा शोभा । ९ ध्वजा । १० प्रिय । ११ वेदनादाः । १२ विपञ्ची वीणाविशेषः । १३ पाठवाधिताः प्रगल्भमुनापिता ।

अथापराह्णे मनागवलम्बमाने वरुणदिशमरुणकिरणे भगवति प्रभाकरे महता समारम्भेण साकं दुन्दुभिमर्दलझल्लरीपणवानकाहलगोजाडिण्डिमप्रमुखमनोहरवाद्यवृन्दनिनादपूरितहरिदन्तरालः प्रेक्षकजनमनोनयनानन्ददायी स्वस्थानादुच्चलितो वरयात्रासमारोहः। अग्रतोऽस्य सुस्पष्टोमण्डितबाहुदण्डानां कटितटावलम्बितमण्डलाग्राणां कलितवेत्रबाणानां शौर्यधैर्यविभूषितोत्तमाङ्गानां परःशताश्वारोहाणां प्रचलति पङ्क्तिपरम्परा। तदनु नदति स्म मधुरमधुरमतिमनोहरमेकं धौंसरङ्कं हृद्यं वाद्यम्। अथ भुजमूलारोपितचञ्चच्छितकुन्तधराणां कौन्तिकवीराणां राजिनिकरं विराजते। अनन्तरं विविधदेशान्तरेभ्यो निमन्त्रितैः रुचिरनेपथ्यशालिभिर्मणिगुच्छमण्डितमौलिभिर्विविधविपुलालङ्करणालङ्कृतकाञ्चनमयविमानाधिरूढैर्नरेन्द्रमण्डलैरधिष्ठितानां मौक्तिकमण्डनमण्डलविमण्डितशुण्डादण्डगण्डस्थलानां दन्तावलानामवलीपटकं विलसति। ततः प्रासादस्थितानां नगरश्रेष्ठिनां मण्डलं विभाति। पश्चाद् विकोशकरवालकराणां सादिवीरवराणां वलयं लसति। तदनु दौन्दुभिकमार्दङ्गिकमौरजिकाहलगौजिकप्रमुखैरधिरूढा मन्दमन्दं व्रजन्ति गजेन्द्राः। अथ सर्वेषां पृष्ठभागे सौवर्णस्वर्णकालङ्कारविभूषितसर्वाङ्गं सुन्दरमेकमाजानेयमारूढः कनककुसुमवल्लरीविचित्रितारुणाम्बरशाली विविधसुन्दरहारललितकण्ठः शातकुम्भवलयालङ्कृतकरकमलः कन्दर्पसौन्दर्यदर्पविजित्वरदेहप्रभः पर्वापतिरिव भास्वरमुखमण्डलोऽजितदुर्गाधिपतेर्महाराजश्रीकेसरिसिंहस्य युवराजकुमारः श्रीचन्द्रसिंहश्चक्षुष्मतां चक्षूंषि मनांसि च युगपदाकर्षन्निव शोभते।

वरयात्रासमारोहोऽयं राजनगरमध्यस्थलपर्यन्तमायातः। विलोक्यैनममुं सकला नागरिकजनाः 'विजयतां महाराजश्रीविजयसिंहः।' इति तारस्वरेण प्रफुल्लहृदयैर्जयमजूघुषन्। हर्म्यहाल्लिकावातायनाकादिगवाक्षजालवर्तिन्यो निखिला अपि[11]सीमन्तिन्यो निजपाणिपङ्कजविकीर्णैर्मौक्तिकैः कुसुमैर्लाजैश्चारादभिवर्धमानं वरदेवममुमवाकिरन्। 'अहो! आत्मप्रतिरूपमेव वरं वृतवती राजकन्या। महाभाग्यशालिनी खल्वियं कुमुदिनी।' इति राजकुमारचन्द्रसिंहरूपं निरूप्य परस्परं वधूवरयुगलं प्रशशंसुर्युवतयः। शनैरुपस्थितवानेष समारोहः प्रासादाग्रद्वारम्। तत्रैनं वरदेवं पुष्पहारैर्भिः सम्भाव्य प्रासुखिताः। ततो वाजिवरादवतीर्यायं चन्द्रसिंहः प्रासादाभ्यन्तरं प्रविश्य विशालं विवाहमण्डपचत्वरमुपगम्य रत्नखचितं महार्हसिंहासनमलञ्चकार। वेदविधिना राजपुरोधा यज्ञ मधुपर्कादिभिः पूर्वं वरदेवमर्चयित्वा समन्त्रपाठं तयोः पाणिग्रहणमङ्गलं कारयामास। अथ वेदमन्त्रान् पठन्तौ वधूवरौ हव्यप्रक्षेपैर्हुताशनं हुत्वा मन्त्रैर्मिथः प्रतिज्ञाय सप्तपदीविधिमनुष्ठाय यथोचितादरं महाराजश्री-

---

१ पारितथ्यमुक्तानाम्। २ शीर्षकम् शिरस्त्राणम्। ३ कुन्ताः प्रासाः। 'तद्वन्तः कौन्तिकाश्च ते'। ४ नेपथ्यं वेषः। ५ गजानाम्। ६ शातकुम्भं सुवर्णम्। ७ कन्दर्पः कामः। ८ रविः। ९ 'छमकलम्'। १० 'दृश्यानि धनिनो यानः'। ११ वातायनवृन्दम्। १२ योषितः। १३ 'आराद्दूरसमीपयोः।' १४ स्वयमानम्। १५ विलोक्य। १६ प्रहसन्तः। १७ राजपुरोहितः। १८ आर्यैः पूज्यैः।

विजयसिंह राजमहिषीं प्रभावतीं पूज्य बान्धवगणञ्च यथाक्रममखिलान् प्रणेमतुः । सर्वेऽपि ' सौभाग्यमस्तु, सौभाग्यमस्तु ! ! ' इत्याशीर्भिः सम्भावयामासुः । महाराजप्रमुखैर्नरेन्द्रैः नगरश्रेष्ठिभिश्चान्यैश्चापि वधूवराभ्यां विविधमनर्घमुपायनं स्वाधिकारानुरूपं वितीर्णम् ।

अथ चन्द्रसिंह कुमुदिनीम्-यतो महाराजश्रीकेसरीसिंहस्य प्रधानवर्यः प्रतापसिंह समुपविष्टोऽभूत्-तत्र सङ्केतेन निनाय । तमुभौ दम्पती प्राणमताम् । प्रधानवरोऽथ कुमुदिनीचन्द्रौ स्वकरेणोत्थाप्य गद्गदगिरा व्याजहार-' युवराज ? युवराज्ञि ? आयुष्मन्तौ भूयास्तां भवन्तौ । रक्षताच्चिरन्तरं वां परमकारुणिकः परमेश्वरः । अये ? महाराजश्चेदिदानीमजीविष्यत् कियदानन्दितोऽभविष्यदसौ । ' इतीरयित्वा रत्नजटितत्सरुरमणीयं कृपाणं[1] चन्द्रसिंहकटिप्रान्ते निबद्धवान् । तदनु कुमुदिनीचन्द्रौ चन्द्रशालायां गतवन्तौ । तत्र सुपरिष्कृते दन्तिदन्तपर्यङ्के हंसतूलिकायां मृदुतूलिकायामुपविश्य प्रफुल्लहृदयौ समालपतां तौ दम्पती। अत्रान्तरे गुप्तवेषेण कनिष्ठराजकुमारो रणवीरस्तत्रोपेत्य कुमुदिनीचन्द्रौ प्राणंसीत् ।

चन्द्रसिंह । ( साश्चर्यम् । ) किम् ? रणवीर किमु ? वत्स ? कुतस्त्वमिदानीमत्र ?

रणवीर । ( सपरिहासम् । ) भ्रातर्भ्रातृजायाञ्चाभिवादयितुमागतोऽस्म्यहम् । परं प्रजावत्या तु न किमप्यालप्यते ? ।

कुमुदिनी । प्राणनाथ ? इहास्माकमेकान्तस्थलमागतः कोऽयं वीरबालो विचित्रवेषेणामुना ?

रणवीर । ( मध्य एव ) भ्रातृजाये ? ननु देवरोऽस्मि ते । अभिज्ञातो न वाहं किमधुना ?

ईदृशि परिहासमधुराणि वचांसि निशम्य विस्मयाम्बुधिमग्ना कुमुदिनी ' कोऽयं बालो भवेद् ? ' इति विचारसागरे निलीना । तस्यास्तादृशीं दशां निरीक्ष्य चन्द्रः प्रावोचत्-" कुमुदिनि ? यदर्थमहमरण्यादरण्यं भ्रान्तवान् स एवायं मम प्राणप्रियः कनिष्ठबन्धू रणवीरः । ' इति । ततः कुमुदिनी प्रमुदा रणवीरं स्वाभ्यर्णमाकारितवती । प्रणनाम भ्रातृजायां रणवीर । अथ चन्द्रं पृष्टवती कुमुदिनी-' नाथ ? कुतोऽयमुपलब्धो रणवीरसिंह ' इति ।

स्वप्रियायाः प्रश्नं निशम्य चन्द्रः ' कथमयं गुप्तगृहादानीतः, स्वयञ्च कथं तत्र गुप्तगृहे प्रविष्टवानिति ' सर्वमादित इमां सविस्तरं वृत्तमश्रावयत्[2] । सकलमिदमुदन्तजातमुपश्रुत्य कुमुदिन्या नेत्रे हर्षाश्रुजलबिन्दुपवित्रे अभूताम् । समयेऽस्मिन्नेका चेटी भोजनार्थं परिवेशितं पक्वान्नपूर्णं सौवर्णं पात्रमग्रमानीयोपस्थितवती । अथ यथारुचि त्रयोऽपि ते सम्यग् बुभुजिरे ।

अनन्तरं रणवीरस्तु-' शूरसिंहस्य सविधे किङ्करत्वेन निवसामि ' इति ज्येष्ठभ्रातरं निवेद्य भ्रातृदम्पतीभ्यां ... भाव्यमित्याख्याय प्रणम्य च निर्जगाम । निर्गते रणवीरे कुमुदिनीचन्द्रौ प्रेमबद्धं वार्तालापं वितेनतुः । आलपतोरेव तयोः कुमुदिनी निद्रापरतन्त्रा संवृत्ता । किन्तु

१ कृपाणमुपहारः । २ कथयित्वा । ३ गमदन्तरचितमञ्च । ४ आगमत् । ५ भ्रातृजायया ।

चन्द्रो नितान्तमनागतनिद्रत्वादुत्थाय वासांसि परिधाय मुहूर्तं बहिः पर्यटितुं विचिन्त्य नीचैरवतीर्य शनैर्द्वारमपावृत्य बहिर्निर्ययौ।

निशीथसमयोऽयमासीन्निशीथिन्याः। सर्वतो गाढं संतमसम्। न द्रष्टुं पार्यते किमपि जनेन। ईदृशे समये प्रासादादनतिदूरे एवेतस्ततो विचचार चन्द्रसिंहः। विचरतैवानेन स्पष्टस्तवः कस्यचित्पादक्षेपध्वनिमिवाश्रौषीत्। अतोऽयं किञ्चिद् रुद्धः। प्रशान्ततया शर्वर्यां ध्वनिरेष सम्प्रति स्फुटमश्रूयत। ततोऽधिकं [1]सन्दिहानोऽयं निकटवर्तिनो विशालवृक्षस्य पश्चात्स्थित्वा समन्ततो निपुणं निरैक्षिष्ट। क्षणानन्तरमेव मनाग् दूरतः काचन कृष्णाकृतिः शनैर्निःशब्दपादक्षेपं प्रयातीति निश्चितममुना। आकृतिरियं नीलवसनप्रावृता परितो दृशं निपातयन्ती प्रच्छन्नं गच्छति स्म। अकस्मादीदृशीमाकृतिमालोक्य चन्द्रसिंहो मनसि– 'केयमाकृतिः ? किञ्चास्याः प्रयोजनं भवेत् ? एहि, अहमपि ता सानुसन्धानमनुसरामि।' इति विचार्य स्वकटिनिबद्धावलम्बितं परीक्ष्य चन्द्रहासं सावधानः सत्वरं तामाकृतिमनुससार। आकृतिरेषा शनैः शनैर्नगरवीथिका विलङ्घ्य प्रासादसमीपमुपगम्य क्षणं स्थित्वा समन्तादवालोकयत्। अत्रान्तरे प्रासादरक्षकप्रहरी पर्यटंस्तत्रोपागतः। प्रहरिणं वीक्ष्य आकृतिरियं स्वस्थानादपसृत्य विटपिकाण्डान्तरिता स्थिता। प्रयाते प्रहरिणि पुनरियं बहिर्निर्गम्य मन्दं संकेतस्वनमकार्षीत्। संकेतशब्दसमकालमेव तादृश्य एव नीलवस्त्रवेष्टिताः[2] द्वित्रा आकृतयस्तदुपकण्ठमाजग्मुः। ताभिर्मन्दस्वरेण मिथः समालपितमित्थम्–

प्रथमाकृतिः। नायकसिंह ?

द्वितीयाकृतिः। कोऽयम् ? सेनापतिः क्रूरसिंहः किमु श्रीमान् ?

इति वचो निशम्यैवाश्चर्यचकितश्चन्द्रसिंहः प्रच्छन्नं दत्तकर्णोऽतिष्ठत्। येयं प्रथमा आकृतिः सा क्रूरसिंहस्य; या चेयमपरा सा तदनुचरस्य नायकसिंहस्येति विज्ञेयं श्रीमता वाचकनिकरेण !

क्रूरसिंहः। किं नायकसिंह ? अपि निष्पन्नं कार्यम् ?

नायकसिंहः। चमूपते ? बहूनि राष्ट्राणि दृष्टान्यस्माभिः किन्तु विजयसिंहस्य राज्यमिदमतीव दुर्गमम्। पश्यतु भवान्। आगच्छद्भिरिहास्माभिः कियत्कष्टमनुभूतानि ? इदानीमस्मन्मनीषितं सिद्ध्येच्चेन्महाननुग्रहो भगवतः।

क्रूरः। वीर ? कथमेवमधीरोचितं भाषसे ? यदेवायं निश्चिनुते क्रूरसिंहः; समर्थोऽस्त्ययं तत्साधयितुम् ? शृणु–कार्यद्वयमिह राज्ये करणीयमस्माभिः। प्रथमं तु तत्कर्तव्यं यदर्थमधुना वयमत्रागताः। अपरमिति प्रोच्य क्रूरसिंहः किमपि तदीयकर्णे प्रोवाच। ततश्चमत्कृत्यायं नायकसिंहः क्रूरसिंहाभिमुखं चक्षुषी विस्तार्य विलोकितवान्।

क्रूरः। किमर्थमेवमुद्विजसे ? तत्कार्यमपि साधयितुं पारयिष्यामो वयम्। सन्नद्धो भव तदधुना। होराचतुष्टयमेवावशिष्टमधुना रजन्याः केवलम्। तदन्तराले सम्पादनीयमस्मा-

---

१ संदिहानः। २ 'रुमा प्रनेको विष्टिता' इत्यपर।

भिरात्मकर्येम् । शृणु यथैव त्वं प्रासादे प्रविश्य निहत्य शनैः सङ्केतस्वनं विधास्यसि, तथैवाहं चन्द्रवतीपरिसरगर्तेषु स्वानुचरैः सार्कं निलीनौ तेजस्विसिंहारणसिंहौ सङ्केतयिष्यामीति तेऽपि द्रुतमिहागमिष्यन्ति ।

इयत्कालं योऽत्र चन्द्रसिंहः प्रच्छन्नः सकलं वृत्तं शृणोति स्म, सोऽकस्माच्चमत्कृत्य मनसि समवादीत्– ' किं चन्द्रवतीपरिसरगर्तभूमिषु प्रत्यर्थिनोऽन्तर्हिताः सन्ति ? किममी महाराजं व्यापादयितुमागताः सन्ति ? भवतु ? हन्त ? दिष्ट्याऽहं बहिर्निर्गतोऽधुना । क्रूरहतक ! परिपूर्णोऽधुना तव पापकलशः । मृत्युरपि ते सन्निहित एव ! दुरासद ? यावदयं चन्द्रो जीवति न तावत्कदापि तव कार्यं फलिष्यति । सम्प्रति कथं साधयसीति ' पश्याम्यहम् ! इति निगद्य तूष्णीमास्त ।

अत्रान्तरे नायकसिंहः स्वपश्चिद्वि [1]गौधेयं बद्ध्वा सार्यं तदीयलाङ्गूले प्रलम्बरज्जुं निबध्य तं प्रासादकुड्योपरि प्राक्षिपत् । प्रक्षिप्तमात्र एवासौ दृढं भित्तौ लग्नः । अपरौ च द्वौ पुरुषौ तद्रज्जुप्रान्तं कराभ्यां धृत्वा तत्र निषण्णौ । अथोपरि समारोढुं सन्नद्धो नायकसिंहः । इत्थं स्वकर्मणि व्यापृतानमूनवलोक्य झटिति चन्द्रसिंहः प्रासादद्वारसमीपं जगाम । तत्र नग्नकृपाणपाणिर्मुद्रामात्यवरः श्रीप्रतापसिंहः प्रहरिताकार्यं कुरुते स्म । तमालोक्य शनैः सङ्केतध्वनिमकृत चन्द्रसिंहः । चमत्कृत्य प्रतापसिंहः सुसज्जितः समवातिष्ठत । ' कस्यायं सङ्केतध्वनिः ? ' इति विज्ञातुं यतोऽयं ध्वनिरायातस्तत एव चचाल । तत्र प्रयातमेवामुम्– ' आर्यप्रतापसिंह ? ' इत्याकारयच्चन्द्रः ।

स्वनाम निशम्यैव साश्चर्यमना व्यमृशत्प्रतापसिंहः ' अये ? कोऽयं स्यादीदृशे निशीथे मदीयनामविज्ञाता ? मित्रं शत्रुर्वासौ भवेत् ? ' इति । अलक्षितगतिरेव सत्वरं प्रतापसिंहश्चन्द्रसिंहसमीपमुपासदत् । तत्क्षणमेवासौ चन्द्रं परिचित्य समवादीत्– ' कोऽयम् ? राजकुमार ? कुतो भवानिदानीमिहेति ? '

चन्द्रसिंहः । ( तमिङ्गितेन मौनमाकलयितुं सूचयित्वा–तन्निकटमेत्य शनैस्तत्कर्णे । ) ममार्यवर्य ? महदनर्थमेकमत्र निर्मितं कूटयन्त्रं शत्रुणा ।

प्रतापसिंहः । किं किं किमस्ति खलु ? सत्वरं निवेद्यताम् ।

चन्द्रसिंहः । दुराशः क्रूरसिंहोऽत्रागतोऽस्ति । तदन्तिके साम्प्रतमत्र द्वौ पुरुषौ स्तः । नास्त्यवसरः सम्प्रति भूयस्तत्राऽऽलपितुम् । अधुनैव भवान् निजान् शतं वीरान् सह नीत्वा दुर्गद्वारमुपगम्य तिष्ठतु । नियतं बहिर्गच्छन्नभ्यन्तरं वा प्रविशन् कोऽपि नरो भवता । चन्द्रवतीपरिसरगर्तस्थलेषु प्रतिद्वन्द्विनः सैन्यं प्रच्छन्नं तिष्ठति । ये एते त्रयोऽत्र सन्ति पुरुषास्तेषु स्वयं क्रूरसिंहोऽपि वर्तते । स सम्प्रति मे महाराजं व्यापादयितुमायातः । सन्ति ! याहि याहि भवान् सपदि । अभ्यन्तरात्कश्चिदपि पलायमानो यदि बहिर्गच्छेत् यथासम्भवं जीवन्तमेव निगृह्णातु; अन्यथा व्यापादयतु भवानमुम् ।

---

[1] गोधिकाम् । [2] पुच्छे ।

इत्थं चन्द्रसिंहभाषितमाकर्ण्य प्रतापसिंहः सञ्जीभूतः। तस्य धमनीषु कवोष्णशोणितं प्रावहत्। प्रस्फुरितमिव वीरतया सकलमस्य वपुः। तत्क्षणमेव राजकुमारमापृच्छय गत्वा स्वान् शतं वीरवरान् सह नीत्वाऽयं दुर्गद्वारमुपगम्य सुसज्जितः समवतस्थे। त एव-इमे वीरमयाः अभूवन्, यानयमजितदुर्गनगरान्महानीतवान्। प्रयाते प्रयामवर्षे सद्य एव चन्द्रसिंहः प्रासादद्वारसमीपमाजगाम। 'कोऽयमिति' प्रहरिणा पृष्टोऽयं तत्रिकटमागत्य-'एषोऽहमस्मि। रघुसिंह ?' इत्युदतारीत्। सोऽपि चन्द्रसिंहमभिज्ञायोपसृत्य सादरं नत्वा—'महाराज ! किन्नु कारणमकस्मादिहागन्तुमत्रभवतां निशीथे ? आदिश्यतामयमनुचरः।' इत्यप्राक्षीत्।

चन्द्रसिंहः। रघुसिंह ! सावधानो भव।

रघुसिंहः। आम्। कथं प्रभो ?।

चन्द्रसिंहः। अहं प्रासादाभ्यन्तरं गच्छामि। त्वया द्वारसमीपे स्थित्वा निवारणीयः कोऽपि प्रविविक्षुश्चेत्। अप्यवगतं त्वया ?।

रघुसिंहः। आम्। विज्ञातम्। परं किं नु जायते वृत्तमिति निवेद्यतां प्रभुणा।

चन्द्रसिंहस्तु—'अमूल्योऽयं समयोऽतिनिरामिदानीम्। साम्प्रतमेकमतिभयानकं वार्तिष्यमाणं वृत्तमिति सज्जीभूयाप्रमत्तस्तिष्ठेर्भवान्।' इत्युदीर्य त्वरया प्रासादं प्रविश्य निःशब्दपादक्षेपं कतिपयमण्डपान् प्रोल्लङ्घ्य चन्द्रशालां प्राप। समयेऽस्मिन्महाराजश्रीविजयसिंहः सुन्दरपर्यङ्के तूलिकायां गाढमस्वपिष्ट। पर्यङ्कान्तरे श्रीमती राजमहिषी प्रभावती निद्रागताऽभूत्। मध्येऽमन्दालोकः प्रदीप एकः प्रदीप्यते स्म। दीपं मन्दप्रकाशं विधाय स्वयमेकस्मिन् कोणे विततपाटलगवाक्षजालानि: समवातिष्ठत चन्द्रः। अथ क्षणानन्तरमेव मन्दध्वनिरजायत। सद्य एव चन्द्रशालायाः पृष्ठदेशवर्ति वातायनमपावृतम्। गवाक्षवर्त्मना चन्द्रशालां प्रविवेश नायकसिंहः। तमवलोक्य सुमग्नः समतिष्ठत चन्द्रः। स्वकटिवस्त्रदीपिकेर्त्तुकां निष्कास्य महाराजाभिमुखमभिद्रुत्य नायकसिंहो यावन्महाराजं निहन्तुं प्रवर्तते तावदेव कुपितो मृगेन्द्र इव स्वस्थानादुत्प्लुत्य नायकसिंहं साहसचरवारेण चन्द्रः। केवलमेकेनैव प्रहारेण पामरस्य तस्य मस्तकं कलेवरात्पृथग्भूयाऽपतत्। प्रावर्तत ततो रुधिरधारा। कैवल्यं कन्दनमाकर्ण्य शान्तमभूत्। क्षणादेवालुप्त दुरात्मनः प्राणाः सरस्वाः। अभ्रान्तो वैनन्तिसिंहोऽपि स्वामिनस्साहाय्यार्थमुपरि समागन्तु तदागतवान्। तमपि निगृह्य चन्द्रसिंहो व्याहार्षीत्—'नराधम ? त्वमेवेदानीं जीवितावशाम्। न सोढुमर्हं तव भारं वसुन्धरा' इति व्याहृत्य खड्गेन तं प्राहरत्। 'हा हतोऽस्मि' इत्युच्चैरात्तरवेण महीतले निपत्य क्षणेनैव पञ्चत्वमयासीत्। तदीयनादैरवबुद्धय श्रीमती राजमहिषी महाराजश्चोभौ प्रबुद्धौ सम्मुखनिपतितं शवयुगलं विलोक्य भृशमाश्चर्यचकितौ समभूताम्। 'किमिदं वृत्तं संवृत्तमि'ति विचिन्तयामासतुरुभौ। तस्मिन्नेवान्तरे चन्द्रः सम्मुखमागत्य महाराजमभिवन्द्य-

१ नाडीषु। २ ईषदुष्णं रक्तम्। ३ तीव्रप्रकाशः। ४ छुरिकाम्। ५ मस्तकरहितं वपुः।

' महाराज ? महानविनयोऽयं जातः । विवशेनैव मयेदं कृतमिति क्षन्तव्योऽहम् ' इति जगाद ।

विजयसिंहः । चन्द्रसिंह ? मदीयतनयनिर्विशेषस्त्वमिति नास्त्येवात्र ते निरोधः । परं कथय कथमिदमखिलं वृत्तं संवृत्तमिति ? ।

चन्द्र । भगवन् ? प्रचण्डवैरी क्रूरसिंहोऽयमपसृतवानिति सुतरां दुःखितोऽस्म्यहम् ( इति निगद्य सकलं वृत्तान्तं न्यवीविदद्वरेन्द्राय चन्द्रः । )

क्रूरसिंहस्य कपटवृत्तान्तममुमाकर्ण्य भृशं कुपितवान् महाराजः । स्वप्राणत्राणदक्षं दयमिति नितरां प्रशशंस चन्द्रं नरेन्द्रः ।

अधुनाऽधोवर्तिना क्रूरसिंहेन किमकारीति पश्यामो वयम् । तेजस्विसिंहस्य चीत्काररवमुपश्रुत्य ' परिणतं वृत्तम् ' इति सम्प्रधार्य ततो दुर्गद्वाराभिमुखं पलायत क्रूरः । यथैवायं दुर्गद्वारं प्राप्तस्तथैव प्रहरिणा निरुद्ध इति सद्य एवासौ ततो निवृत्य दुर्गप्राकाराभित्तिमारुह्य बहिः सोत्फालमपसृतः ।

संजातप्रायोऽयं प्रातःसमयः । विलीनमुडुमण्डलम् । तनूभूतं तमः । अरुणाम्बरशालिनी विराजते पुरन्दरदिगङ्गना । विहङ्गमकलकलमुखरं विपिनतरुकुलम् । कुसुमसौरभसुरभिः संसरति सन्ध्यासमयसमीरः । नाधुनापि भगवानम्बरमणिरुदयाचलशिखरमौलिमण्डनभावमङ्गीकुरुते । ईदृशे समये वीरवरो मन्त्रिवर्यः प्रतापसिंहः प्रासादस्थितं महाराजमुपगम्य कृताञ्जलिरभाषत- ' राजेन्द्र ? चन्द्रसिंहकथनानुसारमहं नैजान् शतं वीरान् सह नीत्वा दुर्गद्वारि स्थितोऽभवम् । तदनु होराद्वयानन्तरमस्मदभिमुखं समुद्विग्न एको धावमानो जनो दृष्टः । तत्क्षणमेवाहम्- ' क्रूरसिंह एवाऽयम् ' इत्यभिज्ञाय तं निग्रहीतुं वीरानाज्ञप्तवान् । परं वीरैर्निग्रहणात्पूर्वमेवायं दुरात्मा दुर्गप्राचीरकुड्यं समुल्लङ्घ्य पलायाञ्चक्रे । अथाहं सैनिकैः साकं दुर्गाद् बहिर्निष्क्रम्य चन्द्रवतीतटगतभुवि निलीनान् सपत्नानन्वेष्टुमगमम् । परमस्मत्संज्वालितानां स्थूलवर्तिकादीपकानां विद्योतेनाशङ्किता विद्विषिणः-इति झटिति पुरस्तादुत्तलभुवि स्थापितानां तुरङ्गमाणामन्तिकं पलाय्य यानारोहणपरतन्त्राः । क्रोशयुगं यावदनुद्रुता वयं किन्तु पदातिसैन्यमस्माकं यानधारोहानधिगन्तुं न शशाक । तथाप्यस्मद्वीरैः सत्वरमनुपत्य पञ्चविंशतिः शत्रूणां व्यापादिताः । अवशिष्टा विद्रुताः । निहतानां वैरिभटानां तुरङ्गानादाय श्रीमदन्तिकमुपेयिवानहम् ' इति ।

प्रधानवरनिगदितां वार्तामुपश्रुत्य सुतरां संतुष्टान्तरङ्गो महाराजो निजाङ्गुलितो हीरकखचितमङ्गुलीयकं निःसार्य पारितोषिकत्वेन तस्मै वितीर्य तं विससर्ज । अनन्तरमुषःपार्थिवेयं ' सन्ध्यादेवी ' इत्यवधार्य नरेन्द्रो नित्यनियमसम्पादनाय प्रास्थित । वृद्धः प्रतापसिंहोऽपि स्वनिकेतनं ययौ । वीरवरश्चन्द्रसिंहस्तु कियत्कालपूर्वमेव महाराजनिदेशमुपलभ्य स्वशयनम-

---

१ तारकवृन्दम् । २ प्राची । ३ सौरभं सुगन्धः । ४ शिरोभूषणताम् । ५ 'मशाल' इति प्रसिद्धा । ६ प्रकाशेन । ७ पत्ति ' पैदल ' इति भाषा ।

न्दिरं प्राप्य तत्र दृष्टवान्– ' यत्कुमुदिनी किञ्चि चमत्कृतेमेव प्रबुद्धा–' क्व प्रस्थितो मेऽवेदि-दानीं हृदयेश्वरः?' इति विचाराम्बुधितरङ्गैरान्दोलितान्तरङ्गाजायत ' इति । विचारकल्लोलमेहल्लो-लितां दयितामालोक्य तदुपकण्ठमुपगम्य स्थितवांश्चन्द्रसिंहः । चन्द्रमवलोक्य भृशमानन्द-सान्द्रहृदया कुमुदिनी–' कुत्रेदानीं गतोऽभवदार्यपुत्रः ? ' इति पृष्टवती । दयिताया मधुर-प्रियं वचो निशम्य चन्द्रः प्रसन्नमनाः सकलखिलं रात्रिचरित्रं पवित्रहृदयामर्धाङ्गिनीमश्रावयत् । स्वप्राणेश्वरेण निजपित्रोः प्राणा रक्षिता इति श्रुत्वा कुमुदिनी चन्द्रस्य बहूपकारं मेने । अखिलां रात्रिं प्रबुद्धोऽयमिति प्रातर्नियममवसाय्य सुष्वाप चन्द्रः । कुमुदिनी चेयं पित्रोरुपकण्ठं गतवती ।

कालोऽयं कठिनककुंभोद्दाममल्लीलानां सलीलानां प्रकटितघनघनाघनाडम्बराम्बराणां कृता-खिलहर्षवर्षाणां वर्षाणाम् । अस्ति चापराह्णसमयः । परमद्य मार्तण्डमण्डलं न तावदावृतं मेघमालया । अभिनवपुरन्दरगोपैर्मण्डिता हरिततृणकन्दलमयी केदारवसुन्धरेयं दिनेन्द्रकिरणप्रभावल्लीभिः किमपि रमणीयकं कलयति । मन्दारदामकान्ति कलयन्ती धाराधरावल्लीमधोऽधःपतन्ती चारुबलाकाश्रेणी मधुरकलरवं कुर्वाणा प्रेक्षकाणां मनो नन्दयति । केदारभुवि स्वकार्यतत्पराणां क्षेत्रपालकानां मण्डली सानन्दं गायति ग्राम्यगीति-कावलीम् । क्वचिदिन्द्रगोपविचित्रितायां नूतनशाद्वलललितायां रुचिरोपवनवसुन्धरायां जलद-मृदङ्गानाममन्दमन्दमञ्जुलं नादमाकर्ण्य चन्द्रकिकदम्बकं प्रफुल्लकेकारवं कुर्वन् निजचारुकला-[11]पवृन्दं प्रसार्य सानन्दं नृत्यति । भगवान् दिवाकरः कदाचिज्जलदजव[12]निकान्तरे निलीयमानं कदाचिदाविर्भावयन्नालोचकानां विलासं जनयतितराम् । हरिततृणाशनपी-[13]वरमधुरां गवेन्द्रगोवृन्दवैरोचनदेमाहिषादिपशूनां सन्दोहो दर्भाङ्कुरान् कवलयन् सहर्ष-मरण्यानीस्थलीषु विचरति ।

ईदृशे दर्शनीये समये महाराजश्रीविजयसिंहो मृगयारसाक्षेन वाह्यकाननभूमिशोभामव-लोकयितुमभिलषितवानिति–आगमनासमं चन्द्रसिंहं नेतुमाकारयामास किङ्करेण । मुहूर्ता-न्तरमेव मृगयावेशधारी तुरङ्गं कुरङ्गमिव नर्तयन् प्रासादाग्रभुवि समुपतस्थे चन्द्रसिंहः । चन्द्रसिंहं सकवचमवलोक्य महाराजोऽपि सज्जीभूय निजमाजानेयमारूढवान् । वृद्धमन्त्रिव-र्येण स्वकं सैन्यं सह नेतुं न्यवेदि किन्तु न्यषेधि नरेन्द्रेण सह नेतुम् ।

विजयनगराद् बहिर्निर्गत्यानयोरश्वारोहयोः [15]सगरुत्मद्गति प्रधावितौ निजसैन्धवौ[16] । अथाकस्मात् प्रादुर्भूता पुरस्तात् सहृदहृदनादं कुर्वाणा [17]वात्या; तया साकं महाराजस्य प्रकु-पितं वाममङ्गम् । ईदृशममङ्गलसूचकं चिह्नमवलोक्य महाराजश्रीविजयसिंहश्चन्द्रसिंहम-

---

१ अर्जुनवृक्षः । २ घनघनाघनः सान्द्रमेघः । ३ मूर्छितवृन्दम् । ४ इन्द्रकीटः । ५ कन्दलोऽ-ङ्कुरः । ६ क्षेत्रभूमिः । ७ मन्दारपुष्पमाला । ८ मन्द्रो गम्भीरः । ९ चन्द्रकी मयूरः । १० केका वाणी मयूरस्य । ११ बर्हसमूहः । १२ तिरस्करिणी । १३ पीवरः मांसलः । १४ [illegible] । १५ गरुडगमनम् । १६ सैन्धवेऽश्वः । १७ वातूलम् ।

पदत्– ' राजकुमार ? किमेवमद्य भवतीति ? '

चन्द्रसिंहः। ( स्वानुमतिं प्रकटयन्। ) राजेन्द्र ? अङ्गीक्रियते चेन्मम वचनं न गम्यतामद्य मृगयार्थं श्रीमता। किमप्यमङ्गलं वृत्तं भवितेत्याशङ्कते मम हृदयम्। यतो महाप्रबलवैरिहतकः क्रूरसिंहः स्वकरपञ्जराक्षि-सृतवानस्ति। श्रुतं किञ्च मया– 'एषोऽस्मिन्नेव भयानके महारण्ये निवसतीति। तदितोऽपि निवर्त्तनं श्रेयस्करम्। परतः प्रभु प्रमाणम्।

विजयसिंहः। ( स्वनिश्चयं दर्शयन्। ) वीरराजन्यकुमार ? तव वदनारविन्दाद्येदंशि वचांसि निशम्य सुतरां विस्मितोऽस्मि। न शोभते वचनमीदृशं भवन्मुखात्। बहिर्निर्गतो वीरराजन्यः कदापि सपत्नभिया निवर्त्तेत किमु ? चन्द्रसिंह ? भवतु यद् भाव्यम् ? किन्तु नैव निवर्त्येत खलु मया ? तद् गन्तव्यमरण्ये।

अथाम्यां कशाघातेन ताडितौ वाजिनौ वायुजवेन विद्रुतौ होरानन्तरमेव महतो गिरीन्द्रस्य परिसरारण्यस्थलमुपसेदिवांसौ। आसेदुषी सम्प्रति सायंसन्ध्यावेला। अस्ताचलं जिगमिषुर्भुवनभास्करोऽकस्मादरुणजलधरपटलाभ्यन्तरे निलीनः। रुचिकरारुणाम्बुधरपटलमयाम्बरमावसाना तिलकमिव रविबिम्बमालिके दधाना लालितललनेव वरुणदिगङ्गना काचिद् विचित्ररुचिरां रुचिमाविर्भावयन्ती विलसतितराम्।

इमौ तुरङ्गारोहौ तत्र स्थित्वा विश्वेद्ग्निभालितवन्तौ किन्तु न दृष्टं किमपि सत्त्वं ताभ्याम्। अत्रान्तरे विलोकितो महाराजस्य मनागग्रतः स्थितेन चन्द्रसिंहेन गिरीन्द्रकन्दरान्तरे निद्राणो मृगेन्द्रः। तत्क्षणमेवायमिमं कण्ठीरवं महाराजं दर्शितवान्। अथोभावपि गिरिगुहाभ्यर्णमुपगम्य किञ्चिद्दूरं स्थित्वा भुशुण्डीनिर्ह्रादमकुरुताम्। भुशुण्डीस्वनश्रवणसमकालमेव केसरी सहसा चमत्कृत्य किञ्चिद्दृशौ कुञ्चनैरालस्यं निरस्य समुत्थाय भयङ्करगर्जनया समं बहिरभ्यागमत्। वनराजस्य भयानकगर्जनया सर्वेऽप्यरण्यवासिनो जन्तवो व्याकुलीभूयेतस्ततः कान्दिशीका दिशो भेजिरे। एतस्मिन्नन्तरे महाराजविजयसिंहः पुनर्द्वितीयं भुशुण्डीस्वनमकार्षीत्। अतोऽथ मृगेन्द्रः संकुप्य सहसा दूरमुत्फाल्य नरेन्द्रस्योपरि पर्यपतत्। एतत्तत्कालमेव चन्द्रसिंहेन सिंहस्योपरि विसृष्टा सीसकगोलिका। परं नात्रस्यदसौ स्वल्पमपि केसरी। एष तु स्वप्रतिद्वन्द्विसम्मुखमेव ससाहसमभ्यपप्तत्। विजयसिंहो निजप्राजानेयं वर्तुलं परिभ्रमयन् पञ्चास्याक्रमणं निष्फलं व्यधात्। हर्यक्षोऽपि घोरं गर्जन् वाजिनमनुबभ्राम मण्डलेन। तत प्राप्तावसरो नरेन्द्रो मृगेन्द्रमस्तकमभिलक्ष्य गोलिकां विससर्ज। भुशुण्डीनिर्गता गोलिका पुण्डरीकस्य भालस्थले तीक्ष्णं लग्नेति घोरं चीत्कृत्य मृगाधिराजो धरणीतले निपत्य व्यचेष्टत। सद्य एव चन्द्रहासेन तं निजघान चन्द्रसिंहः। मृगेन्द्रं मृतमालोक्यातितरामाननन्द नरेन्द्रः। अथ विश्रमितुमेकं विशालतरुतलमासाद्य समुपविष्टावुभौ राजेन्द्रराजनन्दनौ।

---

१ अलर्टे। २ समन्ततः। ३ भवपवमर्दने। ४ ' सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः '।

एतस्मिन्नन्तरे निकटवर्तिनिबिडनिकुञ्जाभ्यन्तराद्विर्जगाम [1]कुरङ्ग एकः । निरीक्ष्यैवैनं हरिणं विजयसिंहचन्द्रसिंहौ शनैर्हयमारूढौ । लक्ष्यीकृत्यामुं मृगं भुशुण्डीनिःस्वनं चक्रतुः । दैवयोगेनापरा[2]द्धगोलिकौ संजाताविमौ । ततोऽयं वातायुर्वातवेगेन विद्रुतः । तत्क्षणमेवैतौ तुरङ्गारोहौ तं कुरङ्गमनुधावितवन्तौ निजतुरङ्गमौ । पलायितोऽयमजिनयोनिर्वायुरंहसा । तस्य धावतोर्मध्ये महदन्तरं समजायत । स्वहस्तादपसृतं हरिणं विलोक्यातिविवृद्धमन्युर्विजयसिंहः क्रुधेव वराकं वाजिनं कशया द्वित्रिः प्राहार्षीत् । तत्क्षणमेवायं चतुरस्तुरङ्गमः प्लुतगत्या पवनजवेन पलायत । तत्पृष्ठतो राजकुमारोऽपि निजघोटकं त्वरयाऽधावयत् । किन्तु वाहोऽस्य विजयसिंहस्याजानेयमनुधावितुं नाशक्नोत् । महाराजस्य हयः पश्यत एवास्यातिदूरं गत्वा क्षणेनैव नयनपदवीमतीतः । चन्द्रसिंहस्य सप्तिरिमं वायुवेगेनानुधावति स्म । अत्रान्तरे तत्रारण्ये विभिन्नदिगवलम्बिनौ द्वौ पन्थानौ तस्य दृष्टिपथमुपागतौ । अतोऽयं तुरङ्गरश्मिं समाकृष्यामुं स्थिरयित्वा व्यचिन्तयत्–'केन पथा गतो भवेन्महाराजः ? सम्मुखमियं घोरा रजनी । मुहूर्तानन्तरं तु मार्गोऽपि नावलोकयेत ! इतो विजयनगरमपि विप्रकृष्टतरं वर्तते । केन वर्त्मना गन्तव्यमधुना मया ? किंवृत्तान्तः खलु भवेन्महाराजः ? ' इति ।

तत्र कोऽपि मानवोऽपि नावालोक्यत यमनुयुञ्जीतायम् । किमिदानीं कुर्यादयम् ? अत्रान्तरे ध्याननिमग्नोऽसौ प्रभुरिव स्वाभिमुखमायान्तं कञ्चन जनमदर्शत् । अमुं दृष्ट्वाऽतीवहृष्टः सहर्षं मनसा–'अये ? ईदृशे भीषणेऽरण्ये नक्तमसौ मनुष्यः कुत्र प्रयाति ? ' इत्युक्त्वा तदभिमुखं विलुलोके ? 'आगन्तुकोऽयं मदभिमुखमेवायाति' इति निर्धार्य चन्द्रसिंहो गम्भीराकारं तस्थौ । स एष पुरुषो राजकुमारस्य नेदीयान् संवृत्य भूतलं नत्वा विरचिताञ्जलिरन्वयुङ्क्त–'भवानेव किमु राजकुमारश्चन्द्रसिंहः ? ' इति । अपरिचितजनमुखान्निजमभिधानं निशम्यैव विस्मितमना अवादीच्चन्द्रसिंहः–'आम्, अहमेव चन्द्रसिंहोऽस्मि । कस्त्वम् ? कुतो मां परिचिनोषि ? अहं तु त्वां नाभिजानामि' इति ।

आगन्तुकः । सत्यम् । भवान् मां कदापि नावलोकितवानिति कुतो मां परिचिनुयात् ? परमहन्तु सम्यगभिजानामि भवन्तम् । श्रीमन् ? परिश्रान्तोऽस्म्यहं तु भवन्तं विचिन्वन् । महाराजश्रीविजयसिंहस्तु क्रियाकालपूर्वमेवास्मद्विश्रामस्थानमासाद्य विश्राम्यति । तेनैवाहमादिष्टो भवतो नामरूपवर्णवेशादिलिङ्गानि समाख्याय भवन्तमन्वेष्टुम् । सच्चान्वेषणोपलब्धो भवानिति सुष्ठु जातम् ; अन्यथा न जाने कियदहं पर्यभ्रमिष्यम् । [6]तदेतर्हि मामनुगच्छतु श्रीमान् ।

'आम्, पुरो भव । ' इत्यभिधाय चन्द्रसिंहस्तमनुचालयामास [7]निजगन्धर्वम् । विशालयोः शैलयोरन्तरा भूत्वा तौ पद्धतीमनुसृत्य दरीवर्त्मना प्रचेलतुः । वाहोऽयमस्य श्रान्ततया क्वचित्तीक्ष्णशिलातलेषु प्रस्खलन् क्वचिच्चाहतचरणः पाषाणखण्डोद्घातेन चलति स्म । पर-

१ 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इति चामरः । २ भ्रष्टगोलिकौ । ३ वायुवेगेन । ४ घोटकः । ५ दूरतरम् । ६ सम्प्रति । ७ गन्धर्वो हयः ।

मधुनापि वसतिस्थानं कथं नागतमित्यवधार्यासौ तं पुरोगामिनं पुरुषमपृच्छत्- 'किं भो ! कियद्दूरमितोऽधुना तव निवासस्थलम् ? ' इति । एष तु - 'समीपमेवात् । पश्यतु भवान् । तद् दृश्यते मम वासस्थलम् । परं तदितो योजनकल्पं विप्रकृष्टं स्याद् ' इत्येकस्यां दिशि दर्शयन् कराग्रेण चन्द्रं मौनमेव प्रचचाल ।

तन्निर्दिष्टां दिशमनुपश्यतोऽपि चिरमस्य नागतं किमपि दृग्गोचरमिति चन्द्रसिंहस्तदुपरि समशयिष्ट । स तु मानवस्तूष्णीमेवाग्रतो गच्छति स्म । अथाऽकस्मान्नीलनिचोलाच्छादितशरीरं करकलितप्रज्वलितस्थूलवर्तिकादीपकजालं दशसंख्यामितं पुरुषाणां दलं सम्मुखमुपस्थितम् । तदवलोक्यैव चन्द्रमार्गदर्शको मनुष्यस्तेन सङ्गतो भूत्वा दलनायकस्य कर्णे किमपि मन्दमन्दमकथयत् । तदीयकथनमाकर्ण्य नायकोऽसौ राजकुमाराभिमुखमनिमेषचक्षुषा निरीक्ष्य निजभटान्-'निगृह्यतामयम्' इत्याज्ञप्तवान् । तत्क्षणमेव चन्द्रं निग्रहीतुममी तदभिमुखमभ्यधावन् । किन्तु तत्पूर्वमेव तु चन्द्रसिंहस्य चन्द्रहासः स्वकोषाद्बहिः सृतोऽभूत् । इदानीमेव विज्ञातं च तेन- 'वञ्चितोऽस्म्यहं छलेनेति' । स्वचन्द्रहासं तदभिमुखं धृत्वा ससंरम्भमयमब्रवीत्- 'स्थीयताम् ! । पदमेकमपि पुरो निधास्यथ चेत्सर्वेऽपि यूयं मम हस्तेन गृध्रजम्बुककाकानां भक्षणीया भविष्यथेति सत्यं जानीत । नाभिलषाम्यहं मुधा युष्मत्कवोष्णशोणितधाराप्रवाहैर्धरित्रीं मलिनयितुम् । के यूयम् ? कथञ्चैव मामाक्रान्थ ? वदत सत्वरम् ' इति ।

'वयमपि भयङ्करा यमकिङ्कराः स्मः । सेनापतेः क्रूरसिंहस्य निदेशेन त्वां निग्रहीतुमेवागता वयम् ! ' इति ते प्रोचुः ।

चन्द्रसिंहः । तद् सज्जीभवत यूयम् । प्रतीक्षते वः पन्थानं यमराजः । आदौ युष्मानहं निहनिष्यामि, ततो युष्मत्सेनापतिं नृशंसं क्रूरसिंहमपि यमनगराध्वनीनं विधास्यामि । आगच्छत आगच्छत । ये प्रथमं जिगमिषन्ति कालयमदंष्ट्रान्तराले सम्मुखमागच्छन्तु ते । इति निगद्य ससिंहनादं चन्द्रसिंहः प्रत्यर्थिनः क्रुधा प्रहर्तुमुपाक्रमत । परिपन्थिनोऽपि प्रबला आसन्निति तैरपि खड्गमाकृष्य राजकुमारोपरि परिपतितम् । वीरवरो राजकुमारोऽयं परेशस्मरणं विधाय धैर्येण सयत्नाभिमुखो बभूव । स्वचन्द्रहासं चालयन् परितः समायान्तं प्रत्यर्थिनामाघातं तदुपरि परिगृह्य दोर्येण निजरक्षणमयं व्यधत्त । पश्यतामेव रिपूणां राजकुमारेण द्वौ पुरुषौ निहतौ । ततोऽन्ये भटा भृशं रुषित्वा युगपदभिमन्युमिव कौरवमहारथवीराः राजकुमारं घोरोत्पातं पर्यवारयन् । इमे राजकुमारतुरङ्गमं निहत्य तमपि भूतले समपातयन् । किन्तु झटिति समुत्थाय महासाहसेनायं रिपुमण्डलमध्यचारी करवालं दृढं परिगृह्य करपल्लवनातिकौशल्येन युद्धवान् । सुदैवयोगेनाद्यापि तदङ्गेष्वेकोऽपि व्रणो नाभवत् । परमधुना परिवर्तितः कालः । वीरचन्द्रस्य खड्गधाराधीर्ष्वेऽपि पञ्च भटा निपतिताः । अवशिष्टाश्च पञ्चैदानीं भटाः । तेऽपि मरणाद्भयन्तो युद्ध्यन्ते । अथोपलभ्यावसरं चन्द्रसिंहो निजाम्बरं सङ्कटितटावलम्बिनीमभिधेनुकामादाय तत्राप्रकषतः स्वक-

मच्छिनत् । छुरिकाप्रहारेणायं नायकः प्रभुचरणारविन्दशरणमविन्दत । ईदृशमतुलं तस्य विक्रममालोक्यावशिष्टौ भटौ रणाङ्गनमपास्यापसृतवन्तौ । अत्रान्तर एव तेषां नक्तञ्चरसमानो लुण्ठकपरिवृढः क्रूरसिंहस्तत्र प्राप्तवान् । चन्द्रसिंहमवलोक्यासौ सहसा प्रोक्तवान् सदर्पम्– 'कोऽयम् ? ममाखेटकः किमु ? चन्द्र ! ममासन्नेदानीं तव मरणवेला इति दृढमवेहि । यावत्तव वक्षो विदार्य न पिबामि रुधिरम्; न तावन्मे मनसि शान्तिर्भवितेति ।'

चन्द्रसिंहः । अरेरे निशाचरेन्द्र ? न शक्नोऽसि किमपि कर्तुं मे । मदीयमेकमपि शिरोरुहं वक्रयितुं नास्ति विक्रमस्त्वयि । अद्यावसितं तवायुरिति नियतमवेहि ।

इदं वचो निशम्यैव क्रूरः पार्श्वस्थायिनोऽनुचरस्य श्रवणे किञ्चिदाख्याय तं क्वापि विसृष्टवान् । अथ चन्द्रसिंहनिकटमुपगत्य क्रुधा कथितवान्– 'त्वमेव चन्द्रसिंहो ननु ?' इति ।

चन्द्रसिंहः । आम् । ततः किमवधारयसि त्वम् ? ।

क्रूरसिंहः । ( शवान् दर्शयन् । ) केनामी ममानुचरा निहताः ? ।

चन्द्रः । योऽयं तवाग्रे तिष्ठति वीरवरस्तेनैव व्यापादिता इमे ।

क्रूरः । किमपि प्रयोजनमेवं कर्तुं ते ?

चन्द्रः । दुरात्मन् ? न लज्जसे प्रयोजनं पृच्छन् खलु त्वम् ? ।

क्रूरः । चन्द्र ? विमृश्य ब्रूहि खलु किमपि कटुवचनम् ।

चन्द्रः । किं करिष्यसि त्वमन्यथा ? ।

क्रूरः । किं करिष्यामि ? खण्डशो विधाय त्वां गृध्रशृगालेभ्यो वितरिष्यामि ! !

चन्द्रः । अहह ! तत्पूर्वंत्वहमेव त्वां शतधा विदलयिष्यामि । पापिष्ठ ? क्षणेनैव त्वां संचूर्णयिष्यामि ।

क्रूरः । अलं प्रलप्य !! निवारय जल्पन्तीमात्मरसनाम् ? एभिर्वचनैर्मां तिरस्करोषि किमु ? सद्य एवास्वादयिष्यामि त्वामहं फलमस्य ।

चन्द्रस्तु– 'आः दुरासद ? क्षत्रियडिम्भ ? ततः पूर्वं तु ममेयं छुरिका तवोरःस्थलं विदार्य परपारं निःसरतु ।' इति कथयित्वा क्रूरमभिद्रुतवान् । द्वावपि परस्परमसिना प्रहर्तुमारभाते । होरार्द्धपर्यन्तं तयोरजनि जन्यम् । परं कोऽपि पृष्ठं न दर्शितवान् । अथान्तरे प्राप्तावसरश्चन्द्रः स्वचन्द्रहासेन तदुपरि प्रहारमेकं कृतवान् परं तत्प्रहारमसौ सद्य एव निष्कम्पफलके निजे गृहीतवान् । चन्द्रसिंहचन्द्रहासप्रहारस्तु कृपाणोपरि तथा लग्नो यथा क्रूरसिंहश्चेन्नाग्रहीष्यत्स्वखड्गोपरि तं प्रहारं ध्रुवमेव तदास्य प्राणा उदक्रमिष्यन् । चन्द्रसिंहस्य खड्गाघातेन क्रूरस्य करात् विगलितः करवालः । स्वयमपि चायं चरणोपलपुञ्जिलान्त्रादितवान् । भूपतितं पांसुमालोडयन्तं विलोक्य तं झटिति विकरालकेसरीव समुत्पत्य चन्द्रसिंहस्तद्वक्षःस्थलमारुह्योपविश्य च तत्र निजकटिप्रान्तादपि छुरीं निःसार्य तस्य वक्षःसमीपे धृत्वा कथितवान्– 'ब्रूहि, राजद्रोहिन् ? कुक्कुर ? कया रीत्या विदारयेयं तवेदमुरस्थलकम् ? युगपदन्तः प्रवेशयेयमुत शनैः शनैः ?' इति ।

क्रूरः । ( गद्गदगिरा । ) क्षम्यताम् । राजकुमार ? भवतः क्षमां याचे ।

चन्द्रः । क्षमा ? कस्य ? त्वादृशो नराधमस्य ? नैव क्षन्तव्योऽसि । नरककृमयस्त्वा-त्वरया पन्थानमवेक्षन्ते । गृध्रफेरवसारमेयादयोऽपि तव शवमपेक्षन्ते ।

क्रूरः । ( साश्रुनेत्रः । ) आम् । अर्होऽस्मि खलु सर्वस्यास्य । एनांसि मम सन्ति घोर-तराणि । अहह ! किन्तु भवेदिदानीं मे ? राजकुमार ? सकृद् देहि मे प्राणभिक्षाम् । शरणं प्रपन्नोऽस्मि ते । कदाप्यहमितो नैवाचरिष्यामि दुरितम् । चन्द्र ? क्षम्यतामधुना भवता । शश्वदहं त्वां सेविष्ये । मा जहि माम् ।

इत्थं करुणगिरा कातरतरं मुखं विधाय नयनाभ्यामश्रूणि विमुञ्चन् क्रूरसिंहश्चन्द्रसिंहं प्रार्थितवान् । तस्याऽतिकरुणयानयाभ्यर्थनया चन्द्रस्य हृदयं दयार्द्रमजनि । क्रूरस्य वक्षसोऽवतीर्य तमसौ निगदितवान्– ' क्रूरसिंह ? गच्छ, मुञ्चामि त्वामधुना । अनुकम्पितोऽसि मया त्वम् । यद्यपि त्वयाऽतुलं दु खमदायि तदपि तदखिलं विस्मृत्य तुभ्यमहं क्षमां प्रय-च्छामि । इतः परं परमेश्वरं हृदि निधाय भूतेषु दयां विदध्या इत्येव त्वं विशिष्योपदिश्यसे मयेति । '

क्रूरः । ( साञ्जलिः । ) अत्यन्तमुपकृतोऽस्मि श्रीमता । आगच्छतु मया सह भवानिदा-नीम् । सन्निकृष्टमेवास्मन्निवासस्थानम् । अतिथिर्भवान् मे सम्प्रति । तन्मदीयवासगृहमभ्ये-त्य भोजनं विधाय सुखं शेताम् । प्रत्यूषे भवता सममागन्ताऽस्मि विजयनगरम् । महाराजो-ऽप्यवरमेना गतो भवेद् विजयनगरमिति तर्कयामि । तत्रागत्याहं महाराजचरणयोर्निपत्य क्षमां याचिष्ये कृपालुरेष नरेन्द्रो निश्चितमेव मां क्षमिष्यते । अहह ! भगिनीं कुमुदिनीमपि भृशं पीडितवानयं क्रूरः । तामपि प्रणिपत्य क्षमामर्थयिष्यामि । साप्यवश्यमेव निजौदार्येण मां क्षमिष्यत एव । तद्भ्रातः ? आयातु मया सममधुना भवान् ।

अथ क्रूरसिंहमनुजग्मुश्चन्द्रसिंहोऽवशिष्टौ च भटौ । मुहूर्तेनैवैते निवासस्थानमारेहुः । तत्रास्तां सुमञ्जिनौ द्विताल्पपर्यङ्कौ । तदुपरि निषण्णाः सर्वे यावदास्यवताम्य । क्षणानन्तरं दासैर्देशीयेन परिवेशितं सुन्दरपात्रे भोजनमानीय चन्द्रस्य पुरो निदधे । राजकुमारः क्रूरसिंहा-भिमुखमालोकितवान् । क्रूरसिंहस्तु कृतभोजन इति भोक्तुं निषिद्धवान् । चन्द्रस्त्वतीव बुभुक्षित इति त्वरया भुक्त्वा हस्तमुखं प्रक्षाल्य शयनाय पर्यङ्कं भेजे । दिनगलितं महापरिश्रमक्ला-न्तपादः स तत्क्षणमेव निद्रादेव्याऽऽलिङ्गितः । निद्रया घूर्णमानमेनमवलोक्य क्रूरसिंहः प्रमुदि-तवान् । विस्मृतवानयं च महान्तमुपकारम् । यानि पुरा तत्पुरतो दयाभ्यर्थनवचांसि प्रायुङ्क्तायम्, तानि निखिलान्येव विसस्मार । भूयश्च क्रूरसिंहोऽमुं तो विश्वासघातं विधाय एकाकिनमस्य हृदयेऽपि विधातुं प्रवृत्तवान् तत्कालमेवाहूतवान् भटमेकमसौ । दैवप्रेरितोऽयं दासस्तत्कालमुपसृत्य कृताञ्जलि – ' किमादिश्यते श्रीमता ? ' इति सादरं पृष्टवान् । ' शयितमेनं पुरुषं शनैर्वधस्थानमवगमय्य गुप्तमेव तेनासिनिकरं विधेहि । ' इत्यादिष्टवान् क्रूरसिंहः ।

१ फेरवः शृगालः । २ सारमेयः कुक्कुरः । ३ गृ दैव । ४ विनदमारी । ५ मिष्टाद्दहनम् ।

' अतिसमीचीनम् ? प्रभो ? ' इति प्रोच्य तत्क्षणमेवासौ दृढायसशृङ्खलया निद्राणस्य चन्द्रसिंहस्य हस्तद्वयं नियन्त्रितवान् । अथ निश्चक्राम ततः क्रूरसिंहः । बन्दीकृतश्चन्द्रसिंहः । जालाभ्यन्तरे निपतितः केसरी । निष्कलङ्क चन्द्र ? योऽयं दयया परित्रातस्त्वया तेनैव तव दयाया दुरुपयोगं कृत्वा विप्रलब्धस्त्वम् ? अहह ? धीरचन्द्र ? अन्ततस्त्वं दययास्मानुपहासी-कृतवानसि ? दैव ? विचित्रा ते गतिः ॥

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ प्रकृतिसौन्दर्यसोदर्ये कुमुदिनीचन्द्रे पञ्चमी कला ॥ ५ ॥

# अथ षष्ठी कला ।

" प्रतिमलिने कर्त्तव्ये भवति खलानामतीवनिपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ " ( स्फुटम् )

" पूर्णेव चन्द्रवलयं तमसा गृहीतं जातस्तथ फलदः करिणा च भग्नः ।
नौकाऽम्बुधौ च भरिता मग्ना च दीर्णा हा हन्त ? दुर्विलसितं फलितं विधेस्तत् ॥ "
( पद्यतरङ्गिण्याम् । )

७ विराजते निबिडान्धकारमयी झिल्लीझङ्कारनिरन्तरा भयङ्करी महारण्ये निशादेवी । ततोऽपि नवाम्बुजालपूर्णनीलमहाम्बुवाहमालया परिवेष्टितं सकलमम्बरतलमिति किमिव वर्णनीया भयङ्करता विभावर्याः । दिगन्तरेषु कादम्बिनीसंघर्षसंजनिता सौवर्णवर्णवर्णनीयकान्तिरमणीयाऽपि भुजङ्गमरसनामालेवातिभयानकाऽतिप्रलम्बा शोणितशोणा चञ्चलावली चमत्कुरुतेतराम् । अतिदूरतः कन्दरकन्दरेषु मृगेन्द्राणां घोरगर्जितमाकर्ण्यते । तेषां वनेन्द्रगर्जनानामन्तरे गजेन्द्राकारविडम्बिनां महाम्बुधरवृन्दानां भयङ्करसान्द्रं मन्द्रस्तनितजालमपि निलीयते ।

ईदृशे महाभयानकमये समये महाघोरेऽस्मिन्महारण्ये निर्बलान्तःकरणश्चेन्नरः समागच्छेन्नूनमेव भयाकुलहृदयो भूत्वा सद्य एव पञ्चत्वमाप्नुयात् । ईदृश्यां महाघोरतमिस्रायां महारण्येऽस्मिन् गन्धर्वारूढः कश्चन पान्थो विपुलयाचमत्कृतिविनियोगेन प्रहर्षितः । पथिकोऽयमतीवशान्त्यनुरक्तोऽपते । पयसेव पवनादूर्ध्वमिव तुरगो दृश्यते । आसीदेव मृगयावेषधारी । विस्मृतधर्मोऽयमत्र महारण्ये । अनीदृशमयं स्वचक्षुर्निरीक्षते धनुर्दिक्षु परं न लक्ष्यते पन्थाः । पदे पदे मर्मभेदिशिलाखण्डेषु प्रहरन्नभियातस्य तुरगः पश्चाभिपादद्विगुणाम्भीरमर्णीतवान् ।

---

१ उद्यमनम् । २ झिल्ली—झङ्कारी । ' याऽहनचा रहन्ति निशादम् ' । ३ पूर्णा । ४ वेष्टितम् । ५ मेघमाला । ६ सौदामिनी । ७ विद्युन्माला । ८ गम्भीरगर्जितम् । ९ कारडदम् । १० मन्द-धिकः ।

पथिकस्यास्य मुक्तावलीवृन्देनेव घर्मजलबिन्दुजालकेनालङ्कृतमिव मुखमण्डलम्। सैन्धवोऽप्यस्य स्वेदाम्बुजालललिततनुरालोक्यते।

अश्वारोहिणाऽमुना शैवलिनीकूलकुञ्जे रजनीमखिलामतिवाहयितुं निश्चिक्ये। पुनरयं परितः सकृद् दृक्पातमकृत। उपागतममुष्य दृग्गोचरमनतिदूरे किञ्चन प्रकाशजालमिव। ततोऽसौ तटिनीतटे वसतिमकुर्वाणः प्रकाशाभिमुखमुपगम्य निवस्तुं निश्चिकाय। अथ गन्धर्वमारुह्य प्रकाशान्तिकमुपेत्य— 'कुटीरस्यामतो रिक्तभूतले द्वादशसंख्याकाः पुरुषा ज्वलनं प्रज्वाल्य ताम्रकधूमपानं कुर्वाणा मध्ये मध्ये कथागोष्ठीसुखमुपभुञ्जाना निषण्णाः सन्तीति' दृष्टवानयम्। अश्वारोहोऽयं तान् पुरुषानवलोक्य परममाल्हादितवान्। तदन्तिकमुपगम्य तुरङ्गादवतीर्य स्थितवान्।

अकस्मादीदृशे भयानककानने नक्तमिममश्वारोहिणमात्मनिकटमुपस्थितमवलोक्य तत्रोपविष्टाः पुरुषा आश्चर्यचकिताः सन्तस्तदभिमुखमालोकितवन्तः। सिंहसंहननं[1] विशालललाटमण्डितवदनारविन्दं वृषस्कन्धं व्यूढोरस्कमाजानुबाहुममुमालोक्यामी मानवास्तु विस्मिता इव जडीकृता इव च स्तब्धा स्थिता एकमप्यक्षरं नाशक्नुवन् वक्तुम्। केवलामिमे तुरङ्गारोहममुमनिमेषनयनैर्निरीक्षाञ्चक्रिरे।

तानित्थमस्फुरितवाग्विलासान् विस्मयनिमिलितलोचनान्निरीक्ष्याभ्यागतोऽयं सादी गिरां गुम्फं रचयितुमारेभे— 'भ्रातरः? के यूयम्? एतदरण्यवासिनो भवन्तः सन्तीति प्रत्येमि' इति। सादिनं संभाषमाणं निरीक्ष्य तेष्वपि भाषितुं धैर्यमजायतेति तेषामन्यतमः पुरस्तादागम्य भाषितवान्— 'नैव श्रीमन्? नैतदरण्यवासिनो वयम्। किञ्चित्कालपूर्वमेवात्रारण्ये कारणवशादुपागता वयम्। वरम्। को नु श्रीमान्? कुतश्चेदृश्यां तमोबहुलायां निशायामिहागमनं भवताम्? इहारण्ये भ्रष्टमार्गो भवानिति प्रतीमो वयम्' इति।

सादी। आम्; तथैव संवृत्तम्। स्वसहचरेण साकमहमद्यापराह्णे मृगयार्थं निर्गतवान्। कुरङ्गमनुसरतो मम विश्लेषोऽजनि सहचरेणेति महारण्येऽस्मिन्नुपेयिवानहम्। मार्गमलभमानो वनेऽहमितस्ततोऽतितरां परिभ्रमन्नन्ते दूरादेनं प्रकाशमपश्यमितीममनुलक्ष्येह समागतोऽस्मि।

मानवः। शुभमागमनं भवताम्। श्रीमन्? कोऽपि नायकोऽत्रभवानिति प्रत्येमि।

सादी। नैव, नास्म्यहं नायकः।

मानवः। तत्को नु खलु श्रीमान्? क्व च निवसति भवान्।

सादी। विजयनगरवास्तव्योऽस्म्यहम्।

मानवः। महाराजश्रीविजयसिंहस्य राज्ये निवसति श्रीमान्? भवतु। किमभिधानमत्रभवताम्? ।

---

१ नदीतीरे। २ 'नराश्रस्पोपेतो यः सिंहसंहननो हि सः' इत्यमरः। ३ विशालवक्षस्थलम्। ४ हारम्।

सादी । 'विजयसिंह' इति मे नामधेयम् ।

सहसैव तत्रत्याखिलजनमुखाद् 'हा पुत्र ! !' इत्युद्गारो निर्गतः । उद्गारेणैव समसुच्चैर्हर्षनादं विनेदुः सर्वे । अनन्तरमखिलास्तूष्णीकाः संभूय विजयसिंहमुखं निभालितवन्तः । अथ योऽयं विजयसिंहनृपतिना समं संभाषितवान्; तेन मानवेन महाराजार्थं कुटीरे वर्तमानमेकं प्रस्तं तल्पमानीय बहिर्निधाय तदुपरि समुपवेष्टुं निर्दिष्टो राजपतिः । तैः परिवृतो महाराजश्रीविजयसिंहो मञ्चमध्यातिष्ठत् । अथैको महाराजस्याज्ञानेयं कञ्चित्तरुमूलशाखामादाय तदग्रे पवमसारं निक्षिप्तवान् । अन्यः कमण्डलौ तदर्थं जलमानीतवान् । तज्जलेन प्रक्षालितं निजहस्तमुखादि नरेन्द्रेण । तत इतरेण वटपत्रावल्यां विविधानि फलानि समानीय महाराजपुरो निधाय भोक्तुमयाचि । एवं मानवानामीदृशाऽऽदरातिथ्येन परमाह्लादितः फलानि भोक्तुमारेभे नरेन्द्रः ।

महाराजं फलाशनपरायणं निरीक्ष्यासौ प्रथमाभाषको मानवः कमप्यपरं जनमाकार्य तदीयकर्णे किमप्युदीर्य तं विसृष्टवान् । विजयसिंहः फलाशनं विधाय पानीयं निपीय निवृत्य स्वकर्मण्यनेन मानवेन समं विविधं समालपत् ।

इतः प्रहितोऽयं पुरुषः मन्थरमत्वरो महारण्यवर्त्मना प्रयाति स्म । अतिक्रान्तो निशीथसमयः सम्प्रति । पुरुषोऽयं बहूनि स्रोतांसि समुल्लङ्घ्योच्चावचभूतलानि चातिक्रम्य शूरस्य शूरसिंहस्य शिबिरान्तिकमुपाजगाम । अस्यामेवाटव्यां शिबिरं सन्निवेश्य न्यवसत् शूरः । य एते वृत्तान्तं मञ्चान्य कुटीराग्रतो निरुग्गा अभवन्; तेऽप्यस्यैवानुचरा आसन् । अथ विजयसिंहचन्द्रसिंहौ मृगयां खेलितुं निर्गतावास्तामिति प्रागेव प्रवृत्तिमुपलब्धवान् शूरसिंहः । तमावपि तौ महारण्येऽत्र सम्प्रापावपि यदि समवेतौ दृष्टौ । तदैनयोरन्यतरः कदा वियुक्तो भवेदित्यवसरं प्रतिपालयन्नतिष्ठत् शूरः । निर्दैवबलात् विजयसिंहचन्द्रसिंहौ कुरङ्गमनुपतितौ । महाराजोऽतीवदूरे निर्गतः । तमनुसरँश्चन्द्रसिंहोऽपि मार्गद्वयसङ्गमस्थलमाससाद । विभिन्नदिग्गतौ पन्थानौ निरीक्ष्य यत्रोपलक्ष्य चार्थं व्यचिन्तयत् । इत्थं चन्द्रसिंहविजयसिंहयोर्मिथो विश्लेषोऽजनि । इदमपि वृत्तं विज्ञातवान् शूरः । ततोऽसौ कञ्चन किङ्करं पथप्रदर्शकत्वेन राजकुमारस्य सकलपरिचयलिङ्गानि निर्दिश्य कयाऽपि रीत्या तं प्रतार्य निजाश्रममानेतुमादिश्य प्राहिणोत् । इतरांश्च द्वादशसंख्याकाननुचरानन्यदिशि विजयसिंहनृपं शोधयितुं प्रेषितवान् । प्रेषितैरेभिः किमकारीति विदितमेव वाचकानाम् । पुनरिदानीं मूलकथामनुसरामो वयम् ।

शिबिरान्तिकमुपस्थोऽयं पुरुषस्तत्र पर्यटन्तं प्रहरिणं शूरसिंहमाकारयितुं कथितवान् । यामिकोऽसौ परिचित्यामुं शिबिरान्तः प्रविश्य शूरसिंहं सहादाय तत्रोपस्थितवान् । शूरसिंहं विलोकयन् पुरुषः प्रणम्य साञ्जलिरकथयत् ।

---

१ पुरतः । २ हस्तं शय्यादण्डेषु । ३ उच्चावचा—निम्नोन्नता । ४ छेदनाभिधेयः । ५ निदर्शितम् ।

क्रूरसिंहः । विक्रमसिंह ? किं वृत्तमुपनीतवान् ?

विक्रमसिंहः । श्रीमन् ? यत्र वयं कुटीरं कृत्वा स्थिताः सम्प्रत्यधुनैव किञ्चित्काल-पूर्वमेव समायातोऽस्ति कश्चिन्मल्लतल्लज इव सादी । तं यथोचितं सत्कृत्य कुटीरे स्थापितवन्तो वयम् ।

क्रूरः । कीदृशोऽयमश्वारोहः ? कश्चासौ ? इति जानासि किमु ?।

विक्रम० । आम्, जानेऽहम् । कृष्णवर्णोऽस्य गन्धर्वः । स एव साधारणवृद्धपुरुष इव दृश्यते । किन्तु तस्य तेजस्विनी नयने दर्शनीयमोजस्वि वदनञ्च निरीक्ष्य महावीराणामपि हृदयं प्रकम्पेतेवेति प्रतीयते ।

क्रूर० । ( सोद्वेगम् । ) अलं प्रलम्बवाग्जालगुम्फनैः । ननु संक्षेपेण झटिति कियन्नामायमिति ।

विक्रम० । विजयसिंहनामासौ ।

क्रूरः । ( सहर्षम् ) किं किं कथयसि [1] अपि सत्यमिदम् ? पतितोऽयमन्ते स्वजाला-भ्यन्तरे ? ( स्वगतम् । ) अहह ? अत्युत्कृष्टं मम भाग्यम् । परित्यक्तश्चेदयमवसरो न पुनर्लभ्योऽयमीदृशः कदापि ? [3]एतद्ध्येव मम फलिष्यति निर्धारितम् । कृतकामोऽयं भविता कुमुदिनीमाहर्तुं क्रूरसिंहः । कुमुदिनि ? ननु तिरस्करोषि मां त्वम् ? परमन्ते त्वं क्रूरसिंहस्यैवास्य दासी भविष्यसीति दृढमवगच्छ । अस्तु ? पश्चात्सेत्स्यति तदखिलम् ।

( प्रकाशम् । ) विक्रमसिंह ? ।

विक्रमसिंहः । आम्, श्रीमन् ? किमाज्ञाप्यतेऽयं दासः ।

क्रूरसिंहः । गत्वा त्वं कालसिंहमिह प्रेषय ।

विक्रमसिंहस्तु– ' बाढम् ' -इत्यभिधाय सादरं नत्वा प्रस्थितः । मुहूर्तानन्तरं हृष्टपुष्टस-र्वाङ्गः सुसज्जितशस्त्रपाणिरेकः पुरुषस्तत्रागत्य क्रूरं प्रणम्य पृष्टवान्– ' को निदेशः श्रीमताम् ? ' इति ।

क्रूर० । कालसिंह ? इदानीमेव सर्वेऽस्मदीयभटा इतोऽनतिदूरमरण्यनिकुञ्जेषु पृथक्पृथङ्-निलीय तिष्ठन्तु । यदाहं संकेतध्वनिं करिष्यामि तदा सहसैव सर्वे बहिर्निर्गत्यागच्छन्तु । परस्ताद् यद्विधेयं तदहं तदानीमेव वः सूचयिष्यामि ।

कालसिंहः । अतिसमीचीनम् । गच्छाम्यहं भवदादेशमनुष्ठातुम् ।

क्रूरः । गच्छ । नायं समयो विलम्बितुम् ।

ततः क्रूरसिंहो विजयसिंहसकाशं गन्तुं निर्गतवान् । कालसिंहोऽपि क्रूरसिंहनिदेशानुसारं सर्वं यथोचितमायोज्य क्रूरसिंहसंकेतं प्रतीक्षमाणो विजयसिंहाधिष्ठितकुटीरतो मनाग्दूरे निलीय स्थितवान् । अत्यानन्दनिर्भरहृदयोऽयं क्रूरो यत्र तदीयैरनुचरैर्विनिर्मितमासीत्कुटीरं तत्रागतवान् । स्वसेनापतिं सम्प्राप्तमवलोक्य सर्वे तत्रस्थाः प्रणेमुः । महाराजविजयसिंहस्तु क्रूरसिंहमेवदृशा

---

१ प्रशान्तमहः । २ भप । ' भवण श्ररयः ' । ३ इदानीमेव ।

निरीक्षितवान्। क्रूरसिंहो विजयसिंहनिकटमुपेत्य स्वान्तर्भावं गोपयित्वा बहिः स्नेहं प्रदर्शयन् विजयसिंहम्– 'अये ? महाराजश्रीविजयसिंहः प्रस्थितवान् किमु ? राजेन्द्र ! प्रणमति क्रूरसिंह एष भवन्तम् ? ' इत्यभिधाय प्रणनाम।

तत्कालमेवैनमभिज्ञाय क्षणं तूष्णीं स्थित्वाऽभाषत विजयसिंहः– ' दुरात्मन् ? क्रूरसिंह ? अत्रैव निवासस्ते किमु ? ' इति।

क्रूरः। आम्, प्रभो ? अत्रैव निवसति दासोऽयं त्रैमन्कः । यत्र स्थितोऽस्ति भवान्; तत्स्थानं भृत्याधीनं सन्ति ममैव। परिचितः स्यात्कुमारं दासः श्रीमता !

विजयसिंहः। सम्यक् परिचितः !! सर्वैः खलु सुजनावेक्षयाऽधिकमभिजानाति दुर्जनम्।

क्रूरः। सत्यमाह, राजेन्द्र ? यं भवान् दुर्जनं मनुते तस्यैव क्रूरसिंहस्याधिकारे तिष्ठति भवानिदानीम्। अभिलषाम्यहं भवन्तं बन्दीकर्तुम्।

विजयसिंहः। बन्दीकर्तुमिच्छसि ? रे, मां बन्दीकर्तुं विचिन्तितवान् किमु त्वम् ? । किं कर्तुं शक्तोऽसि त्वमस्य विजयसिंहस्याग्रतः ? मदुपमद्धाभागेवाहं त्वामेव व्यापादयिष्यामि। त्वामेव संचूर्णयिष्यामि ! इति ब्रुवाणः स्वमङ्गादुद्दानिष्कन् प्रमन्युर्विजयसिंहः। नेत्रे चामुष्य तदात्तारक्तमाने अतिरक्ते संजाते।

क्रूरः। आ एवम् ? विजयसिंह ? मरणीयमेव त्वया सम्प्रति ? स्मरणीयश्चेदीश्वरः स्मर्यतां त्वया। नाद्याहं त्वां जीवन्तं विमुञ्चामि। ध्रुवमहं निजोप्रवैरं शोधयिष्यामि।

विजयसिंहः। क्षत्रियापसद दुर्विदग्ध ? किमिति मुधा प्रकुद्धोऽसि स्वावलेपत्वेन ? हंसि मां त्वमुताहं त्वां निहन्मि इति मम एष भवतु निर्णयः।

क्रूरः। न जानासि खलु मदीयमतुलं बलमधुनापि ? वेत्सि कोऽहम् ? मदीयनाशाऽद्य धरणिरपि प्रकम्पेतैव ? तत्कियन्मात्रा तव शक्तिर्ममाग्रतः ?

विजयसिंहः। शृणु रे मदान्धदुर्विदग्ध पापिष्ठ ? शृणु–

' मेघः शारद एव काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युत्सृजति ॥ "

क्रूरः। विजयसिंह ? कोऽपि बलवानयं सिंहः क्रूरसिंह इति विद्धि।

विजयसिंहस्तु–' अहं तु त्वां कञ्चन जम्बुकं मन्ये। दुरासद ? तदेहि नरकालयं प्रहिणोमि त्वामहमधुना। ' इति प्रोच्य कोपात्कृपाणमाकृष्टवान्।

क्षणमात्रेणैव समुत्पन्नप्रणिधि कुर्वाणा बहिर्निर्गत्य विद्युल्लतेवा तीक्ष्णतरधारिणीयं सर्वदामाश्रमस्थमपोढितचन्द्रमसः प्रकाशे।

शस्त्रास्त्रमपि युद्धमुपनतमित्यवधार्य क्रूरसिंहः स्वानुचराणामाश्रावितुं संकेतध्वनिमकरोत्। संकेतध्वनिमाकर्ण्यैव निर्गत्य प्रतीक्षमाणः कालसिंहः स्वैरन्यैः समं तत्राभिमुखवान्।

१ शरदेवो मेघः। २ त्यजति।

कालविह्नमालोक्य क्रूरो महाराजं निगडीतुमादिश्य स्वयं ततः कियद्दूरं स्थित्वा सहर्षं वृत्तमपश्यत् ।

क्षुधिता वृका इव सैनिका महाराजश्रीविजयसिंहं पर्यवारयन् । अनयाऽऽकस्मिकविपत्त्या कपटजालेन च क्रूरस्य विजयसिंहनृपकोपज्वलनोऽतुलं प्रजज्वाल । अथ हृदये दयालुमीश्वरमभिध्याय पाणौ कृपाणं कलयित्वा मदान्धद्विपमभिरुद्धोऽसौ नरदेवस्तृणानीव [1]लवित्रेण कृषीवलः करवालेन रिपुसैन्यं कर्तयितुमारेभे । सैनिका अपि शात्रवा निस्त्रिंशानाकृष्य विजयसिंहनरेन्द्रमभ्यपतन् । परितः करवालं चालयन्नयं नरमणिर्विजयसिंहः सपत्नखड्गाघाताच्छिन्नमण्डलाग्रेण निरुद्धवान् । तदीयः प्रलम्बश्चोद्गकौक्षेयकस्तत्पाणौ तीव्रवेगेन परिभ्रमच्छिन्नक्रोडागतशत्रुभटान् द्विरकरोत् । यामिनीतुरीययामे प्रारब्धं घोरमायोधनम् । क्षतानां क्षितितलविलुठनविवशानां प्रत्यर्थिभटानां महानाक्रन्दकोलाहलः प्रादुरभूत् । प्रहरमेकं तुमुलं जन्यमजनि । तदवधौ वीरेन्द्रशिरोमणिना विजयसिंहनरेन्द्रेण शतार्धं शत्रुसैनिकानां यमालयं प्रस्थापितम् । अवशिष्टभटैः सममधुनाऽपि महाशौर्येण युध्यते स्म नृपतिना । अत्रान्तरे महाराजस्य प्रियतमस्तुरङ्गमः प्रतिद्वन्द्विखड्गाघातेन क्षतसर्वाङ्गो रणाङ्गणे पपात । तेन सहैव महाराजोऽपि भुवि निपतितवान् । यावदुत्तिष्ठति महाराजस्तावदेव पृष्ठतश्चतुर्भिर्भटैर्युगपदभिपत्य महीपतिपृष्ठस्थले सममेव खड्गेन प्रहृतम् । चतुर्णामेककालावच्छिन्नप्रहारेण विजयसिंहनरेन्द्रो वसुन्धरायां निपतितवान् । क्षणादेव चास्य शुचिरमलात्मा सच्चिदानन्दकन्दानन्दामृतरसरसायनरसनचञ्चुको दिवमलङ्कृतवान् ।

विजयसिंहमृत्युना नृशंसस्य क्रूरसिंहस्य हृदयेऽतुलानन्दोऽजायत । तत्रागत्यासौ नराधमकीटः कोपाद् निष्कृष्य कृपाणं विजयसिंहनृपस्य मृतकलेवरे प्रहृत्य वपुषस्तदीयं मस्तकं पृथगकार्षीत् । अद्यापि निजवैरनिर्यातनं न जातमित्यवधार्यैव नक्तञ्चरोऽयं तदीयमस्तकं प्रलम्बकुन्तप्रान्ते समासज्य महासमरे संप्राप्तविजयश्रीक इव दुन्दुभिनादं कुर्वाणो निजशिबिरान्तिकमाजगाम । दुन्दुभिनादेनाकस्मादुद्बुद्धय चन्द्रसिंहो गाढनिद्राया निजहस्तद्वयं नियन्त्रितमपश्यत् । अथायं विचिन्तितवान्– ' किमन्ते विश्वासघातं विधाय चण्डालोऽयं मम दयाया इत्थं लाभमग्रहीत् ? हन्त ! प्रतारितोऽहमन्ते दुरात्मना ? ' इति ।

विश्रम्भघातं कृत्वाऽऽत्मानं बन्दीकृतवान् क्रूरोऽयमित्यालोच्य प्रदिदीपेतरामस्य कोपकृशानुः । अतो भयङ्करं सिंहनादं व्यतानीदयम् । तेन सिंहनादेनातितरां प्राकम्पन्त तत्रत्याः प्रहरिण. । महादरा महोग्ररूपं कृत्वा चन्द्रसिंहोऽयं प्रधाव्य लोहशृङ्खलानिबद्धहस्तयुगलेन बलेन प्रहरिणः शिरसि प्राहरत् । आयसनिगडेन सह निपतत एवास्य दृढपाणिद्वयस्य विददार वराकप्रहरिणः शिरः । भ्रमरिकया पादौ प्रहरी धरणितले निपपात । प्रचुरं रुधिरं प्रावहदस्य शिरसः सधारम् ।

' क्वासि नृशंस क्रूरसिंह ! दर्शय स्वीयम् । ' इति सवेगमाक्रोशयन्नयं चन्द्रो विष्वग्व्यपेक्षितवान् क्रूरम् । प्रमन्युनाऽस्य नयने हिरण्यरेतः– सवर्णवर्णे संवृत्ते । आकृतिरप्यस्य

१ दात्रेण । २ वर्धितः ।

महारुद्ररूपतां प्रतिपेदे। अत्रान्तर एव कुन्ताग्रनिवेशितं विजयसिंहमस्तकं वामहस्तेन समुत्तोल्य समागच्छन् ददृशे क्रूरचन्द्रेण। चन्द्रसिंहमालोक्यैव भीरुरयं क्रूरसिंहः सावधानोऽभवत्। तदीयं रुद्ररूपं च निरूप्य समवेपतायम्। तत्क्षणमेवासौ निवर्तमानान् सैनिकानाकारयत्। रोषारुणनेत्राभ्यां दिधक्षुरिव तं तदभिमुखमालोक्य प्रावोचच्चन्द्रः- 'धिक् त्वां नपुंसकम्!! कुक्षावेव कथं न क्षीणस्त्वम्? षण्ढ? क्षत्रियपुत्रस्तु कदापीदृशं विश्रम्भघातकं कर्म नैव कुर्यात्? हन्त किं त्वां कुर्याम्? निगडितोऽस्म्यहमिदानीमन्यथा सद्य एवाहं तवेदृशस्य राक्षसकर्मणः फलं स्वादयिष्यम्।' इति।

चन्द्रसिंहस्यावेशमयानि वचनानि निशम्य क्रूरसिंहो विजयसिंहस्य कुन्तप्रान्तनिवेशितं मस्तकं तत्पुरतो धृत्वाऽवदत्- 'चन्द्र? निष्फलस्तव रोषः? यथाकृतोऽयमेकः कण्टकस्तु विघ्नभूतो निजवर्त्मनः, साम्प्रतं त्वमेवापरः कण्टकोऽवशिष्टोऽसि। त्वमपि सम्प्रति कतिपयदिनैरेवामुत्र प्रस्थास्यसे। इतस्तुरीये दिवसे चण्डिकायै तत्र वपुरुपहारीकरिष्यते'। इत्युक्त्वा साट्टहासमहसदयं नृशंसः। हसन्तममुमवलोक्य धिक्कुर्वन् क्रुधाऽभूत चन्द्रसिंहः- 'किं हससि रे नृशंस? परन्तु समालोकय?। आकारय सम्प्रति स्वसैनिकान्। क्व सन्ति ते क्लीबाः? नरपिशाच? चन्द्रोऽयं नियन्त्रितोऽस्तीति मत्तो बिभीयादिति मा मंस्थाः खलु त्वम्? शृगाला यदि संगच्छेरन् मृगेन्द्रस्य पुरतो बिभीयात्किमु तदा मृगपतिः? विश्रम्भघातिन् कुक्कुर? सद्य एव निर्यातयामि महाराजश्रीविजयसिंहस्य भूयो वैरम्। कपटकारिन्! निद्रायां मां प्रगृह्य कथमिदानीमात्मानमाह्लादयसि?' इति।

अथ सम्पूर्णबलेन करगतां शृङ्खलां शकलीकृत्य चन्द्रः- 'पश्य-रे आततायिहतक? पश्य तवास्य लोहशृङ्खलाया दुर्दशाम्'। इति निगद्य क्रूरसिंहमन्वद्रवत्। (भयेन भटास्तु पाषाणवत्स्तब्धाः संजाताः।)

लोहशृङ्खलां त्रोटयित्वा स्वाभिमुखमापतन्तं चन्द्रसिंहं दृष्ट्वा-'नास्ति सम्प्रति स्वजीवनाशा' इत्यवधार्य क्रूरसिंहो व्याकुलीभूय सैनिकाननगादीत्- 'निगृह्यतामुन्मत्तं व्यापाद्यतां सत्वरमिति'। 'रे कालसिंह? भये धीरसिंह? रक्षत माम्। हतोऽहम्, अधुनैव मे प्रहरिष्यति मामयम्' इत्याक्रन्दन् पलायितवान् क्रूरः।

स्वसेनापतेरीदृशीं दुर्दशां निरीक्ष्य सैनिका युगपदेव चन्द्रमाक्रम्य पर्यवारयन्। तत्रान्तरे तु चन्द्रः कांश्चन पादप्रहारैः कांश्चिन्मुष्टिप्रहारैर्यमसदनमनैषीत्। परमन्ततो बहुभिः सैनिकैः परिवृतोऽयं निःशस्त्रश्चन्द्रः परिश्रान्तः। कियन्तं विघातुं शक्नुयादेककः? सैनिका युगपदभिपत्य न्यग्रहीषुरिमम्। पाणिपादं चास्य ते दृढायसनिगडेन न्यबध्नन्। चन्द्रं बन्दीकृतमालोक्य योऽयं क्रूरसिंहोऽद्यावधि भिया कम्पते स्म, सोऽधुना सावधानमनाः सन् प्रहृष्टवान्। तादृशं तं ततो- नेतुमादिशत्क्रूरो भटान्। भटा निगडितममुं चन्द्रं शिबिरे समानयन्। 'अथ दिनचतुष्टयं कुत्रायं स्थापनीयः?' इति विचिन्तयामास क्रूरसिंहः। अन्ते गुप्तगृहे स्थापनीयोऽयमिति निर्णीतवानयं क्रूरः। तत्कालमेवामुं चन्द्रसिंहं

गुप्तगृहे नेतुमादिष्टवानसौ कालसिंहम् । कालसिंह स्वभटैः समं चन्द्रं गुप्तगृहे नीत्वा तत्रै-कस्यामल्पीयस्यां कन्दरायां निरुद्धवान् । तदुपरि निरीक्षणार्थं नियुक्तौ तत्राऽऽगसिंहपुष्ठ सिंहौ प्रहारिणौ । अखिलकर्मणो निवृत्य शूरसिंहः सुन्दरपर्यङ्के शायितवान् । ' त्वस्यैको महान् रिपुरद्य निहतः, अपरश्च बन्दीकृतः । सोऽपि सत्वरं व्यापादयिष्यते, ततः कोऽपि निजमार्गे न तिष्ठेदन्तरायकारी । अनायासेनैवाधुनोपलप्स्यते कुमुदिनी । ' इतीदृशीं सुख-मयीं कल्पनासृष्टिं विरचयन्निद्रयाऽऽलिङ्गितोऽयं दुरात्मा ।

इतस्तु– ' अये ! अद्य श्व इति वदतो मम दिनद्वयमतिक्रान्तप्रायम् । परमद्यापि किमिति न निवृत्तौ मृगयाया राजेन्द्रराजनन्दनौ ? किं तयोरनिष्टं तु किमपि न समासंघटितम् ? अस्मिन्नल्पीयस्येव समये कीदृश्यो भयानका घटना घटिताः ? अत एवानिष्टमाशङ्कते मम हृदयम् । मनोऽपि ममातीव विमनायते[1] । किंकर्तव्यताविमूढ इवास्म्यहम् । सच्चिदानन्द कन्दप्रभो ! त्वमेव सत्यस्यावलम्बनमसि । पाहि त्वं मदीयनरेन्द्रनृपनन्दनौ । दयाम्बुनिधे देव ! द्वितीया रजनिरपि समुपस्थेयमद्य । परमधुनापि तयो कमपि वृत्तान्तं नाधिगत-वानस्मि । सर्वशक्तिमन् परमेश्वर ! अधुना तु यदेव कुर्यास्त्वं प्रमाणं तदेव ननु ? किन्तु शत्रुणा किमपि कपटजालं तु न कृतं भवेत् ? ( विमृश्य । ) मा मैवम् । एवं तु न सम्भो-भवीति । स्यान्ननु कदाचित् किमपि कूटजालमराविना विरचितं किममुना ? वीराग्रगण्या-विमौ नरदेवदेवकुमारौ–इति स्वजाले प्रपञ्चयितुमकृतार्थो भवेदसौ प्रत्यर्थी । परमेतद्द्वयंपि आयातौ ताविति किमु निर्धारणीयं मया[2] अखिलमपि प्रकृतिमण्डलं चिन्ताकुलं प्रतीयते । श्रीमती राजमहिषी राजकन्या कुमुदिन्यपि भृशं शोकातुरे भूत्वाऽभीक्ष्णं वृत्तान्तमनु-युञ्जाते । हन्त ! किमहं ताभ्यां निवेदयामि वृत्तम् ? अद्यापि सेनापतिरमरसिंहोऽपि गवेष-यित्वा न परावृत्तः । ' इति विचिन्तयन् वृद्धो मन्त्रिवरः प्रतापसिंहः स्वमहालयाट्टालि-कायामितस्ततः पर्यटति स्म ।

' यातैकयामा यामिनी परमधुनापि किमिति कोऽपि कमपि वृत्तान्तं नोपानीतवान् ' इति चिन्तोद्विग्नहृदया राजमहिषी प्रभावती प्रहरिवीरमेकं प्रधानवर्यमाकारयितुं प्रेषितवती । वृद्धामात्यवर्यः प्रतापसिंह परिधाय वासांसि प्रहरिभटेन साकं प्रविवेश प्रासादम् ।

प्रासादस्योर्ध्वतनशालायां राजकन्यया समं राजमहिषी विमनायमानहृदया निषण्णाऽसि । प्रदीपोऽपि मन्दालोको विलोक्यते । तत्रोपस्थितवान् प्रतापसिंहः । दृष्ट्वैव प्रधानं पृष्टवती राष्ट्रमाता– ' मन्त्रिवर्य ! अप्युपलब्धं किमपि वृत्तं भवता ? ' इति ।

प्रतापसिंहः । मातः ! तथैव चिन्तयाऽऽकुलोऽहम् । परितोऽन्वेषणाय बहवो वीर-सैनिकाः प्रेषिताः परमन्ते निराशवदनाः परावृत्ताः सर्वे । प्रवृत्तिरपि काचन नैवोपनीता ।

मन्त्रिपुङ्गवस्य निराशाजनकं वचनमिदं निशम्य रोदितुमारब्धवती कुमुदिनी । कथितवती चैव गद्गदगिरा– ' किमाह मन्त्रिवर ? अपि नैवोपलप्स्यन्ते मम तातचरणाः ? अये !

---

१ विमना दुर्मना इवाचरति विमनायते । २ विस्तारयितुम् ।

विधात ? त्वमपि प्रतिकूल[1] प्रतीयसे किमु ? आर्यप्रतापसिंह ? गत्वा भवान् कुतोऽपि तातचरणान् विचित्य समानयतु । शरणं मपरमस्ति भवताम् ।' इत्यभिधाय प्रधानोत्सङ्गे निजोत्तमाङ्गं निधाय रोदितुं प्रारभत कुमुदिनी । तां सान्त्वयन्नवादीन्मन्त्रिवरः– 'राजनन्दिनि ? किमिति व्याकुलीभूयाक्रन्दसि ? धैर्यमाधेहि हृदि । भव्यं विधास्यति भगवानन्तर्यामी प्रभुः । पश्य–अधुनापि स्वसैन्यैः सह महाराजमन्वेष्टुं गतोऽयममरसिंहोऽपि न निवृत्तवानिति कदाचिद्धन्यैव महाराजेन समं सङ्गतो भवेदयमित्यहमाशासे ।' इति ।

अत्रान्तरे पूर्वैकः प्रतीहारः प्रविश्य प्रधानवर्यम्– 'श्रीमन् ? यदि सेनापतिरमरसिंहः समुपस्थितोऽस्ति । स च दिदृक्षते भवन्तम् । आदेशश्चेदहं प्रवेशयामि तमिति ' व्यजिज्ञपत् । 'सत्वरमभ्यन्तरे प्रवेशय ।' इति समाज्ञप्तवानमात्यवर्यः । अथ क्षणेनैव बन्दीकृतपुरुषद्वयानुगम्यमानः सेनापतिरमरसिंहस्तत्रोपस्थितवान् । तमवलोक्यैव पृष्टवान् मन्त्रिवरः– 'अमरसिंह ? अप्युपनीता काचन प्रवृत्तिर्महाराजस्य ?' । इति ।

अमरसिंहः । मदपेक्षया बन्दीभूताविमौ मानवौ वृत्तान्तमधिकं निवेदयितुं जानीत एव कथयिष्यतः । ईदृशश्रोतव्यपातनीयो मदुपरि प्रसन्नः प्रभुणा किमिति जीवितोऽहम् ? ।

प्रतापसिंहः । ( सखेदाश्चर्यम् । ) किं किं वदसि ? अयि किमपि दारुणं वृत्तमजनि ? अमरसिंह ? किमिति बाष्पजलं मुञ्चसि ? ब्रूहि सत्वरं यदेव वक्तव्यं त्वया ।

अमरसिंहः । ( साश्रु ) हन्त ? किं तदाऽमङ्गलमयं वृत्तमिदममुनैव मन्दभागधेयेन कथनीयम् ? हा हन्त ? किमिति न विदीर्यते ममेयं रसना । राष्ट्रमातः ? राजपुत्रि ? शृणुत हतभाग्यकस्यास्य कथनं युवामपि । महाराजः राजकुमारः चन्द्रसिंहश्च विचेतुमहं वनाद् वनान्तरम्, उपत्यकाया–उपत्यकान्तरं व्यचारम्, परं क्वापि न लब्धा तयोः प्रवृत्तिरपि । अथान्येद्युरविपरिश्रमश्रान्तो निराशः सन्नहं प्रत्यावर्तितुं विचिन्तयन्नेवारण्यवर्त्मना पुरस्तादिमौ किमप्यादाय गच्छन्तौ व्यलोकयम् । तदीयमाशङ्कितगमनप्रकारं विलोक्य संशयादहं प्रगृहीतवानेतौ । अथ सानुसन्धानमेतौ शोधयता मया तदुपकण्ठादेव प्राप्तमित्यभिधायामी तयोरन्यतरस्य शिरसः करण्डमवतार्य प्रधानवर्यसमक्षं निधाय स्वयं निमीलितलोचनोऽवाङ्मुखोऽपतस्थे ।

वृद्धमन्त्रिवरो वेपमानेन करेण करण्डपिधानमपावृणोत् । अपावृत एव तस्मिन् करण्डे महाराजविजयसिंहस्य मस्तकं विलोक्यैव–' हा हन्त ? अयि स्विमो ? केयमवहेलना ! ! ' इत्यभिधाय प्रतापसिंहो निपपात धरातले । नरेन्द्रमस्तकं निरीक्ष्यैव अनाथकान्ता प्रभावती नरेन्द्रनन्दिनी कुमुदिनी चोभौ करुणमाक्रन्दतुः । निःसंज्ञे भूत्वा चेमे भूतले विलुलुठतुः । धीरवरोऽमरसिंहस्तु मुक्तकण्ठं विललाप । ईदृशं दारुणं हृदयद्रावकमाक्रन्दनं प्रवृत्तमालोक्य बन्दीकृतयोस्तयोर्हृदयमपि दयया द्रवीभूतम् । तयोरपि विलोचनाभ्यामश्रुबिन्दवो निप-

---

१ दारुणे-अहे । २ उपत्यका-पर्वतसमीपस्थली । ३ बन्दीकृतवान् । ४ करण्डो वेत्रविरचितपेटकः ।

तिशुमोरेभिरे। अत्रान्तरे सचेतनो भूत्वा समुपविश्य प्रधानवरस्वारस्वरमारोदीत्। आक्रन्द-नकोलाहलमाकर्ण्य शुद्धान्तवर्तिन्यो दास्य प्रासादरक्षकाः सेवकाश्चान्येऽपि जना झटिति द्वाराण्यपावृत्य विलङ्घ्य शालान्तराणि कचिरसलन्त कुहचित्स्खिपतन्तो धावमानास्तत्रोपेत्य हृदयप्रमाथिनीं घटनामालोक्य मुक्तकण्ठं रुरुदु । अधुनापि राजमहिषी राजकुमारी चोभौ मूर्छावस्थायामवास्ताम्। प्रधानपुङ्गवस्तयोर्मूर्ध्नि शीतल जल न्यपिञ्चत्। मुहूर्त्तानन्तरमुभौ सञ्ज्ञामुपलभ्य समुपविश्य तार रुरुदतु । अथ कथ कथमपि सर्वानसारयदमात्यवर्यं । नेदानीं विलप्यते नरेन्द्रकान्तया। स्वहृदयदयितमूर्तिचिन्तनपरायणहृदयेयमधुना समाधि कमेवालक्ष्यते। ईदृगवस्थामवलोक्य तां स्वहस्तेन प्राबोधयत्प्रधान । अथैषा राजमहिषी चक्षुषी समुन्मील्य जगाद- मन्त्रिवर्य ! ।

प्रधान । आम्, किमाज्ञापयति माता ?।

राजमहिषी । क्वास्ति मे वत्सा कुमुदिनी ?।

'अम्ब ? एषाहमास्मि ' इति निगद्याक्रन्दन्त्येव कुमुदिनी जननीमालिङ्ग्य मुक्तगल विललाप। ' वत्से ? मा रोदी ' ' इति प्रोच्य राजमहिषी प्रभावती तां प्रशमय्य पृष्टवती सेनान्यम्-' अमरसिंह ? महाराजेन सम राजकुमारश्रीचन्द्रसिंहोऽपि गतोऽभवदिति किंवृत्तान्तोऽसौ ? अपि जानीषे तदीयवृत्त खलु त्वम् ? । ' इति ।

अमरसिंह । नावैमि, मात ? परमिमौ प्रगृहीतौ जनौ जानीतस्तदीयवृत्तम्।

तत्क्षणमव बन्धनान्मोचितौ बन्दीकृतौ पुरुषाविमौ। आदिष्टौ चोपवेष्टुम्, परमेतावु स्थितावेव स्थितौ ।

प्रभावती । भ्रातरौ ? जानीथश्चेदखिल वृत्तम् आख्यात युवाम्। मदनन्तर जायते मत्त स्वामिचरणानाम्। प्रत्युष एव महाराजमस्तकेन सम मया सहगमन विधेयम्। ( प्रधान प्रति । ) प्रतापसिंह ? कियतो मदर्थे चितारोहणसम्भारश्चन्द्रवतीतीरे । अतिक्राम तीयममूल्यवेला। ( बन्दीकृत प्रति ) भ्रात ? महाराजस्य मरण कथ समजनि ? तदीय सहचरस्य राजकुमारस्य किमभूत् ? इति सकल विशकलय्य कथय वृत्तमिदानीम् ।

प्रथम । पूज्यजननि ? क्रूरसिंहस्य किङ्करावावाम्। परश्वो निशि कश्चिदश्वारोहोऽस्मच्छिबिरस्थानमाससाद। अश्वारोहोऽयं स्वयं महाराजश्रीविजयसिंह एवासीत्। अस्मद्दल नायकेन सत्कृत्य सकल वृत्त पृष्टोऽयमात्मान विजयसिंहनामानमाचष्ट। अतोऽस्मन्नायको नितरां प्रससाद। यतोऽमुमेव नायक महाराजगवेषणार्थं कतिपयवीरानुगत प्राहिणोत्क्रूरसिंह । नायकोऽसौ महाराजं सम्यक्परिचर्य रजनीमखिलां तत्रैवातिवाहयितुं निवेदितवान्। सरलान्त करणो नरेन्द्रस्तत्कपटजाले निपतित । अथ तदानीमेवामुना नायकेन कश्चन भट क्रूरसिंह मामन्त्रयितुं विसृष्ट । क्रूरसिंहमादाय झटिति निवृत्तोऽयं भट । महाराज विलोक्यैव क्रूर परं प्रमुदितवान्। आदिष्टवांश्चायं भटान् महाराजं निग्रहीतुम्। महादेवि ? न जाने किं

१ शुद्धान्त -अ त पुरम्।

चैरमासीद्वरेन्द्रेण साकमस्य नृशंसस्येति । सैनिका महाराजं निग्रहीतुमभ्यपतन्निति महीवल्लभोऽपि निजचन्द्रहासेन न्यरुणत्तान् । अत्रान्तरे परितो लतापुञ्जपञ्जरायमाणेषु निकुञ्जेषु प्रागेवान्तर्धापितान् निजसैनिकानाहूतवान् संकेतध्वनिना क्रूरसिंह इति तेऽपि तत्राभिधाव्य युगपच्चन्द्रं जलधरा इव राजेन्द्रं नक्तञ्चराः पर्यवृण्वन् । ततो वीरेन्द्रचूडामणिर्निजं चरमरजनीयामोदञ्चितचारुचन्द्रचन्द्रिकाचतुर्गुणितचाकचक्यचमत्कृतिचाञ्चितं चन्द्रहासं चालयन् प्रतिद्वन्द्विमण्डले मण्डलाकारं विचचार । तदीयचञ्चलचन्द्रहासप्रहारैर्हतो रिपुनिकरो वसुन्धरापांसुपुञ्जमालिङ्गन् । परमन्ते नरेन्द्रतुरङ्गमः क्षताविलाङ्गः क्षितितलोत्सङ्गे संपपात । तेन समं वसुन्धरापतिरपि वसुमतीमालिलिङ्ग । इममवसरमुपलभ्य चतुर्भिर्धूर्तैश्चतुरैश्चण्डालैः पृष्ठतो युगपदाक्रम्य नरदेवोऽभिहतः[1] । अथावनौ निपत्यायं क्षत्रियधर्मधारिधुरन्धरो वीरमण्डलाग्रगण्यो विजयनगराखण्डलोऽविलम्बितमेव सुधर्मोपनमलङ्कर्तुं सुरलोकं प्रस्थितवान् ।

अस्मिन्समरग्रामे ममाप्यङ्गे महाव्रण एको जात इति रणाङ्गनमपास्याहं स्वस्थानमुपगम्य शयितवान् । अथान्येद्युः ( द्वितीयदिने । ) क्रूरसिंहो मह्यं महाराजमस्तकं समर्प्य—' मस्तकमिदं क्वापि विदूरमरण्ये निक्षेपणीयम् । ' इत्याज्ञप्तवान् । तन्निदेशानुसारमहं सहचरमिममादाय महाराजमस्तकं करण्डे गोपयित्वा क्वाऽपि निक्षेप्तुं प्रस्थितः । अथ मध्यन्दिनेऽरण्यमार्गेण व्रजन्तौ महातपतया परिक्लान्तौ कस्यचिन्महीरुहस्य प्रच्छायशीतले तले निषण्णावा क्रूरसिंहदुश्चरितकथामकुर्वहि । अत्रान्तरे तेनैव पथा सेनापतिरयममरसिंहः स्वसैन्यैरनुगम्यमानः प्रयाति स्म । आवां तस्य नेत्रपथमुपेतौ । तूष्णीमालम्बन्तौ नौ निरीक्ष्य समीक्ष्य चास्मदभ्यर्णे करण्डमिमं संशयितवानयम् । तच्छङ्गमेतेन करण्डममुं स्वहस्तगतं विधायापावृणोत् । अथ नयनपथमागतमस्य महाराजमस्तकम् । विलोक्यैव तन्मूर्छितः सद्यमवनितले निपपात । तदीयवीरैरावां निगृह्य बन्दीकृतौ । मुहूर्तानन्तरं प्राप्तचेतनः करण्डमिमं सहादायामरसिंहोऽसौ श्रीमत्याश्चरणारविन्दसमीपं नौ समानीतवान् । ' इति कथयित्वा प्रथमोऽयं बन्दीकृतः तूष्णीकः संवृत्तः ।

प्रभावती । हा हन्त ! अन्ततः पयःपानपरिपुष्टेन दुष्टभुजङ्गमेन वयमेव दष्टाः ! किन्तु ! भ्रातः ! महाराजेन समं राजकुमारोऽपि समरे गतः किन्तु संवृत्तमिति जानासि किमु त्वम् ? ।

' आम् । भगवति ! अहमवगच्छामि खलु तत् ' इत्यपरोऽब्रवीत् ।

प्रभावती । तत्कथय किं वृत्तान्तोऽयं राजकुमारः ?

एष उवाच— ' यं राजकुमारं पृच्छति भगवती तस्य चन्द्रसिंह इति नामधेयं वर्तते । सम्यक् परिचिनोमि तमहम् । राजेन्द्रराजनन्दनौ मृगयाक्रीडनार्थं प्रस्थितौ, तौ चास्मिन्नेवारण्ये— आखेटमेतन्नार्थमागन्तारौ इति वृत्तान्तं पूर्वमेव पर्योरलभ्य नृशंसोऽयं क्रूरसिंहो

---

१ दस्थिरः—उदितः । २ आखण्डल इन्द्रः । ३ सुधर्मा देवसभा ।

माम् ' एतयोरन्यतरः पृथग्भूयेह कानने मार्गगवेषणार्थं परिभ्राम्येच्चेन्मार्गदर्शको भूत्वा त्वं तं मदन्तिकमानयेः ' इत्यादिष्टवान् । मामसौ कतिपयानि राजकुमारपरिचयचिह्नानि निर्दिष्टवानिति तानि चिह्नानि हृदि निधाय परितो महारण्ये परिभ्रान्तवानहम् । यदा महाराजो दुरात्मनां कपटजाले निपतितः स्यात्तत्पूर्वमेव प्रदोषसमये कान्तारे मार्गं विचिन्वन् राजकुमारो दूरत एव मदीयनेत्रातिथिर्जात. । तत्क्षणमेवाहं सविस्मयमुपेत्य तं वञ्चयित्वा स्वनिवासस्थानसमीपं नीतवान् । अत्रान्तरेऽस्मन्मनुजानां दशसंख्याकं दलमस्मदभिमुखमुपागमत् । मिलितोऽहं तस्मिन् । अस्मद्दलाधिपो राजकुमारमाक्रमीत् । आक्रमणसमकालमेव–' वञ्चितोहम्' इत्यवधार्य राजकुमार क्रोधानलपरीत कृपाणमाकृष्यास्मानभ्यपतत् । पश्यतामेवास्माकमस्मत्सहायकेन सहितमष्टौ पुरुषानयं निजघान । तद्वधौ तत्रोपेयिवान् क्रूरसिंह' । राजकुमारं [1]निध्याय हर्षितः सवयं हर्षनादं वितेने । क्षणादेव तयोर्द्वन्द्वयुद्धमजनि । युद्धान्ते दुरात्मानमेनं क्रूरसिंहं भूमौ निपात्य तदुरस्स्थलमारूढवान राजकुमार. । '

प्रभावती । (ससम्भ्रमम् । ) तत्किं महाराजवैरं शोधितवान् राजकुमारः ? व्यापादितोऽयं दुरात्माऽमुना किमु ? ।

एष ऊचे–' न खलु निहत ? अम्ब ? नृशंसोऽसौ जीवितोऽस्ति स्वकपटकौशलेन । अतिकरुणं प्रार्थ्यानुकम्पार्थं[2] प्राणभिक्षामवाप्तवानयं चन्द्रसिंहसकाशात् । श्रूयतामग्रे किं कृतममुनेति ? अथ न किमप्येव संवृत्तमितीव मुखाकृतिं विधायाथ नृशंसो राजकुमारं बभाषे–' चन्द्रसिंह ? रजनिरियं संवृत्ता साम्प्रतमित्यस्मिन् समये मम निवासस्थानमायातु भवान् । श्वः प्रातःकाले धीमता सह विजयनगरमागन्ताऽस्मि । तत्र गत्वा महाराजेनात्मानं क्षमापयिष्याम्यहम्' इति । इत्थं तदीयनम्रवचांसि निशम्य तद्वचनविश्रब्धोऽय चन्द्रसिंहस्तस्य शिबिरं जगाम । तत्रामुना कलुषात्मना सम्यक् परिचर्यं संतोषितोऽयम् । अशनानन्तरं क्रूरसिंहचन्द्रसिंहौ न किञ्चिदेव संघटितमिवेति मिथो हसन्तौ समालपताम् ' होरामेकामालपतोस्तयोरकस्मात् कश्चित्पुरुषस्तत्र समागत्य क्रूरसिंहमिङ्गितेन बहिरागन्तुं समसूसुचत् । तदीयमिङ्गितमवगम्य–' एषोऽहमागतः ' इति राजकुमारमभिधाय ततो बहिर्निर्गम्य क्रूरसिंह. केनचनागन्तुकमानवेन सगर्गस्त । आगन्तुकोऽयममुमन्यस्य कस्यचन निकटं समनयत् । तमभिज्ञाय पृष्टवान् दुष्टहतक ' किं वृत्तमुपनीतवान ' ? इति । तेन महाराजश्रीविजयसिंह स्वजाले पतित इति सुसमाचारोऽयं श्रावित । विजयसिंहनृपतिं निजजाले पतितमुपश्रुत्य तत्कालमेवास्मदीय मुख्यनायकं कालसिंहमाहूय क्रूरसिंहो बहुविधममुं सूचयित्वा विससर्ज ।

अथाय दुष्टो राजकुमारसमीपमागम्य तं गाढं निद्राणमद्राक्षीत् । दुरात्मासौ विश्वासघातं विधाय दयितस्य राजकुमारस्य हस्तौ लोहनिगडेन निगडितावकारयत् । तदनु नराधमोऽयं ततो निर्गत्य महाराजश्रीविजयसिंहस्यैनीडे[3] समुपसेदिवान् । महाराजस्य किं नु वृत्तमिति सम्पूर्णोऽयं वृत्तान्तो विदित एवात्रभवत्या इति विविच्य कथयितुं नावश्यकता जागर्ति ।

---

1 विलोक्य । 2 अनुकम्पा–दया । 3 सनीडे समीपे ।

अथ महाराजव्यापादनानन्तरमयं नराधमो महाराजमस्तकं कलेवरात् पृथक्कृत्य कुन्तप्रान्ते तत्समालम्ब्य तदीयमरणानन्दपुलकितहृदयो दुन्दुभिनादं कुर्वाणः शिविरान्तिकमाजगाम । दुन्दुभिनादेन प्रबुध्यास्मानं निगडितमालोक्य— 'किमयं चण्डालो विश्वासघातं कृतवान् ? आः ? प्रतारितोऽस्मि नूनम्' इति विचिन्त्य भृशमज्वलत्क्रुधा राजकुमारः । अतोऽयं ततः समुत्थाय समीपचारिणं प्रहरिणं नियन्त्रितकराभ्यामेव निहत्य शूरसिंहं विचिन्वन् बहिरायया । परमन्येव मिलितः शूरसिंहः । अनुचरकावलम्बितस्थूलप्रदीपप्रकाशे कुन्तप्रान्तनिवेशितं नरेन्द्रमस्तकमालोक्यैव राजनन्दनस्य नेत्रे विदीर्णे इव जाते । अथ घोरं संगर्ज्य लोहशृङ्खलां शकलीकृत्य मुष्टिकाभ्यां शूरसिंहं प्रहर्तुमभ्यधावच्चन्द्रसिंहः । ईदृशमद्भुतं राजकुमारपराक्रमं विलोक्य दुरात्माऽयं भयेन कम्पितुमारेभे । चन्द्रसिंहं स्वसम्मुखमभिधावमानं निरीक्ष्य नृशंसहतकोऽयं साहाय्यार्थं सैनिकानाह्वयत् । तदाक्रन्दनध्वनिना तदीयभटास्तत्राभिपत्य राजकुमारं पर्यवेष्टयन् । तेषु कतिपयानसौ निहतवान् राजकुमारः परमन्ते बहुषु शस्त्रपाणिषु निःशस्त्रोऽयमेकाकी किमिव कर्तुं पारयेत् ? अतिश्रान्तोऽयमन्ते चन्द्रसिंहः । सैनिका युगपदभिपत्यामुं निगृह्य निगडेन करचरणेषु दृढं निरबध्नन्तः । अथामुं तदानीमेव ततो नीत्वा क्वापि गुप्तस्थले स्थापितवान् शूरसिंहः । श्रुतं किल मया— 'शूरसिंहोऽयं राजकुमारं चण्डिकायै निवेदयिष्यतीति' । पूज्यभगवति ? एतावदेव जानाम्यहं वृत्त' मिति प्रोच्य वाचंयमतामङ्गीकृतवान् ।

प्रभावती । हा हन्त ? मदीयतनयतुलितोऽयं चन्द्रोऽपि नराधमेनामुना निहनिष्यते किमु तदा ? हन्त ! किमिदानीं संवृत्येत ?

चन्द्रबलिदानं निशम्य कुमुदिनी भिया विह्वलीभूय मूर्छिताऽभवत् । तदीयामीदृशीं दशां समालोक्य राजमाताऽपि सम्भ्रान्तचित्ताऽभवत् । अमरसिंहः शीतलं जलं निषिच्य कुमुदिनीं प्रत्यागतचेतनामकार्षीत् ।

अथ स्थविरो मन्त्रिवरो बन्दीकृतमिदं पुरुषद्वयमप्राक्षीत्— 'कुत्र निरुद्धोऽयं नरेन्द्रकुमारः?' इत्यवगम्यते किमु युवाभ्याम् ? ' इति । तौ प्रोचतुः- 'नावगम्यते खलु भगवन् ? अकस्मादमुं तस्यामेव निशि क्वापि नीतवानसौ । क्वायं नीत इति नावां जानीवः,' इति ।

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ साहित्यसुधासागरद्वयसबन्धौ कुमुदिनीचन्द्रे षष्ठी कला ॥ * ॥

---

१ मस्तके । २ उपहारीकरिष्यति । ३ मौनभावम् । ४ वृद्धः ।

# अथ सप्तमी कला ।



' परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥ '　( पञ्चतन्त्रके )

" शेते करी मशकपादविपादिकायाम् । "　( स्फुटम् )

' व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते ।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ '　( पञ्चतन्त्रके )

× निशीथकल्पा निशीथिनी । सर्वेऽपि मानवा गाढनिद्रापरतन्त्रा वर्तन्ते । पथिषु कस्याऽपि संचारो न दृश्यते । केवलं भयदायिन्या रजन्या रुदतां सारमेयाणां भीषणा रवा भयमिव वर्द्धयन्तिस्म । अतिविदूरतः कस्याश्चिन्नगरवीथिकायां पर्यटतः प्रहरिणो ' जागृत भो जागृत । गाढोऽयमन्धकारः ।' इति साम्रेडं चीत्कुर्वतस्तारध्वनिरश्रूयत । ईदृशे समये प्रासादस्योपरितनगृहस्यैकस्मिन् कोणे निलीनाऽऽकृतिरेका तिष्ठति स्म ।

' क्वाऽयं स्थापितो राजकुमारः ? ' इति प्रधानवरेण पृष्टयोर्बन्दीकृतयोस्तयोरन्तिममुत्तरं निशम्य तत्क्षणमेवाऽऽकृतिरियम्— ' नानाम्यद् तत्स्थलम् ! ' इति वदन्ती तत्र प्रविवेश। पोटलिकामेकां करे कलयन्ती विचित्रवेषेयमाकृतिः सर्वेषां मध्ये समुपगम्य स्थितवती । तां विलोक्य सर्वेऽपि तत्रत्या जनाः कुतूहलपूर्णनयनास्सन्तः ' केयं भवेद् व्यक्तिः ? ' इति विचाराम्बुनिधिवीचिमालायां प्रेङ्खोलितुं प्रवृत्ताः । अत्रान्तरे व्यक्तिमिमामभिज्ञाय समगादीत्कुमुदिनी– ' कोऽयम् ? वत्सले! रणवीरः किमु ? ' इत्यभिधाय सहोदरं भगिनीव विकस्वरकुमुदिनीप्रफुल्लोल्लसल्लोललोचना प्रेमोत्कलिकाकल्लोलालिङ्गिताखिलाङ्गी राजनन्दिनी कुमुदिनी रणवीरमालिङ्ग्य स्वपाणिपल्लवतल्लजौ तदीयभुजशिरसि निधाय रोदितुमुपक्रान्तवती ।

विलपन्तीमिमामवलोक्य प्रोवाच रणवीरः— ' भ्रातृजाये ! समाश्वसिहि । किमिति विलप्यते भवत्या ? यदेव विधीयते विधात्रा तदात्मनीनमेवेति शोकं विजहातु भवती । मा भूवन् मनागपि व्याकुलाः सकला अपि भवन्तः । क्व निरुद्धोऽयं ममाग्रजो बन्धुरिति निशाम्यते मया ? तत्रोपगम्याहं निश्चितमेव स्वबन्धुं बन्धनालयाद् विमोच्य भवत्समक्षमानेष्यामि । ' इति शान्तिं कलयन्तु सर्वेऽपि भवन्तः ।' इति । रणवीरवचनं निशम्य विलपन्त्येव कुमुदिनी कथितवती– ' रणवीर ! किमिव कर्तुं शक्नुयाद् भवान् ? कुमारो भवान् खलु ? भवन्तमपि शत्रुर्निग्रहीष्यतीति न गम्यते भवता ? गम्यतां चेत् सैन्यसहितं मन्त्रिवरं सह नीत्वा मामग्रजन्मानं कारागृहाद्विमोच्य सत्वरमितो निवर्ततां भवान् । एका-

१ विकस्वरा विकसिता । २ उत्कलिका–उत्कण्ठा । ३ स्कन्धे ।

किन्तु भवन्तं नैवाहं कदापि प्रेषयेयम्। तत्र गन्तव्यमेकाकिना भवता। भवतु यद् भाव्यं मातृजनकर्मानुकूलम्?' इति।

रणवीरः। प्रणयमुग्धे भ्रातृजाये? किमिति न निःसार्यते स्वहृदयादीदृशो भयावहो विचारः? क्षत्रियपुत्रोऽस्म्यहम्? केसरिणः किशोरोऽयमहम्?? शक्तिरेव नास्ति शत्रोर्यदयं मां निगृह्णीयात्? प्रजावति? विदितमेव भवत्या यदहं तदीयकिङ्करो भूत्वा तदन्तिके निवसामि। तदखिलमेव तदीयं गोपनीयवृत्तान्तमभिजानाम्यहम्। नाहमासं महाराजमरणावसरे तत्रोपस्थितः। तदानीमहं तत्रोपास्थास्ये चेत्केनापि प्रकारेण कयाऽपि युक्त्या महाराजस्य प्राणानरक्षिष्यम्। तदधुना यद् भूतं तदभूतं नैव सम्पद्येत? न पुनर्निवर्तेत शरासन[1]मुक्तो बाणः। इदानीन्तु केनाप्युपायेन मया विमोचनीयो निजाग्रजन्मा। भ्रातृजाये? त्वं मां सैन्यं सह नेतुं कथयसि किन्तु दुरात्माऽयमीदृशे स्थले निवसति यत्प्रकाशं न शक्यते गन्तुम्। वीरानादाय कदाचित्प्रकटं गच्छेयश्चेन्नृशंसोऽसौ विदितवृत्तान्तो ममाग्रजं द्रुतमेव निहन्यात्। तदधुना यन्मया विधेयं तदखिलं स्वयमेव प्रच्छन्नं करणीयम्। तच्च नैव शक्त्या अपितु युक्त्यैव कार्यम्।

कुमुदिनी। रणवीर? ततः किन्तु कर्तुं निरधारि भवता?।

रणवीरः। पश्य, येयं पोटलिका सहानीताऽस्ति मया तदभ्यन्तरे सकलं नेपथ्या[2]भरणमिदं रमणीरत्नानुगुणम्। तेनाकल्प्यैनामात्मानं सम्यक्प्रच्छाद्य तद् भयङ्करस्थानमहं गमिष्यामि। दौवारिकगणं मधुरमधुरैर्ललितललितैर्नर्मशर्ममयैः[3] प्रियोपन्यासैर्वञ्चयित्वा मायाजालं विस्तार्य भ्रातरं विमोच्याविलम्बितमेव निवृत्य त्वां द्रष्टाऽस्मि।

कुमुदिनीरणवीरयोर्मध्ये प्रवृत्तमालापमियदवधि सर्वेऽपि तत्रस्था जनाः शृण्वन्ति स्म। अस्य कुमारस्य नैपुण्यमयीं वार्तां निशम्य विस्मयान्वितमनसो भूत्वाऽमी— 'कुतोऽमुना कुमारेण समं कुमुदिन्याः परिचयः? कश्चायं कुमारः?' इति विचिन्तयामासुः। अथ वृद्धमन्त्रिवर्येण— 'वीरकुमार? त्वमात्मानमभिज्ञापयास्मान् निजनामधामनी निवेद्य।' इत्यनुयुक्तः— 'प्रधानवर्य? नाभिजानासि मामप्यमात्य। परमहं तु भवन्तं सम्यक् परिचिनोमि' इत्युदवादीद् रणवीरः। 'अपि मां परिचिनुषे त्वम्? कस्य तनयोऽसि?' इति साश्चर्यममात्यवर्येण पृष्टोऽयं रणवीरः— 'परलोकमलङ्कृतवतोऽजितदुर्गनगराधिपतेर्महाराजश्रीकेसरीसिंहस्य नष्टोऽहं कनिष्ठतनयः श्रीचन्द्रसिंहानुजोऽस्मि'। इत्युक्त्वाऽऽत्मानं प्रकाशितवान्। 'को नु खलु? मम कनिष्ठराजकुमारो वत्सो रणवीरसिंहः किम्?' इत्यभिधाय विस्मितमना रणवीराभिमुखं विलोकितवान् प्रधाननरः। अथ रणवीरमभिज्ञाय प्रमुदितहृदयः प्रतापसिंहः परमप्रेम्णा वक्षसा परिष्वजेऽमुम्। राजमहिषी मृतमात्मजमपि जीवितं रणवीरं विलोक्यानन्दसान्द्रहृदया स्नेहेन स्वयमेव तमाकारितवती। रणवीरो राजमहिषीनिकटमुपगम्य प्रणम्य

१ शरासनं धनुः। २ नेपथ्याभरणम्—वेषालङ्कारः। 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्।' 'अलङ्कारस्त्वाभरणम्।' इति चामरः।' ३ नर्मशर्म-नर्म हासपेशलम्।

च सप्रश्रय निषण्णवान्। राजमहिषी तदुत्तमाङ्गे स्वपाणिपङ्कज निधायाशिष तस्मै दत्तवती। अथ प्रभातकल्पाया विभावर्यामेव राजमहिषी मन्त्रिवर्यं चितारोहणसामग्रीसभारं विधातुमादिशत्। प्रतापसिंहो राजमातरं पतिसहगमनदृढनियमामनगम्यामितु खित शोकमलिनवदन सन् सेनापतिममरसिंह चन्द्रवतीतीरे चन्दनकाष्ठैश्चिता विरचयितुमाज्ञप्तवान्। अतोऽमरसिंहश्चितार्थं सकल सभार कर्तुं प्रस्थित । प्रतापसिंह प्रगृहीतारिमौ पुत्रौ तदिच्छानुकूल्यमात्मसे व प्रवेशितवान्। तावपि नृशंसस्य नूरसिंहस्य सकाशादात्मानं विमुक्तमवधार्य प्रमुदितान्त करणौ कटकमण्डले[1] प्रविष्टौ।

यथा यथोपसीदति प्रात सन्ध्यासमयस्तथा तथा राजमहिष्या प्रभावत्या दयितसह गमनाभिलाषोऽतितरामेधते। वपुरस्या वेपथुनाऽऽलिलिङ्गे। समाधिलीनान्त करणेवाजायतेयम्। दृश्यमिदमालोक्य कुमुदिनीरणवीरौ विलपितुमुपक्रम्य मातर प्रणम्य प्रोचतुः 'अम्ब ! क गच्छसि परित्यज्यावाम्। निराश्रितौ भविष्याव आवाम्। कस्मै शरणाय समर्प्य नौ गम्यते जनन्या ?' इति वदन्तौ तौ सुतरामाचक्रन्दतु । उन्मील्य लोचनारविन्दे नरेन्द्रवल्लभा राजनन्दनयोस्तयोरभिमुख विलोक्य विलपतोरुत्तमाङ्गे स्वहस्ताम्बुजयुगलविन्यस्य निगदितवती–'वत्सौ ! किमिति युवामीदृशे मङ्गलमयप्रसङ्ग विलपथम् ? निरवलम्बौ नैव भविष्यथ। अखिललोकपालक परमकृपालु परमेश्वर प्रत्येक पालयति जगतीह। तदुव सौ[2] निर्भयान्त करणौ भवन्तौ। जगदेकशरण परमगुरु जगज्जीवन जगदीश्वर चिन्तयत निरन्तर हृदि युवाम्' इति। अथ मन्त्रिवर्यं पृष्टवती राजमाता 'मन्त्रिमण[3] कियान् विलम्बोऽधुना ? महदन्तर जायते मे स्वामिन ?' इति।

मन्त्रिवर । ( सगद्गदकण्ठम्। ) भगवति ! सन्नद्धोऽस्य सकल सभारविधि । केवलमत्रभवत्या प्रस्थान एव विलम्बोऽस्ति ।

तत्पश्चमव सती देवी स्नानविधिमवसाय्य यावन्ति मण्डनानि धारयितु शक्या तावद्भिरलङ्करणैरात्मान मण्डयामास। तदनु प्रधानचरो राजपुरोहितमाकारयितु घोरभट प्राहिणोत्। सजातोऽथ प्रभातकाल । नगरनिवासिभिर्जनैरखिलाऽपि रात्रिरद्यतनी जागरैरेवातिवाहिता। परलोकमलङ्कृतवतो वसुधालङ्कारनृपवरस्य निमित्तमखिला राजनगरी हाहाकाररवै परिपूर्णा। ततोऽपि राजमाता सतीभविष्यतीति निशम्य निखिलमपि प्रकृतिमण्डलमतितु खाकुलमालोक्यते। नारीणां नराणाञ्च पर शतानि मण्डलानि सतीं राजमातर चरम विलोकितु तरङ्गिणीतीर व्रजन्ति ।

कियन्मुहूर्तानन्तरमुपस्थाय राजपुरोहित प्रासादे निर्वर्तनीया राजमातुर्निखिला क्रिया सम्पादयामास। अनन्तरमेकस्मिन् काञ्चनभाजने महाराजमस्तक सस्थाप्य राजमाता तत्क्षणमहाय्यमादाय शिबिकामारुह्य चन्द्रवतीतीर समुपागता। समयेऽस्मिन् प्रतापसिंहामरसिंहकुमुदिनीरणवीरप्रभृतयोऽतितार विलेपु । चन्द्रवतीतीरमुपगम्य सुखपालिकाया[5] अववीर्णवती सती देवी। सकलैस्तदानीम्–'जय देवि ! जय मात ! जय भगवति' इति

१ शिबिरमण्डले। २ घातकः निर्दयः। ३ अमात्य। ४ अन्तिमम्। ५ सुखपालिका शिबिका।

जयनादैः संभाविता सती माता । जयघोषमुपश्रुत्य राजमातापि 'जय भगवति ! जय देवि ! ' इत्युच्चैरुच्चारितवती ।

पूर्वत एव सेनापतिनाऽमरसिंहेन चितायाः सकलोऽपि संभारः कृतोऽभूत् । पणवानकझर्झरमर्दलमृदङ्गादिवाद्यान्यपि तत्रोपस्थापितानि । चन्दनतुलसीपिप्पलपलाशप्रमुखैरिन्धनैर्विनिर्मिता समचतुष्कोणैका चिता, तदुपरि स्थापिता दारुमयी चतुष्किकैका । तामारोढुं मार्गमेकं कृत्वा परितः शुष्कजवकनीर्यैः शुष्कतृणपलाशपर्णसमिच्चयैराच्छादिता चिता । चन्द्रवतीतीरं प्राप्यानन्दितेवावलोक्यते राजमाता । तस्या मुखमण्डलं मनागपि न कलयति शोककलङ्कलेखाम् । मरणमासन्नं विभाव्यापि तदपि नाकुलमस्या मनः । हृदयेश्वरचरणान्तिकं गन्तुमत्यन्तमातुरैव संजाता राजमाता । चन्द्रवतीतरङ्गिणीनीरे मज्जनविधिं विधायार्द्रवसनैव राजमाता चितायाः अभ्यर्णमुपेत्य हस्तमुद्यम्य सर्वानाशीर्वचनेनानुगृहीतवती । अथ कुमुदिनीरणवीरौ प्रतापसिंहाय समर्पितौ तया राजवल्लभया ।

सजलनयनो वृद्धमन्त्रिवरः– 'शिरसा वहामि देवीनिदेशमालाम्' । इत्यभिधाय सतीं राजमातरं प्रणनाम । सती माता तस्मै प्रदायाशिषं बाष्पजलविमोचनादिवार्य परमेशस्मरणं कर्तुं सूचितवती । अमरसिंहप्रमुखै राजसेवकैर्मातुराशिषः सम्प्राप्ताः । अथ सती देवी कुमुदिनीरणवीरौ स्वाभ्याशमाह्वयत् । तत्क्षणमुभौ सास्रनयनौ तामुपगतौ । रुदन्तौ तौ निवार्य जगाद सती देवी– 'मदीयवत्सकबालकौ ! मा रुदतम् । शान्त्या शृणुतं मनोपदेशम् । ' वत्स रणवीर ! सदा सन्मार्गमनुतिष्ठ संसारे । कियत्यपि व्यसने नापयाहि न्याय्यात्पथः । सर्वदा पूजनीयगुरुमातृजनस्य पालय निदेशम् । कस्यापि दुःखजनकं न कुरु कार्यं किमपि कदापि । धर्मं रक्षानवरतम् । प्राणान्तेऽपि मा विजहिहि दयाधर्मौ । विपत्तिकाले सकललोकनियन्तुः परमब्रह्मपरमेश्वरस्य सकाशात्साहाय्यं याचेथाः । विश्वसिहि त्वं परमानन्दकन्दपरमब्रह्मणि । यथाशक्ति वैदिकधर्मरक्षायत्तो भव । कदापि धर्मान्न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । देवपितृकार्याभ्यां कदापि नोदासितव्यम् । इन्द्रचन्द्रवरुणब्रह्ममहेश्वरादयः सर्वेऽपि परब्रह्मपर्यायवाचका अमी परमपदपरमात्मानमेव तत्तद्गुणैः प्रत्यापयन्ति । तदमुं सर्वान्तर्यामिनमद्वितीयं जगदीश्वरं दृढभक्त्या समुपासिष्यसे चेदखिलमिमं संसारसमुद्रं प्रतीर्य सदानन्दघनं परमेश्वरसंज्ञकं ब्रह्मपदं प्राप्स्यसि त्वम् । रणवीर ! बालकोऽसि त्वमिदानीम् । भाविनि काले महान्ति *कृत्यानि करणीयानि त्वया । जगदीश्वरस्ते श्रेयांसि वितनोतुतराम् । त्वदायत्तं सुदिनं* करोतु । ' इति समुदीर्य राजमाता मङ्गलमयेनाशीर्वचनेन रणवीरं संवर्धितवती । सोऽपि प्रणम्य सादरं राजमातुराशीर्वचनं स्वीचकार ।

अथ कुमुदिनीमुद्दिश्य सदुपदेशमिमं कृतवती सती देवी– 'वत्से कुमुदिनि ! त्वं बुद्धिमती सद्गुणवती चासि । न किमप्युपदेष्टव्यं ते । परमन्तिममिमं मदुपदेशं शृणु– ' स्त्रीणां पतिरेव देवः । सततं तस्मिन्नेव मनो निधेयम् । तदीये सुखे सुखं दुःखे दुःखं विभाव्य-

मिति नारीणां भूषणमिदम् । प्राणान्तेऽपि रक्षणीयं निजशीलं सहधर्मिण्या । कदापि हृदयवल्लभनिदेशो नैवोल्लङ्घनीय । मनोवाक्कायैरविरतं स्वहृदयेश्वरः परिचर्यो धर्मपत्न्या । वत्से कुमुदिनि ! कस्यापि संशयापादिकां वार्तामाकर्ण्याविमृश्यकारिणी भूत्वा न जातु त्वं दुनुया निजप्राणवल्लभम् । विचित्रमिदं संसारेन्द्रजालम् ! ! अप्रमत्ता तिष्ठानारतं दुर्जनतः । सम्पदि हर्षो विपदि विषादः स्वाभ्युदये गर्वश्चापि न करणीयः कदापि त्वया । वत्से ! भद्रं तनोतु ते भगवान् जगदीश्वरः ।' इत्याख्याय कुमुदिनीं गाढं वक्षसा परिष्वज्य राजमाताऽऽशिषमदात् ।

अथ विसृज्य कुमुदिनीमन्तर्निध्याय सर्वान्तर्यामिनं परमात्मानमभ्यर्थयाञ्चक्रे महादेवी–' हे सर्वसाक्षिसर्वव्यापिसर्वशक्तिमन् परमेश्वर ! विष्वग् व्याप्तमिदं त्वदीयं तेजः । त्वामेव भान्तमनुभान्ति सर्वाणि तेजसां मण्डलानि । त्वमेव सकलजगन्नियन्ता सर्वान्तर्यामी सृष्टिकर्ता विभुः प्रभुरसि । त्वमेवाखिलसर्गस्थप्राणिनां पश्यसि पापपुण्ये निपुणमनारतम् । तदयि दयालुदेव ! निजानुकम्पालवेन मदीयदुरितानि स्वतेजःपुञ्जे भस्मसात्कृत्वा पवित्रां कुरु माम् । अयि जगज्जनक ! शरणमुपैमि ते सम्प्रति । क्षम्यतामियमपराधिनी बाला ।' इत्थमभ्यर्थ्य परमकारुणिकं जगदीश्वरमिव देवी प्रदक्षिणीकृत्य चिताग्निदेवं सर्वाणि स्वाङ्गादवतार्य निजालङ्करणानि विप्रेभ्यो निराश्रितजनेभ्यश्च वितीर्णवती । अन्तःकरणमिदानीमस्याः संसाराश्रितान्तं विरक्तम् । नेत्रे चातितेजःशालिनी विलोक्येते ।

साम्प्रतमरुणरागरञ्जिता पुरन्दरदिक्सुन्दरी । प्रफुल्लपुष्पस्तबकसुन्दरहस्तारविन्दा विहङ्गममञ्जुलगानमुखरमुखाम्बुजा रुचिरारुणाम्बरधारिणी मनोहारिणीयमुषादेवी सतीं राजमातृदेवीमर्चयितुमिव पुरन्दरहरिति विरेजे । मालतीयूथिकातिमुक्तलतादिकुसुमसुगन्धवाही चन्द्रवतीतरङ्गसम्पर्कशीतलः स्वामिनायेयमात्मकलेवरमर्पयिष्यतीति सतीं महादेवीमानन्दयन्निव मन्दं मन्दं वहति स्म निशान्तवायुः । स्वनरेन्द्रप्रियेयमितो मां परिहाय परलोकं प्रस्थातुकामेति चिरपरिचितं चन्द्रवतीनदीजलमपि निश्चलमिव बभासे । समयेऽस्मिन् काञ्चनभाजनादादाय निजदयितमस्तकमात्मवक्षसा समासज्य सती देवी चिताया उपरि निहितां चतुष्किकामारुरोह । उपाविशच्चात्मन उत्सङ्गे निजजीवनसङ्गिन उत्तमाङ्गं निधाय नयने निमील्य परमेश्वरं हृदि चिन्तयन्ती । अथ राजपुरोधा घृतधारया चिताग्निमुद्दीप्य यथाविधि हुताशनं हव्यकव्यद्रव्यैः सर्पिषा च, संतर्प्य मन्त्रैर्हुतवान् । सहसैव प्रजज्वालतरां ज्वलनः । तत्क्षणमेव पणवानकमृदङ्गमर्दलझर्झरप्रमुखाणि वाद्यानि वादितानि । वादित्रनादैः समं तारस्वरेण ' जय भगवति ! जय देवि ! जय सति मातः ! ' इति ध्वनिभिरखिला जना दिगन्तरं बधिरितमकार्षुः । चतुष्किकाशिरसि स्थापितानि सकलकलाध्वनिध्वनितदिगन्तराणि लोकान्तरगामिन्या राजजनन्यास्तेजसा धर्षितानीव दन्दह्यमानानि नीचैरपतन्

१ स्तबको गुच्छकः । २ मुखरो वाचाल । ३ पूर्वदिशायाम् । ४ प्रभातपवनः । ५ सौवर्णपात्रात् । ६ घृतेन ।

काष्ठानि । किमिव वर्णयितुं पारयेदियं निर्जीवलेखनी दृश्यमिदं तत्कालीनम् ? ? अहह ! नरेन्द्रवल्लभायाः पेशलं नवनीतकोमलं वपुः पश्यतामेव विशेषां समिद्भिः समं प्रज्वलितम् । क्षणेनैव भगवत्याः प्राणा विनश्वरं पार्थिवशरीरं हुतभुजे समर्प्य कुत्रचिदगम्यस्थले प्रोड्डीनाः । चितायाः प्रचण्डज्वालामाला गगनं चुचुम्बुः । दृश्यमिदमवलोक्य प्रतापसिंहामरसिंहकुमुदिनीरणवीरादयः पाषाणवच्चित्रिता एव विलेपुः । साम्प्रतमपि सर्वेऽपि पौरजना उद्विग्नहृदयास्तत्रैवासन् । क्षणादेव जाज्वल्यमानाभिश्चिताज्वलनज्वालाभिः प्रभावतीदेवीशरीरं प्रज्वाल्य भस्मसात्कृतम् । अथ शान्तोऽजनि कृशानुः । केवलं महानेको भस्मनां राशिरवशिष्टस्तत्र । कुमुदिनी रणवीरः प्रतापसिंहोऽमरसिंहश्चान्येऽपि सर्वे राजपुरुषा भग्नहृदया नगरं प्रति निवृत्ताः । भगवानम्बरमणिरिदानीं मनागम्बरतलमारूढवान् । राजभानुः सतीभवनानन्तरं राजमहालयोऽयं श्मशानमिव भासते स्म कुमुदिन्याः । स्मारं स्मारं प्रियं भ्रातरं कुमुदिनी निरन्तरमश्रुजलं मुञ्चति स्म । तां शमप्रदैर्वचनैराश्वासयामास रणवीरः । अथ प्रतापसिंहरणवीराभ्यां सहालपन्ती स्थिता कुमुदिनी । झालरेष्वेव नववादनसमयः संवृत्त इति रणवीर उत्थाय जगाद कुमुदिनीम् 'भ्रातृजाये ! अनुजानीहि मामधुना । (प्रधानं प्रति) मन्त्रिमणे ! आश्वासयतु शान्तवचसेमाम् । आवरमहं विमोच्याल्पकालेनैव निवर्तिष्ये' इति । कुमुदिन्या तु– 'गच्छ रणवीर ! सपदि निवर्तस्व मङ्गलकर्म सम्पाद्य । सकलपालकः पालयतु भवन्तम् । याहि कृतार्थो भूत्वा पुनरायाहि द्रुतम्' इत्यनुमोदितः 'भ्रातृजाये ! एषोऽहं यामि तवाशीर्भिः संभावित' इति निगद्याभिवन्द्याखिलांश्च निर्ययौ रणवीरः ।

भयदायिनो गुप्तगृहस्य भग्नप्राये–एकस्मिन् भागे सुन्दरमौवनिर्मितमेकं महासदनमविद्यत । तत्परिवर्ती कृष्णपाषाणनिबद्धो दृढ एकः कोष्ठोऽवर्तत । तदभ्यन्तरे गन्तुमश्मसारदण्डजालिकाजटितमर्द्धचन्द्राकृतिसुन्दरं द्वारमेकमभूत् । निशान्तस्यास्यैकस्मिन् कोष्ठे राजकुमारश्चन्द्रसिंहो निरुद्धोऽभवत् । चन्द्रसिंहस्य हस्तपादं दृढकालायसशृङ्खलानियन्त्रितमासीत् । 'बन्धनालयात्कदाहं निःसरेयम् ?' इति चिन्ताकुल एवायमगणयन् कष्टमिदमितस्ततो वीरवरः कथं कथमपि पर्यटति स्म । पश्चात् स्थापितप्रदीपकोष्ठद्वारकपाटे लग्नमभूत् दार्घ्यविष्कम्भकम् । तदलिन्दे विकोषकृपाणकरौ द्वौ प्रहरिणौ नियुक्तौ । अमीषामिमौ बन्दीकृतं चन्द्रसिंहं निरैक्षेताम् । चन्द्रसिंहोऽपि नास्ति कोऽप्युपायो बहिरपसरणस्येति विचिन्त्य दुःखितहृदयः पर्यङ्क एव मनसाऽऽकल्पत्– 'किं मयान्ते दारिद्र्यदशा मृत्युनैव मरिष्यते ! हा हन्त ! किं वदा नैव निर्यातयिष्यामि पितृघ्नसुरयोर्वैरम् ? वत्स रणवीर ! प्रिये कुमुदिनि ! भवतां नैव दृष्टवानन्तिमसमये । हा ! मदर्थं भवद्भ्यां कियदाक्रन्दितं भवेत् ! किमिदानीं करोमि ? किमन्ये मया स्वमतिशी परिहाय विश्वासघातिनोऽस्य नृशंसस्य क्रू-

---

१ अग्रे । २ अग्निः । ३ मत्त्वा पाषाणः । ४ लोहदण्डजालम् । ५ मन्दिरस्य । ६ लोहशृङ्खलम् । ७ अलिन्दे कोष्ठाद्बहिर्भागे ।

।सिंहस्य सकाशे आत्ममोचनाय प्रार्थना विधेया ? ' इत्याकर्ण्य विचाराम्बुधौ निलीनः। नाशाक्षोदन्ते वीरपुरवोऽयं स्वक्रोधावेग नियन्तुमिति सहसैव सावेशमभाषत– ' नैव नैव। कदापि नेदं सभाव्यते ? अतितरामसम्भवनीयमिदम् ? अपि वरुणदिशि समुदियादरुणकिरण, अपि पुण्डरीकमण्डलमण्डितमम्बरतलमालोकयेत, अपि शीतलतां परिजह्यादयं चन्द्रमा', अपि निजगुणं त्यजेदनल, अपि प्रयान्तु प्राणाः प्रकाममिदानीमेव मदीया परमात्मप्रतिशोछ्छन नैव कुर्यादयं चन्द्र ? अहह ? ईदृक् क्लीबानुगुणोऽयं विचारोऽपि कथमुद्भवति मम मानसे ? प्रभो ? आजितदुर्गराजकुमारस्य किमिथं दशा ? कदापि जम्बुकेन विजितः किमु केसरी ? अजितदुर्गयुवराज कस्यापि निजवैरिणोऽग्रतो नम्रमौलिर्जात इति कदापि श्रुतं किल केनापि ? हन्त ? इयं मे दशा सम्प्रति ? किमिदानीं मया विधेयम् ? अये ? अहमपि कियान् मूढो यदहं स्वप्रत्ययिनि विश्वस्य तदीयवाह्यानम्रवचनैर्वंचितः सुखमस्वपिषि। हन्त। स्वमूर्खतयैवाहं बन्दीकृतः शत्रुणा। अरेरे नराधम विश्रम्भघातिन् नृशंस क्रूरसिंह ? सन्निहितमेव ते मरणं सम्प्रति। दुरात्मन् ? कदाचिद् गृह्णीया मदीयप्राणाँस्त्वमुत सपीड्य मा हन्या यदि तर्हि जगदीश्वरस्त्वयं स्वदुरितकर्मणः फलं दास्यत्येव ते। शास्त्रेऽपि विश्वासघातस्य महापातकमवर्णि। तथापि नराधममीदृशं किमिति जीवयति सतां शङ्करः शङ्करोऽयम् ? अयि कारुणिकप्रभो ? अधुना तु [1]दुर्गतमेनमनुगृहाण निजकरुणावलोकनैः। हन्त। इयं मे दशा नु ? रे विश्रम्भघातिन् ? पूर्णोऽयं तव पापकलशः साम्प्रतमिति जानीहि। अयि यमराज ? सद्य एवापहरतु भवानस्य दुरात्मनः प्राणान्। अयि दिवाकर ? भस्मीकरोतु भवानेनं विश्वासघातिनं स्वप्रचण्डतापानलेन। वसुन्धरापि न सोढुमलं मामीदृशो नृशंसस्य ? ' इत्थं यदवचितस्ततो यावत्पर्यटति चन्द्रसिंहस्तावदेवालिन्दभुवमुपासरत्क्रूरसिंह। कारालये निरुद्धस्य धृत्तं पृष्ट्वा प्रहरिणमसौ स्वसमक्षमिममानेतुमादिष्टवान्। ' यदादिशति प्रभु ' रित्युदीर्य प्रहरी कुञ्चिकया विष्कम्भकमुद्घाट्य प्रविश्याभ्यन्तरे चन्द्रसिंहमादाय बहिरपागमत्। निगडितकरचरणत्वाच्चलितुमशक्नुवन्नपि चन्द्रः प्रहरिणा समं शनैः शनैः क्रूरसमीपमागम्य तदुपरि न्यक्कारमयीं दृशं निक्षिप्यैकतस्तस्थौ। ईदृगवस्थं चन्द्रं विलोक्य साट्टहासमहसत्क्रूर। परतो मन्दस्वरमगादीदसौ– ' अयि सौम्य कलयसि कारालये ? मूढ क्षत्रियडिम्भ ? अपि दृष्टं कीदृक् फलमुपनतमात्मनोच्छृङ्खलताकलापा ? नाग्या गतिमन्त्र सम्प्रति विकरालकालवदनदर्शनादते ? ' इति।

चन्द्र। ( सामर्षम्। ) रे नीच ? चन्द्रोऽयं मृत्योर्बिभेतीति नावगम्य त्वया ? नृशंस नपुंसक ? नाय बन्धनालयो मे किन्तु रङ्गमहालयोऽयम्। नेयं लोहशृङ्खलिका अपितु सुवर्णाङ्गद्हारोऽयं मे। अप्यवगतं नराधम ?

क्रूर। एवम् ? पश्यामि कमभ्यर्थयसे दयार्थमत्तस्त्वम्।

चन्द्रः। अपि शूलमारोहेदयं चन्द्रः परं कमपि करुणं नैवाभ्यर्थयेत ?

---

१ गतमरतः। २ दुरवस्थम्। ३ तालिकया। ४ तालकम्।

क्रूरः। दुराग्रहग्रहिल ! निजोद्दण्डतयैवेयमुपपन्ना ते दशा।

चन्द्रः। मा मैवम् ! त्वादृशि नृशंसे विश्वासेनैव दशेयमुपनता।

क्रूरः। मूढ ! अपि जानासि किमजल्पसीति ? रे पिशाच ! तिरस्करोषि किमु वीरवरं क्रूरसिंहमिमम् !

चन्द्रः। अहह ! कोऽसि ? वीरवरः किमु त्वम् ? नैव नैव। त्वं तु कश्चिदपुंसको भीरुरसि। वीरवरास्तु रणाङ्गनभूमौ युद्धक्रीडया वैरं प्रतिकुर्वते परं त्वं तु क्लीब इव मूषकं निग्रहीतुं मार्जारो यथा निलीय तिष्ठति तद्वन्निलीय तिष्ठसि।

'एवं चेदनुसर सम्प्रति यमपुरीम्' इति निगद्य क्रुधा कृपाणमाकृष्य क्रूरसिंहश्चन्द्रमिदं निहन्तुमभ्यगमत्। चन्द्रोऽपि सकलमात्मबलमेकीकृत्य तदभिमुखो बभूव। उपरुद्धोऽयं मध्यस्थेन प्रहरिणा। क्षणं शान्तिमाकलय्य क्रूरसिंहः पुनर्निजासनं भेजे। वीरवरश्चन्द्रस्तरसा सम्मुखमायातः खलु परं प्रहरिकराघातेन निगडभारेण चावनितले निपातितः कथं कथमपि समुत्थितवान्। साम्प्रतमस्य नेत्रे बाष्पजलपूर्णे संजाते। आकाशाभिमुखमवलोक्यायमवादीत्- 'हन्त ! नाहमज्ञासिषं खलु महाराजकेसरिसिंहस्य युवराजपुत्रेण चण्डालस्येदृशि वचांसि श्रोतव्यानि भविष्यन्तीति ? अयि सकलपालकजगन्नायक ! विनाश्यतामिदं मे वपुः। नाहं सोढुमलं सम्प्रति कटुवचनानीदृशानि !' इति प्रोच्याधोमुखः स्थितवान्। अथामुं प्रोक्तवान् क्रूरः-- 'चन्द्र ! आत्मानं मोचयितुं वाञ्छसि चेदस्त्येक एव मार्गः स्वमोचनस्य।'

चन्द्रः। को नु खलु मार्गः ?।

क्रूरः। शृणु-जानास्येव खलु त्वं कुमुदिनीमहं कामये इति। नामविप्लवस्त्वं मध्यस्थश्चैकदैव चन्द्रमुखीमिमामुपलब्धुं भाग्यशाली समभवस्त्वमहम्। इदानीमियं सुन्दरी त्वदायत्ता विद्यते तामहं कामये। यद् यथैककोशे न तिष्ठति कृपाणद्वयं तद्वदेव सुन्दरीमेकां कामयितारौ द्वौ नरौ मविताधिप्राप्नोति तयोः कोऽप्यन्यतरः सुखम्। इति वृत्तान्तमवगम्य विमृश्य च तां सुन्दरीं मदायत्तां विधास्यसि चेत्तदाहं मोचयामि कारायाः ?

चन्द्रः। (क्रुधा संतप्यमानः) अलमलं प्रलप्य रे जाल्म ! तूष्णीमेधि। इति ब्रुवाणश्चन्द्रः क्रूरं हन्तुमभ्यधावत्। किन्तु निवारितोऽयं प्रहरिणा। चन्द्रं स्वं हन्तुं समायान्तं विलोक्य क्रूरः प्रोवाच- 'रे बन्धनागारे निबद्धोऽसि, मदीयपाणिपञ्जरे च पतितोऽसि, तथापि स्वमीदृशमौद्धत्यं कुरुषे ! अधुनापि न नम्रीभवसि किमु !।

चन्द्रः। नम्रीभवाम्यहम् !।

क्रूरः। आम्। नम्रीभव।

चन्द्रः। शृणु रे मूढ शृणु-

'घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम्।

---

१ नम्रीभव।

दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते ह्युत्तमानाम् ॥ '

क्रूर । आः एवं किमु ? चन्द्रसिंह ? न दृष्टस्त्वया ? क्रूरसिंहस्य कृपाणप्रहारोऽद्यावधि नैवानुभूतस्त्वया सम्यगित्येव प्रफुल्लोऽसि दर्पेण, पुलकितोऽसि हृदि दर्पेण ? भवतु ? अधुना तु त्वमाखेटो मे ? पश्याम्यहं कस्त्वां रक्षितेति ? ।

चन्द्र । को रक्षिता ? साक्षान्महामहनीयः परमेश्वरो रक्षिता मे ?

क्रूर । परमेश्वरः ? क्वास्ते कुत्र परमेश्वर ? अपि जानीषे त्वं क्रूरसिंहोऽयं चतुरर्णवमेखलामखिलामिलांमपि निर्धूनयेत् ? वीरधुरन्धराणां हृदयान्यपि कम्पयितुं प्रभुरस्ति । तत्कियन्मात्रस्तव प्रभुः ? ।

चन्द्र. । पापिष्ठ ? मा कार्षीर्निखिलजगन्नियन्तुर्जगदीश्वरस्यापमानं मा कार्षीः । किञ्चिन्न्यूनं परिपूरय पापकलशम् । ईदृशि घोराणि तव दुरितानि समुल्लिख्यन्ते दयालुदेवस्य न्यायालये । मरणानन्तरं पापपुण्यकर्मणां फलगणितानि विधीयन्ते इति सत्यमवेहि ।

क्रूरः । नायं वीराग्रणयो गणयति पापपुण्ये । स्वच्छन्दमानन्दविलासोपभोगसाधनं हि जीवनम् ।

चन्द्रः । अरेरे किल्बिषकर्मकारिन् क्रूर ? नेदमानन्दविलासोपभोगसाधनमपितु पापपुण्यपरीक्षणस्थलमेव जीवनमिदम् । विमृश रे नरककीटक ? विमृश । विनश्वरमिदं पार्थिवशरीरमवश्यमेकदा विनङ्क्ष्यति ते । नरकयोनिञ्चावाप्स्यसि त्वम् । नैव घोरं शक्ष्यसि नारकीयदुःखं विसोढुं त्वमिति अतःप्रभृत्येव विमृश्य कुरु पश्चात्तापमात्मकृतपापकर्मणाम् । अनुतापाश्रुजलेन क्षालितं भवति पापं भवति चान्ते कल्याणमेव नृणाम् ।

क्रूरः । समीचीनम् ? करिष्याम्यहम् ? किन्तु राजकुमार ? अतिमात्रमपमानितोऽहमद्य त्वयेति तत्फलं सत्वरमेवाधुना त्वां रसयिष्यामि ? ।

चन्द्रः । किन्तु रसयितासि त्वम् ? अरेरे अभिमानमदिरापानमदोन्मत्त मदान्ध ? कियन्मात्रा शक्तिस्तव वराकस्य ? ।

क्रूरः । कोऽहमिति सद्य एव ज्ञास्यसि त्वम् । इदानीन्तु त्वमल्पकालमेव जगतोऽतिथिरसि । प्रयास्यन्ति द्यवोऽर्द्धरात्रे तव प्राणाः परलोकम् । तदानीमेव शान्तिर्मे भविता स्वान्ते । आः ? तदानीमेव प्रिया मे कुमुदिनी प्राप्स्यते ? । ( इत्युदीर्यासौ जहास ) ।

चन्द्रः । किन्तु हससि मृगेन्द्रं बन्दीकृत्य ! क्षत्रियपुत्रोऽसि चेदेकवारं विमुच्य पश्य मे पराक्रमम् । किन्तु क्षत्रियपुत्र एव नासि त्वम् ? त्वं तु षण्ढिनपुंसकोऽसि ?

इत्येवंशामाकर्ण्य कोपारुणवदनः संवृत्तः क्रूरसिंहः । चन्द्रं हन्तुं चेदयत्नमकरोदसौ तदा तद्वदा पुनारसुं हन्तुं शक्नुयात् । यतोऽयमिदानीं सुसज्जितशस्त्रपाणिरासीत् । आसीच्चायसशृङ्खलया-

१ इला पृथ्वी । २ प्रकम्पयेत् । ३ विनाशशीलम् । ४ अनुतापः पश्चातापः । ५ अवज्ञा अपमानः ।

नियन्त्रितश्चन्द्रसिंहः। किन्तु नाभून्मनसि क्रूरस्य चन्द्रं निहन्तुमभिलाषस्तदानीम्। आसी-च्चास्य मनसि दारुणविधया चन्द्रं निहत्य चण्डिकायै उपहारीकर्तुम्। अत एवास्मिन्समये निजमपमानं सहमानो निषण्णोऽभवत्क्रूरः। अथाथमादिशत्प्रहरिणं चन्द्रं कारायां निरोद्धुम्। प्रहरिणा निरुद्धोऽयं चन्द्रः कारालये। तदनु प्रहरिभटद्वयं निपुणमुपरक्षितुमादिश्य ततो निर्जगाम क्रूरः। गच्छत एवास्य हृदये कुमुदिनीसम्बन्धिनो विचाराः प्रादुरभूवन्। मनसा चैवमालपदसौ–'कुमुदिनि? विशिष्टोऽहं कृतस्त्वया ननु? चन्द्रमुखि? कदाहं त्वामुपलभ्य भाग्यशाली भवेयम्? तव विरहेणाहं विमूढो जातः। दन्दह्यते हृदयमिदं मदीयं तव वियोगानलेन। प्रेमरसिके! एहि एहि। मा तर्पयाधिकं माम्। प्रिये कुमुदिनि? यद्यपि मां न्यक्कुरुषे त्वं तदपि त्वामहं सत्यहृदाऽभिलषामि। त्वदर्थमयं क्रूरसिंहः सकलं तनुमनोधन-मर्पयितुं सन्नद्धोऽस्ति। कुमुदिनि? न जातु मामङ्गीकुर्यास्त्वं परं नायं विमुञ्चति त्वाम्। त्वामुपलभ्यैवाहं शान्तिमन्तः कलयिष्यामि। (विमृश्य।) समागतोऽयं सायंसमयः सम्प्रति। तदेहि साम्प्रतमेव विजयनगरं प्रव्रजामि। नास्ति कोऽपि तत्रेदानीमिति कुमुदिन्या-अपहरणे नैव भविता मे कोऽप्यन्तरायः। गच्छत एव मम वर्त्मनि रजनिरपरस्थावीनि सौकर्यं जनिता मे। निशीथे कुमुदिनीमहालये प्रविश्य तां सुन्दरीं विविधयुक्त्या समाहृत्य सत्वरं परावर्तिष्ये। नावश्यको मे सम्प्रति कोऽपि सहचरः। तत्कार्यमसहाय एवाहं सुगम-तया कर्तुं प्रभविष्यामि। इत्थं मानसे निश्चित्य क्रूरसिंहोऽयं विजयनगरवर्त्मना गन्तुं प्रचक्रमे। सत्वरमेवायं गच्छन्महारण्यपर्वतजाले निलिल्ये।

इतस्तु कुमुदिनीमापृच्छ्य निर्गतो रणवीरो मध्यन्दिने क्रूरसिंहशिबिरमण्डलमाससाद। तत्रानुसंदधता रणवीरेण–'क्रूरो बन्धनालये चन्द्रीकृतपार्श्वे गतवानिति' विदितम्। क्रूरसिंह-सैनिका इमं पर्यचिन्वन्निति परिवृत्य तदन्तिकमुपनिश्य तमपृच्छन्–'रणवीर? क्व गतोऽभव-दियन्ति दिनानि?' इति। चतुररणवीरेण प्रत्येकं तत्तत्प्रश्नोचितं सम्यगुत्तीर्य संतोषिता सर्वे-ऽपि। अथान्तरे किङ्करेणैकेनैकस्मिँल्लघुपात्रे मृद्वीकादिमधुररसफलानि समानीय रणवीराग्रतो निधाय तैः समं शीतलं विमलं जलमपि निदधे। आसीदतिमात्रमशनायितोऽयमिति सोऽपि भुक्त्वा फलानि निपीय चामलं जलं श्रमापनोदाय मुहूर्त्तमयमशयिष्ट।

सर्वेऽपि सैनिकास्ता. क्रूरसिंहकृपाभाजनस्य रणवीरस्य सम्मुखं स्थित्वा विरचिताञ्जलयः 'को निदेशः श्रीमताम्?' इत्यमुं पृष्टवन्तः। तानखिलानपि ततो गन्तुमादिष्टवान् रणवीरः। इति ते क्रमशः प्रणम्य प्रस्थिताः। प्रयातेषु सुखं सुष्वाप रणवीरः। अथागते सायन्तनसमये निद्रां विहाय समुत्थाय समन्ततो निभालितवानयम्। परं न ददृशे कोऽपि तत्रामुना। ततः प्रमत्तः सप्रतिदूरवर्ति दृश्यमानं कुटीरमयं ययौ। संवृतमभूत्कुटीरद्वारमिति कपाटं शनैरा-हत्य रणवीरः 'मामापीह?' इति मन्दस्वरमाकारितवान्। कुटिराभ्यन्तरात्–'कोऽयम्?' इति पृष्टोऽयम्–'एषोऽस्मि रणवीरः' इति समुत्ततार। तत्क्षणमेव द्वारमपावृतं तेन।

१ तिरस्करोषि। २ विघ्नोऽन्तरायः प्रत्यूहः। ३ एकाकी। ४ तदाद्यसरापम्। ५ बुभुक्षितः।

अन्तःप्रविष्टवाँश्चायं रणवीरः ।

एतत्कुटीरनिवासी परमसुहृद्भून्मानसिंहोऽयं रणवीरस्य । पञ्चवर्षेणाधिकोऽयं वयसा रणवीरात् । एष बान्धवः कूरसिंहस्य । परं तदीयानुत्तमगुणान् निवर्ण्य तेन साकं सौहार्दमस्थापि रणवीरः परस्परमुपाचीयतानयोर्मैत्री । रणवीरार्थं स्वप्राणानपि विश्राणयितुं सज्जोऽभवन्मानसिंह । अन्तः प्रविष्टमेव रणवीरं पृष्टवान् मानसिंह 'रणधीर ? कुतस्तवागमनमकस्माद्दिदानीमिति ।'

रणवीर । विना प्रयोजनं कश्चिदागच्छति किमु ? भ्रातर्मानसिंह ? अस्ति प्रयोजनं त्वया सममद्य मे । किञ्चि साहाय्यमपेक्ष्यते मया ते । अपि भविष्यसि सहायको मे ?

मानसिंह । रणधीर ? किमेवमुदीर्यते त्वया ? त्वदर्थं निजप्राणानपि विश्राणयितुमयं सज्जोऽस्ति । कयनापेक्षया कार्ये परिणतिरत्युत्तमा ? ब्रूहि किं ते प्रयोजनं मया सह ?

रणवीर । मानसिंह ? विदितमेव स्याद् भवता यदस्मत्सेनानीर्दिनत्रयपूर्वं पुरुषमेकं व्यापाद्य बन्दीकृतवानपरम् । तच्चागामिनि निशीथे देव्या उपहारीकरिष्यति ।

मानसिंहः । आम् । वेद्मि तद् वृत्तमहम् ।

रणवीर । तं पुरुषमहं बन्धनालयान्मोचयितुमभिलषामि ।

मानसिंह । ( साश्चर्यम् । ) अपि सत्यम् ?

रणवीर । अथ किम् ? तस्मिन्नेव कर्मणि भवत साहाय्यं याचे ।

मानसिंह । भ्राता रणधीर ? अत्युत्तमोऽयं तव विचारः । अहह ? तं सुन्दरं राजकुमार यदा बन्दीकृतवान्, आसमहं तत्रैव तदानीम् ? कीदृशस्तस्याद्भुतो विक्रमः ?? अस्मत्सेनानीश्छलकपटेन तं न स्यमहीष्यत्कदाप्येनं निग्रहीतुं नैव प्राभविष्यत् । अहो ! कीदृगस्य तेजो बलञ्च ? ? परं रणधीर ? कया रीत्या त्वमेनं मोचयिष्यसि ? कीदृशी चापेक्ष्यते मम सहायता ? इति सत्वरं मे निवेदय । बन्दीकृतपुरुषेण सह कश्च ते सम्बन्ध ? इत्यपि नानुचित चेदाख्याहि माम् ।

रणधीरः । मानसिंह ? एष ममाग्रजन्मा । य प्राणेभ्योऽपि प्रियतमो मे ।

मानसिंह । [ सविस्मयम् । ] किमय तवाग्रजो वर्तते ? ।

रणवीर । आम् । ममाग्रजोऽसौ ।

मानसिंहः । कथमेन नृशसस्यास्य करपञ्जरान्मोचयिष्यसि ?

रणवीरः । आयोजितस्तदर्थमुपायो मया । परं ततः पूर्वं कुत्रायं निरुद्ध इति कथयिष्यसि किमु माम् ?

मानसिंह । गुप्तगृहे स्थापितोऽयम् ।

रणवीर । परम् । तत्रेदानीं कियन्त सन्ति प्रहरिण ? ।

मानसिंह । द्वावेव ।

रणवीर । अपि जानासि तयोर्नामनी ?

---

१ उपाचीयत–अवर्द्धत । २ प्रभातुम् ।

मानसिंहः। आम्। जाने। फुल्लसिंहारणसिंहनामानौ स्त इमौ।

रणवीरः। अतिसमीचीनम्। मोचयिष्यामि तयोः सकाशाद् भ्रातरम्।

मानसिंहः। कया रीत्या केनोपायेन मोचयिष्यसि ?

रणवीरः। शृणु, सहानीतवानस्मि रमणीरत्नानुगुणं नेपथ्याभरणमहम्। तेनात्मान मलङ्कृत्याहं गुप्तगृहान्तिकमुपेत्य वंशीरवेण निजमधुरस्वरं संमेल्य सुन्दरं गीतं गायामि। इयान्मनोज्ञो मृदुलश्च मे स्वरो यद् गायाऽयं पुरुषो वा स्त्री वेति नैव विज्ञातुं पार्यते केनापि। मदीयगानश्रवणाकृष्टहृदयौ प्रहरिणाविमौ नियतमभ्यन्तरे मां नेष्यत इति दृढं विश्वसिमि। ततः साधितं मया ?।

मानसिंहः। ओः ? अपूर्वं ते बुद्धिचातुर्यम् ?? रणवीर ? ननु सुष्ठु विचिन्तितं त्वयाऽपि ? तद् ब्रूहि सम्प्रति-किं मया ते साहाय्यं विधेयमिति ?।

रणवीरः। गुप्तगृहप्रवेशद्वारासन्नः केवलं भवता निजं प्रशस्तघोटकमादाय स्थातव्यम्। अन्तः प्रविष्टे मयि मुहूर्तानन्तरं ममाग्रजः स्त्रीवेषेण बहिरागमिष्यति। एष निजनाम कथयिष्यति भवन्तमिति सद्य एवामुं तुरङ्गमारोप्य विजयनगरं प्रति विसृजतु भवान्। क्षणमेकमपि नोपरुध्यतामयं भवनाऽत्र। यथाऽस्मत्त्वं शीघ्रमितो भयङ्करस्थानादमुं प्रस्थापयतु भवान्। मानसिंह ? एतन्मदीयकार्यं करिष्यते भवतेत्याशासेऽहम्। न कदापि विस्मरिष्यामि त्वदुपकारम्।

मानसिंहः। रणवीर ? कथमीदृशि वचांसि निर्यन्ति तव मुखाम्बुजादद्य ? त्वं तु मम बन्धुरसि। चन्द्रसिंहोऽपि मदीयो बन्धुरेव संवृत्तः। त्वत्कथनानुसारमहं तत्क्षणमेव तं विसर्जयिष्यामि। अस्ति ततः परं किमपि ? भ्रात ? अन्त. प्रवेशानन्तरं सावधानेन व्यवहरणीयं त्वया ? विमृश्यैव कुर्या यदेव कार्यम् ? गच्छाधुना। आसन्नोऽयं निशीथकालः। साहाय्यं विरचयतु विरिञ्चिरियं तव कर्मणीति शुभमाशीर्वचनं मे।

मानसिंहेन सममिथमायोजनां विधाय तत. प्रस्थितो रणवीरः। गुप्तगृहद्वाराद्दूरादेवोपगम्य कस्यचिन्महीरुहस्य तले स्थित्वा निजपोट्टलिकातो युवतिनेपथ्याभरणं निःसार्य सम्यगात्मानं मुग्धकायं स्वकरपल्लवकलने रुचिरराजतवंशीमादाय गुप्तगृहमभिगन्तुमारेभे रमणीवेषेण रणवीरोऽयम्।

विलसतितरामिदानीं पुरन्दरदिक्सुन्दरीसुन्दरवदनारविन्दचन्दनबिन्दोरिवेन्दोः कुमुदिनीवृन्दवृन्दकलिकादलोल्लासिनी सुधामन्दैहलि.स्यन्दिनी हृदयकैरवानन्दिनी समन्ततः कान्तारेन्दिरामनोमोदिनी सुन्दरचन्द्रिका। कादम्बपुष्पकदम्बकमकरन्दबिन्दुवृन्दनन्दनचन्दनचर्चितचन्द्रिकापल्लवकेशोत्थो मधविकामोल्लासिपूयिकाकिञ्जल्कपरिमलवाही मन्दमन्दं माकन्दलहरीलास्यानि नर्तयन् वहति गिरिनदीतटवनानिकुञ्जमरुदपारो मदनैकवीरो

१ मध्या। २ इन्दुश्चन्द्रमाः। ३ अमृतस्यन्दकारिणी। ४ कैरवं कुमुदम्। ५ वनलक्ष्मीः। ६ चन्दनकर्पूरः। ७ किञ्जल्कपरिमलः केसरसुगन्धः।

निशीथसमीर । ईदृशे समये महारण्येऽत्रातिमात्रदु खितहृदयोऽपि जन समागच्छेच्चेन्मुहूर्त सोऽपि सकलमात्मदु खं विस्मरेदेवेति मन्य । ईदृशि मनोहरहृदयरमणीयेऽस्मिन्नरण्ये रमणी वेषधारी रणवीरोऽय गुप्तगृहाभ्यर्णमाजगाम । पञ्चषाणि पदानि दूरं वर्तमाने गुप्तगृहे मनोज्ञ-शिलातलमलङ्कृत्य शनैरय वशीरवेण सम निजस्वर समधात्। स्वरं सधाय मुरलीरवेण रणवीरोऽयं विहागरागेण मधुरमधुर मनोहरमञ्जुलमालपितुमारभत । कोकिलाकलरवमपि विगणयता मनोहारिणा मञ्जुलेनास्य गानेन साकमखिलेऽपि कान्तारे शान्तिदेव्या नर्तितु मारम्भि । कालोऽय नक्षत्रमालालालितकण्ठाया कैरवशालिनेत्राया रमणीयमृगाङ्कवस्त्राया रजनीदेव्या नैशीथ । तथापि विहागरागालापोऽयमिति किमिव वर्णनीयो मञ्जुलगानाकर्णनान न्द ? रणवीरस्य ललितललित मृदुलमञ्जुल गान मुरलीरवेण सममतिदूरमरण्ये समश्रू यत । गुप्तगृहे चन्द्रसिंहाधिष्ठितबन्धनालयोपरक्षकयोरपि कर्णकुहरमविशन्मञ्जुलोऽय स्वर । इति दत्तकर्णौ प्रहरिणाविमौ सातुर सोत्कण्ठमाकर्णयतामिदं गानम् । क्षणेनैव समाप्तमिदं गानम्। गानावसानसमकालमेव प्रहरिभटयोरनयोर्हृदय कुसुमबाणविद्धमिव व्यथितं सजातम्। अथारुणसिंहमुद्दिश्य फुल्लसिंहो बभाषे– ‘ सखे ? अरुणसिंह ? को नु मञ्जुल गायति गान मीदृशे निशीथे ? कस्याश्चिल्ललनाया स्वर इवाय प्रतीयते मया तु ’ इति ।

**अरुणसिंह** । ममाप्येव प्रतिभाति ? किया मञ्जुलोऽय स्वर ? केय भवेल्ललना गायन्ती ? भ्रात फुल्लसिंह ? अनुमन्यसे चेद् बहिर्गत्वाऽह पश्यामि–केयमिति? यथासम्भवमह सुन्दरीमिमामिहापि समानेष्यामि ।

**फुल्लसिंह** । सुख याहि । आवा भयात्रहेऽस्मिन्नरण्ये चिरान्निवसाव किन्तु कदाप्या मन्दविलासलीलामुपभोक्तुमवसर नैवालभावहि । अस्य सेनानीरपि नात्रास्त्यत्रेति महान् हर्ष विषयोऽयम्। गत्वा सत्वर कयाऽपि युक्त्या गायन्तीं ललनामिमामनुनीय विप्रलभ्यापि वा त्वमिहानय ।

‘ अतिसमीचीनम् । ’ इत्यभिधायारुणसिंहस्तदनुमतिमासाद्य गुप्तगृहाद् बहिर्निर्जगाम । तत पूर्वमेव तु मारब्धमभूद् रणवीरेण पुनर्गातुम् । तदभ्यर्णमुपेत्यारुणसिंह काञ्चन काञ्चनालङ्कारधारिणीं मनोहारिणीं सर्वाङ्गसुन्दरीं सुन्दरीं वशीरवतानेन सम गाने नितान्त मेकतानमानसामपश्यत् । अतोऽयमानन्दतरङ्गिणीतरतरङ्गभङ्गेषु प्रेङ्खोलितुमारब्धवान् । मनस्येवाय व्यचिन्तयत्– ‘ अये ? वनदेवीयमुत कापि महेन्द्रमन्दिरादवतीर्णा देवाङ्गना किमु ? कथन्नु काननेऽत्र मध्यरात्रे समुपागता स्यादिय सुन्दरी ? ’ इति ।

अत्रान्तरे समाप्त रणवीरगानम् । अथ समन्तादवने निक्षिप्यासौ तूर्णी तिष्ठ-तमरुण सिंहमालोकयत् । मदनपथमनागतमिवैनमाभिनीय श्रावयितुमना मनागन्तरिक्षाभिमुख

---

१ मध्यरात्रवायु । २ संयोजयामास । ३ तिरस्कुर्वता । ४ कुसुमबाण कामदेवः । ५ प्रार्थ्य ।

मालाकमात्र रणवीरोऽप्यमवादीत् ' हा हन्त ! संवृत्ता निशीथप्रायेयं रजनी । कुत्रेदानीं गन्तव्यं मया ? अहह ! सबान्धवादहं वियुक्ता नाभविष्यं चेद् मदममविष्यत् । अहह ! किमत्र मे भविता ? अखिलां रजनीं गातुमपि कथंनु शक्नुयामहम् ? कायुना गच्छाम्यहम् ? ' इत्यभिधाय रणवीरः कृत्रिमस्फुन्दनमयं रोदितुमारब्धवान् ।

रणवीरवचनानि निशम्यारुणसिंहस्य हृदि न ममौ प्रहर्षः । तत्क्षणमेवार्य रणवीरसकाशमुपेत्य पृष्टवान्- ' सुन्दरि ! का त्वम् ? कुतश्चायाताऽसि ? समीपमेवात्र निवासस्थानमस्य दासस्य । श्रुतवानस्मि तव निखिलमात्मोद्गारम् । न चेत्काचिदापत्तिस्तव ? आगच्छतु मया सह भवती । स्वनिवासस्थानमहं नयामि त्वाम् । तत्रायतनीं रजनीमतिवाह्य प्रत्यूषे गन्तासि यत्र गन्तव्यम् । ममैको बन्धुरस्ति तत्र सोऽपि गातुं वादयितुमपि सम्यग्जानाति । मया सह तत्रागमिष्यसि चेत्तर्हि नियतमानन्दो भविता । ततः प्रमाणं भगवतीति । '

रणवीरस्य तु--इदमेवाभिवाञ्छितमासीदिति स च पूर्वोक्तायाय मरुणसिंहं ललितदृगंचलचञ्चलया दशा विलोक्य मृदुलगिराऽब्रवीत्-- ' भवतायै मादृश्यै- आश्रयं वितीर्णवान् भवानिति परममुपकारमहं मन्ये श्रीमतामिति । '

तदीयचञ्चललोचनाञ्चलचलितहृदयोऽयमरुणसिंहस्तमुपादाय तत्कालमेव गृहं प्रविष्टवान् । ललनया सममायान्तमरुणसिंहमवलोक्य फुल्लसिंहः प्रफुल्लहृदा--' इयमेव सा गायिका वामलोचना ' इति सद्य एव ज्ञातवान् । हृदयमस्य प्रहर्षकलिकाकारङ्कुरैरङ्कितमिवाभवत् । तावानेतुं प्रयुक्तनाम साभ्युत्थानमभवत् । गायिकामेनां मृगलोचनां परिधाययाञ्चकार फुल्लसिंहमरुणसिंह इति किमिव वर्णनीयोऽस्य हृदि प्रमोदः ? अथ कुरङ्गलोचनां सम्भ्रमेण समपनायाऽङ्गप्रत्यालोक्यायं साम्भितमवादीत् फुल्लसिंहः ' अप्यनुगृहीतायं दासो निम्ननामाक्षरोच्चारणपरिश्रमेण श्रीमत्या ? ' इति ।

रणवीरः । दासीयम्- ' रत्नकुमारी ' इति प्रवदन्ती जनैरलिखैः ।

फुल्लसिंहः । अहो ! किंपरसुन्दरमभिधानमिदम् ? ननु कोऽयं देशो निजविरहपर्याकुलः क्रियतेऽधुना भवत्या ? ।

रणवीरः । दक्षिणदेशवास्येयं दासी । कलयतितरामियं सुकौशलं ललितकोस्याकापकलापकलासु । महामहिमशालिनी महीमहेन्द्राणी रङ्गपरिषद्मियं स्वनर्तनगानकलाकौशलैरलं परितोषितवती बहुशः । ( इतीयं पञ्चनवानुरोमुपचक्रमे रणवीरः । )

अरुणसिंहः । ( सहर्षस्मितम् । ) स्वसुकोमलकलकण्ठगीतिरञ्जितपरमप्रगुणगानेनेमावपि किङ्करौ सम्मोदयिष्यति किमु तदा श्रीमती ? ।

रणवीरः । किन्नु समुदीर्यते श्रीमता ? किमेतेन ? अपि तु बहुशो गानपरम्परया श्रीमन्तौ संतर्पयितुमुद्यतेयं दासी ।

इतीरयित्वा रणवीरो वंशीरवेण स्वकाकलीं संमेलय गौडमालवरागेण गीतिकामिमामसावल्लमञ्जुलगिरा—

१ कटाक्षचपलया । २ गुणवतामवमूढहल्लपु ३ अलम यन्तम् । ४ सम्मानदिष्यति ।

" यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रुवपदम् ।

कथितसमयेऽपि हरिरहह न ययौ वनम् ।
मम विफलमेतदनुरूपमपि यौवनम् ॥ १ ॥
यदनुगमनाय निशि गहनमपि शीलितम् ।
तेन मम हृदयमिदमसमशरकीलितम् ॥ २ ॥
मम मरणमेव वरमतिवितथकेतना ।
किमिति विषहामि विरहानलमचेतना ॥ ३ ॥
मामहह ? विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ ४ ॥
अहह ? कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ ५ ॥
कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया ॥ ६ ॥
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥
वसतु हृदि युवतिरिव कोमलकलावती ।
हरिचरणशरणजयदेवकविभारती ॥ ८ ॥ "

इमां गीतिकामाकर्ण्यैव निमुग्धहृदयौ भूत्वा सानन्दं समस्तकान्दोलनम्– ' अहो माधुर्यम् ? अहो मञ्जुलोऽयं स्वरः ? ' इति वक्तुमारेभाते तौ । गानमवसितमधुना । फुल्लसिंहस्तु– ' गीयत एवाधुना ' इत्यवधार्य मस्तकमान्दोलयत्येव साम्प्रतमपि । यदा ' समाप्तं गानमिदम् ' इति विदितममुना तदा पुनरवोचि–' आम्, अपरैका गीयतां गीतिरिति । '[1]

रणवीरः । ( मन्दं तत्कपोलतलमाहत्य । ) अये श्रीमन् ? इयत्येवावधौ विमूढो जातः किमेवम् ? ( इत्यभिधाय रणवीरः फुल्लसिंहं निशितकटाक्षबाणेनाजघान । )

फुल्लसिंहकपोलतले रणवीरस्य कोमलकरशाखापल्लवस्पर्शसमकालमेव कुसुमविशिखशरविभिन्नहृदयः सद्य एव समुत्थाय रणवीरपाणिपङ्कजं गृहीत्वाऽऽचचक्षे– ' ललितनयने ? किमिति कदर्थिता निजाङ्गुल्यो मदीयकपोलतलसम्पर्कपरिश्रमेण ? अथवा, आम् ? अवगतं ननु मया । विकसितमद्य मदीयकपोलतलभाग्यकुसुमैः ? भवतु । पुनरिदानीमालप्यतां कतमः रागः । '

रणवीरः । अयि गानामृतरसरसायनरसनरसिक ? ईदृशं मनोहरं गानमहं श्रावयिष्यामि भवन्तं यदतिमात्रमानन्दसागरे निमग्नो भविता भवान् । परमिदानीं किञ्चिन्मदिरापानसु-

1 विचित्रः स्वरः ।

समनुभूयेत चेदतिसमीचीनं सत्यं गातुं वादयितुञ्चापि पार्येत ? ( इति मङ्गलाचरणं कृतवान् रणवीरः। )

अरुणसिंहः। आम्, सखे ? सम्यगाह कुरङ्गलोचनेयम्। परमिदानीं मैरेयं कुतो लभ्यम् ? ।

फुल्लसिंहः। इयमेवापूर्णता खलु ? ? कलकण्ठमञ्जुलगानेन समं मदिरापानस्येकिमिव वर्णनीयः सौख्यातिशयः ? ( रणवीराभिमुखं निरीक्ष्य। ) अपयचेऽस्माकं मार्गे-ईदृशे स्वर्गसुखेऽपि सम्प्रति विना कादम्बरीं तदीयसुखोपभोगे न्यूनत्वमिव प्रतीमत इति विवशाः खलु वयम् ? ।

रणवीरः। इदमेव न्यूनत्वं किमु ? अङ्ग ? किमिति भवद्भयामुदास्यते ? न किमप्यधिकं मे श्रीमदपेक्षया। मदिरापानरसिकोऽहमिति सर्वदा स्वसमीपमेव तां स्थापयामि। गृह्यतां निपीयतामिदानीन्तु। श्वः पुनरियं कुतोऽपि मार्गवर्तिनो नगरादादास्यते मया। गत्वा विलोकनीयं भवता। पोटलिकायां ममातीवोत्तमजातीया मदिरा विद्यते। निःसार्यतानीयतामियम् ।

इति वचनमुपश्रुत्यैव तत्क्षणमेवोत्थायारुणसिंहः पोटलिकापार्श्वमुपेत्य ततो मद्यपरिपूर्णमेकं काचकुतुपमानीतवान् ।

रणवीरः। ( विहस्य ) न विदितं खलु मया यद् भवन्तोऽपि भवेयुरियन्तो रसिकाः ? विलासिनो ननु भवन्तः प्रतीयन्ते ? ।

इति निगद्य पुनरपाङ्गविलसितं भ्रूभङ्गचापे निधाय विसृष्टवानेकं रणवीर इति द्रावण्यम् विमिश्रमर्माणि संवृत्य मदनातुरौ संजातौ। अनन्तरं रणवीरो निजकराम्बुरुहेण सुन्दरमेकं काचचषकं मदिरापूर्णं विधाय फुल्लसिंहाभिमुखं धृतवान्। वराकोऽयं फुल्लसिंहस्तु प्रफुल्लान्तःकरणोऽजनि। ईदृशी रूपवती ललना स्वकोमलकरपल्लवेन मद्यं पाययति मामिति को नु मत्सदृशो भवेन्मादृशोऽखिलेऽपि भूमण्डले महाभाग्यशाली पुरुष इति व्यचिन्तयदयम्। क्षणानन्तरं रणवीरेण प्रोक्तम्- ' गृह्यताम्, निपीयतामियमयि विलासिन् ? श्रीमत्सेवायां सन्नद्धेयं दासी।' इति।

' सुन्दरि ? कोऽसौ दुर्भागी श्रीमत्या हस्तपङ्कजेन दत्तं गरलमपि पातुं नाङ्गीकुर्यात् ?' इत्युदीर्य तत्काचचषकं गृहीत्वा फुल्लसिंहः स्वमुखे रिक्तमकरोत्। तथापरं चषकं परिपूर्णं मदिरया। रणवीरोऽरुणसिंहाय -' आस्वाद्यतामियमयि विलासिन्'। 'भवतापि':- इति सविनयमाग्रहाय दत्तवान्। तेनापि तस्मात्तत्तथैव रिक्तीकृतं मुखे। इत्थं मुहुर्मुहुरिमौ भृशं पायितवानयं रणवीरः। अतिमदिरापानेन महाशयाविमौ मदोन्मत्तौ भूत्वा क्षणेन सानुरोधपूर्णं प्रोचतुः–' हुं ? भवत्येका गीयतां गीतिरिति।'

रणवीरः। ( विहस्य ) आम्। गीयतेऽधुना। निरिष्टा रजनिरिदानीमवशिष्यते गातुं

१ मद्यम्। २ मदिराम्।

वादयितुञ्च । किमिति व्याकुलौ भवथ ? पुनरेव कदापि मुहुर्मुहुरीदृश संमेलनमस्माकं भविष्यति किमु ? तदद्यतन्या रज न्यां तु मिथो वय सुखदु समयीं वार्तां करवामहे ।

इदमाकर्ण्य मदेना-दोलमानोऽरुणसिंहोऽब्रवीत्सहसा- ' स स-सत्यमुच्यते ? पि पि पि प्रियतमया सत्यमुच्यते ? की की कीदृशमस्य सौन्दर्यम् ? ' इति । एव मल्पयन्तेवारुणसिंह फुल्लसिंहमवदत्-अ अ अ...अयि फुल्लसिंह ? न न नास्ति कापि बुद्धिरेव प प परमेश्वरस्य यदथ मां पुरुष निर्ममे । म म मादृशेद्य रत्नकुमार्या कञ्चुकिका व्यधास्यत, त ,त तदा तु प्रतिदिनमह किमु नास्थास्यदस्या हृदयोपरि ? प प . पर न जाने किमिति भ्रान्ता बु बु बुद्धिरिय प ..प परमेश्वरस्य ? ' इति ।

फुल्लसिंह । अ अ अरुणसिंह ? मि . मि मिथ्या विचारणा तव ? प प परमेश्वरस्य दोषस्तु विद्यत एव ? किन्तु त्व कञ्चुकिका भवितु यदीच्छसि त त तदपेक्षया तदीयमम्बर भवितु मे सम्यक् प्रतिभाति ? अ अम्बरञ्चेदह भवेय तस्याः प्रियाया अ अ अखिलमप्यङ्गमालिङ्गेयम् ? अ अ अलमालिङ्गेयमहम् ? ।

इत्थ मदपरवशौ तौ मिथ प्रजल्पितुमारेभाते । इदमवलोक्य व्यचिन्तयद् रणवीर - ' आम् ? इदानीमिमौ नितरा मदायत्तौ जाताविति निरन्तराय सेत्स्यति मम कार्यम् ? ' इत्यालोच्यासौ तौ प्रोवाच- ' अयि विलासिनौ ? इयत्येवावधौ मदमत्तौ जातौ किमेवम् ? ( स्मृतिमभिनीय ) आम् । वृत्तमेक प्रष्टु विस्मृतवती चामहम् । यत्र निवसतो भवन्तौ भवतोरेव मन्दिरमिद किमु ? ' इति ।

फुल्लसिंह । ( भुवि लुठन् । ) न न नैवेद गृहम् ? ब ब बन्धनालयोऽय प्रिये ? ।

रणवीर । आ एव किमु ? तदिमां दासीं नैव दर्शितारौ किमु कारागृहमिदम् ? ।

तत्क्षणमेवारुणसिंह सहसा समगादीत्- ' म म मदीयप्राणप्रिये ? त त त्वत्तोऽपि किमप्यधिक किमु मे ? गि गि गृहाणेमां कु कु कुञ्चिकाम् । वि वि विष्कम्भकमुद्घाट्य प प ,पश्य कार गृहम् । ' इति प्रोच्य रणवीराभिमुख कुञ्चिकागुच्छक निक्षिप्यायमपि मूर्छितो भूत्वा फुल्लसिंहस्योपरि पर्यस्खलत् । अतिमदमूर्छितौ निरीक्ष्येमौ कुञ्चिकागुच्छकमादाय रणवीरो बन्धनागाराभिमुखमभिधाव्य झटिति विष्कम्भकमुन्मुद्रितवान् । अस्मिन्समये चन्द्रसिंहोऽतिदु खक्लान्तः सन्निद्रापरतन्त्रोऽवर्तत । तदभ्यर्णं प्राप्य- ' तात, अयि तात ? ' इत्याकार्य प्राबोधयदमु रणवीरः । सहसैव प्रबुध्योपविश्य चन्द्र ' कोऽयम् ?. कि पुनरागतोऽयं नूतन फुल्लसिंह किमु ? ' इत्यवदत् ।

रणवीर । तात ? एषोऽह रणवीरोऽस्मि । आर्य ? उत्तिष्ठ न कुरु विलम्बम् । चन्द्रसिंहस्तु समुत्थाय- ' कोऽयम् ? रणवीर किमु ? कथमेव समागत ? ' इति प्रोच्य सविस्मयचक्षुषा विलोकितवान् रणवीरम् । अथ सहसैवायमगादत्- ' रणवीर ? किमिदम् ? कथमिदानतोऽसि त्वमीदृशा वेषेण ? इति । '

रणधीरः । भ्रातरं मोचयितुम् ।

चन्द्रसिंहः । अपि मां मोचयितुम् ? कया रीत्या ? ।

रणधीरः । तात ? नास्ति सम्प्रति कथयितुं समयस्तावान् ? सन्निहितोऽयं प्रहरिपरिवर्तनसमय इति झटिति मदीयश्रीवेषं परिधाय प्रतिष्ठतां भवान् । शीघ्रञ्च बहिर्निःसरतु । भवदुपरक्षकौ भटौ मदिरापानातिशयेन मूर्छितौ कृतौ मयेति निष्प्रत्यूहं बहिर्निर्यास्यते भवता । त्वर्यतां त्वर्यताम् । अन्यथा पुनर्नूतनायां विपत्तौ पतिष्याव आवाम् ।

चन्द्रः । वीर ! नाहं गमिष्यामि कदापि त्वामेकाकिनमत्र विहाय ? मदर्थं त्वमत्र कारायां तिष्ठेः किमु ? अहञ्च निष्ठुरो भूत्वा प्रतिष्ठेय, किमिति ? इदं तु न कदापि संभाव्यते ! ।

रणधीरः । ( चन्द्रं गन्तुं त्वरयन् । ) तात ? सत्वरं गमनमेव श्रेयस्करमितो भवतः । नायं विलम्बितुं समयो मुधा । प्रभुर्मां रक्षिष्यति ? केनाप्युपायेन निर्गच्छेयमितोऽहम् । अधुनैवापरे प्रहरिणः समागमिष्यन्तीति द्रुतमितः प्रस्थीयतां भवता । गुप्तगृहद्वारपार्श्वे त्वमित्रमेकमहं तुरङ्गमादाय प्रतीक्षितुं कथयित्वाऽऽयातोऽस्मि । तत्रोपगम्य निजाभिधानं निवेदनीयं भवतेति सद्य एव भवते दास्यति निजमाज्ञानेयमसौ । तं हयमारुह्याधुनैव विजयनगरे गन्तव्यं भवता । यतोऽत्र न दृश्यते शूरसिंहः । तस्मादयं नृशंसः शून्ये विजयनगरे भ्रातृजायां संत्रासयितुं गत इति शङ्के ।

चन्द्रः । रणधीर ? त्वदिच्छानुकूलमहमाचरामि । वैरिणा सावधानेन व्यवहरणीयम् । पातु त्वां परमेश्वरः ? वत्स ? यथासम्भवमितः शीघ्रमपगन्तुं प्रयतेथाः । न खलु करोतु भगवानेवं कदापि ? परं तथापि विपदां गिरिवरस्त्वदुपरि परिपतेद्यदि न परिजह्यास्तर्हि निजधीरतां कर्हिचिदपि त्वम् ? ? दिनचतुष्टयं त्वामहं प्रतीक्षिष्ये । तत्रान्तरे नागच्छेस्त्वं यदि तदाहं तव साहाय्यार्थमागमिष्यामि । मा कदापि व्याकुलीभवेः ! साधयाम्यहमधुना ।' इत्युदीर्य स्नेहमयीं दृशं निपात्य रणधीरे मदीयश्रीवेषं परिगृह्य प्रस्थितश्चन्द्रः । क्षणेनैव गुप्तगृहद्वारं प्राप्तः ' कोऽयम् ' इति मानसिंहेन पृष्टोऽयम्— ' कोऽपि तु मित्रो बन्धु ' रिति समुदचारीत् ।

' किमभिधानं भवताम् ? ' इति पुनरनुयुक्तोऽसौ तेनात्मानं चन्द्रसिंहनामानमाचष्ट चन्द्रसिंहः । ' अहो ? आगत. किमु श्रीमान् ? ' इति प्रोच्य तुरङ्गमकरिकोरांर्पित चन्द्रसिंहाय दत्तवानयं मानसिंहः । तस्य बहुप्रकारं मनसा समाकृष्य तुरङ्गमास्थाय सगुप्तपीठिकाद्वनं याजिनं विजयनगरवर्त्मना प्लुतगत्याऽयं प्रधावितश्चन्द्रसिंहः ।

इतश्च चन्द्रसिंहापसरणानन्तरमेवापरे प्रहरिणः समुपस्थाय पूर्वसिंहागणसिंहौ मूर्छापरवशौ निरीक्ष्य चकिता बभूवुः । सानुसंधानं परं परीक्षमाणैरेभिः ' अतिमादिरापानेन विचेतनाविमौ संवृत्ताविति ' विज्ञातम् । अतस्तौ समुत्थाय कस्मिंश्चन कोष्ठे ताडितौ । अथ

---

१ बलात् । ' ज्ञान ' इति भाषायाम् । २ पार्ष्णिः—पुटिकाप्रोभागः ।

बन्दीकृतपुरुषं कारायां सुराशिन निरीक्ष्य निश्चिन्ता समवर्तन्त ते । अपावृत कारागृहद्वारं सतूलं नम्रहृषाणपाणयः प्रहरिणोऽमी तनेपरक्षणं कर्तुमारेभिरे । निष्कल्ङ्कोऽय बालो रणवीरो निपतितो बन्धनालये ॥

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ सचित्रदयानन्ददिग्विजयमहाकाव्यप्रणेतृ कुमुदिनीचन्द्रे सप्तमी कला ॥ * ॥

---

## अथाष्टमी कला ।

---

" अन्तर्हिते शशिनि सैव कुमुद्वती मे दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥ "
( शाकुन्तले )

' कामातुराणां न भयं न लज्जा । ' ( स्फुटम् )

' न प्राणान्ते प्रकृतिविकृतिर्जायते ह्युत्तमानाम् । ' ( स्फुटम् )

' केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसंतापभेषजम् ॥ ' ( पञ्चतन्त्रके )

श्रेयो लोके जयति महतामुज्ज्वलोऽयं निसर्गः । ( स्फुटम् )

अथारूढोऽय चन्द्रसिंहो वाजिनं वायुवेगेन धावयन् गच्छति स्म । मुहूर्तेनैवायं विजयनगरात् गव्यूतिमितदूरवर्तिन्या कस्याश्चिदिश्चिन्नोच्चलभुवि समाजगाम । अश्वायमात्म धीरेण परिवर्तयामास । सम्प्रति स्वसुन्दरमयूखजालैः कुमुदिनीनां मण्डलं हासयन्नम्बरतले विराजन् तारकराजो निजतारकसचिवसमूहेन परिवेष्टितमण्डलोऽनितराम् । क्वचित्क्वचिदरण्ये वेचरं झीझीशब्दानमिश्रितो वनराजिध्वनिरश्रूयत । तद्विनिरिक्तमखिलं शान्तमिव भासते स्म तत्रत्यमरण्यम् ।

साम्प्रतं चन्द्रसिंहेन वेवल्लमङ्गे सूक्ष्मकौशेयाम्बरं पादयोश्चानिरथिरमेकमधोवसनं परिदधे । नातामसीतर्दीयमुत्तमाङ्गमिति तदीयाः नीलनीला अनिर्दिष्टलोलारूपूर्णकुन्तला ललाटे कामपि कमनीयां कान्ति कल्पयन्ति स्म । क्षणेनैवायं विजयनगरदुर्गद्वारमाससाद चन्द्र । संवृत्तम् भूतदानीं दुर्गद्वारमिति द्वारमशायहीतुं दौवारिकमुच्चैरयमाकारितवान् । क्षणादेवाभ्यन्तरात्

---

१ चन्द्रे । २ कुमुदिनी । ३ दर्शयति । ४ इष्टः प्रिय । ५ भेषजमौषधम् । ६ प्रशंसनीय । ७ स्वभावः । ८ मयूख किरण । ९ चन्द्र । १० पवनचपला । ११ कुटिलकेशाः । १२ द्वाररक्षम् ।

'कोऽयम् ?' इति ध्वनिरश्रूयत। 'पथिकोऽहमस्मि।' इति तदुत्तरं दत्तं चन्द्रेण। 'तद् गम्यताम्। नैवेदानीं दुर्गद्वारमपावरीष्यते।' इत्यभ्यन्तराद् दौवारिकेणावोचि।

चन्द्रसिंहः। भ्रात ? अत्यावश्यककार्यार्थमहमिदानीमागतोऽस्मि इति द्वारमपावियतां भवता सत्वरम्।

दौवारिकः। कथितस्त्वन्नु मयैकदा नेदानीमपावरीष्यते द्वारमिति ?।

चन्द्रः। किं निमित्तम् ?

दौवारिकः। आदेशोऽयमस्मदमात्यवर्याणां यद् दशवादनानन्तरं कोऽपि समायातु चेन्नोद्घाटनीयं द्वारमिति गम्यतामधुना। क्वापि तरुतलेऽद्यतनीं रजनीमतिवाहयतु कथं कथमपि भवान्।

चन्द्रः। अयि भद्रमहाशय ? साक्षादमात्यवर्येणैव प्रयोजनं ममाधुना। तत् साक्षात्करणीयोऽयं मया। तदपावृणु द्वारम्।

दौवारिकः। किमभिधानं भवताम् ?।

चन्द्रः। नाहं निवेदयामि निजाभिधानमपरिचितपुरुषाय विना तत्रामवेदनम्।

दौवारिकः। हंहो ? न कथयसि यदा मनाम यदि तर्हि नाहमपावृणोमि द्वारम्। गच्छ सुखम्। भवतु किमपि कीदृगपि प्रयोजनं ते परमिदानीं तु नाहमपावृणोमि द्वारम् ? कोऽपि धूर्तः प्रतीयसे खलु त्वम्। याहि शीघ्रमितः। प्रजल्पसि चेदधिकमधुना बन्दीकृत्य त्वां बन्धनालये स्थापयिष्यामि।

चन्द्रः। कोटिशोऽपि तवोपायैर्नैवेतो गमिष्याम्यहम् ? नापावृणोषि यदि द्वारं न पारयिष्यसि तर्हि शयितुं मदुच्चैराक्रोशेन।

इति वचनमुपश्रुत्य भृशं चुकोप दौवारिकः। कशां गृहीत्वैव हस्ते महत्या त्वरया द्वारोद्घाटनार्थं कुञ्चिकामानेतुं कोष्ठे गतवान्। मनसि चायम्— 'पुरुषमेनमन्तः प्रवेश्य द्विधिः कशया ताडयिष्यामि।' इति निश्चित्य दुर्गद्वारवातायनमुन्मुद्रितवान्। वातायनोन्मुद्रणसमकालमेव चन्द्रमसः प्रकाशे द्वारपालमिमं पर्यचिनोच्चन्द्रसिंहः। अवादीच्चायममुम्— 'को न खलु ? समरसिंहः किमु ?' इति। दौवारिकोऽयमेनं तु पूर्वमेव पर्यचैषीत्। विजयनगरदुर्गकोटपालोऽयमभूद् द्वारपालः। सम्प्रत्यमस्यैव प्रहरिकापर्यायोऽभवद् दुर्गद्वारे। चन्द्रसिंहमभिज्ञाय कोटपालस्तु भिया स्तब्ध एवाभूत्। चन्द्रसिंहमवामन्येऽहमिति का नु दशा भवेदिदानीं ममेति चिन्तया भयाकुलः संहृत्य शिरसि विरचिताञ्जलिः सरभसमुत्थाय जानुभ्यामुपविश्य— 'क्षम्यतामयमविनयाचारः।' इति कम्पमानस्वरमवोचदयम्। भयाकुलमालोक्यैनं तदन्तिकमुपेत्य तदीयं हस्तमादायोत्थाप्य शमयित्वा विजयनगरोदन्तं पृष्टवांश्चन्द्रसिंहः। ततो धैर्यमालम्ब्य करयुगलं सम्पुटयन् सविनयं जगादायं कोटपालः 'कुतोऽकस्मादिदानीमागमनं श्रीमताम् ? महाराज ? अस्मद्विजयनगरे साम्प्रतमतीव भीषणतरं वृत्तं संघटितम्। दिवं समाधिगतवान् महाराजश्रीविजयसिंहः। तदनु राजमहिषी— सापि सती भूता। अनुपलभ्य भवदीय-

वृत्तान्तमधुना राज्यतन्त्रमखिलं मन्त्रीश्वरश्चालयति । भ्राता रणवीरसिंहोऽपि भवन्तं मोचयितुं गतवान् ।

चन्द्रसिंहः । अपि सती भूता राजमाता ? ।

समरसिंह । आम् । श्रीमन् ? ।

चन्द्रसिंहः । धन्येयं खलु ? नमो नमो देवि ? तुभ्यमस्तु ममासकृत् । सद्गतिं ददातु भवदात्मने परमेश्वरोऽयम् । ( कोट्टपालं प्रति ) समरसिंह ? अस्त्यपरं किञ्चिदुदन्तजातम् ?

समरसिंह । आमस्ति प्रभो ? भवन्तं नष्टं निशम्याग्रभवती राजनन्दिनी कुमुदिनी परित्यज्याहारं वल्कलाम्बरं वसाना[1] फलाशनैरात्मदिनानि श्रीमन्नाम जपन्ती कथं कथमपि गमयति । प्रभुनिदेशश्चेदहमिमं सुदन्तमुदन्तमार्यायै कुमुदिन्यै निवेदयामि ।

चन्द्रः । मदीयसमरशूर समरसिंह ? नावश्यकमिदानीं तदन्तिकं गन्तुम् ।

अत्रान्तरे अपरेऽपि निद्राणा वीरवरा वार्तालापमिममनयोराकर्ण्य प्रबुद्धाः सम्मुखमुपतस्थिवांसं राजकुमारमपश्यन् । सर्वेऽपि प्रमुदितहृदया राजनन्दनमवन्दन्त । अथाब्रवीच्चन्द्रः समरसिंहम्– 'समरसिंह'? आगच्छ मया सह त्वम् । प्रासादपर्यन्तं गन्तव्यमिदानीमावाभ्याम् । सज्जितो भव सुशस्त्रैः । स्वभुशुण्डीकृपाणौ चार्पय मह्यम् ।' इति । चन्द्रनिर्देशानुसारं सज्जीभूय कोट्टपालश्चन्द्रसिंहाय निजभुशुण्डीकृपाणौ दत्तवान् । उभावपि प्रासादं प्रति प्रस्थितौ क्षणेनैव प्रासादभित्तिसमीपं जग्मतुः । तत्कालमेवाभ्यन्तरे कमपि कोलाहलमिवाशृणुतां तौ । 'किञ्चिमित्त. कोलाहलोऽयम् ? इति विज्ञातुकामौ तत्रैवेमौ तिरोहितौ स्थितवन्तौ ।

सकलकलाभिरामो बुधबृहस्पतियोगदर्शनीयो रमणीयतारावलीमण्डलीमण्डलितो मनोभिरामश्चन्द्रमा वियदङ्गनवेदिकासिंहासनं समलङ्करोति सम्प्रति । अतिक्रान्तनिशीथा विभावरीयम् । समयेऽस्मिन् प्रासादस्य दक्षिणस्यां दिशि विद्यमाने सुन्दरोद्याने नीलवसनप्रावृताखिलाङ्गः कश्चिन्नरः पादपान्तर्हितस्तिष्ठति स्म । प्रासादवर्तिनः सर्वेऽपि जना निद्रापरवशा अभूवन् । केवलं कुमुदिन्येवाद्यापि जागर्ति स्म । अननुगृहीतेयं निद्रादेव्येति प्रतीयते । शीतांशोः शीतलकिरणसम्पर्केणाधिकमियं सतप्यते । 'क्व यामि, कुत्र नु वसामि ? आर्य मदीयप्राणप्रिय चन्द्र ? कुत्र तिष्ठसि रम्? ' इत्यभिधाय राजकन्या कुमुदिनी मुक्तकण्ठं विललाप । रोदसी रोदयता रोदनध्वनिनाऽमुना तदभ्यर्णे निद्राणा तदीयसखी प्रियंवदा प्रबुद्धा । विलपन्तीं कुमुदिनीमवलोक्येयमगादीत्– 'हलो कुमुदिनि ? किन्नु भवति ते ? किमिति रोरवीषि भवत्या ? समाश्वसिहि सखि ? समाश्वसिहि । मङ्गलं कर्ताऽयं प्रभुराखिलम्विलम्बतम्मङ्गधरः ? ' इति ।

---

१ परिदधाना । २ वेष्टितः । ३ गगनम् । ४ 'भूद्यावौ–रोदस्यौ रोदसी च ते ।' इत्यमरः । ५ उर्वसम्बोधनम् ।

प्रियम्वदाकथितं निशम्य निगदितवती तदीयकण्ठमालिङ्गन्ती कुमुदिनी— 'सखि प्रियम्वदे? न खलु शान्तिर्मे भवति हृदि क्वापि ? ( चन्द्रं विचिन्वयन्ती ) हन्त ? किमिदानीं करोमि ? तातचरणास्तु गतप्राणा एव ननु ? परं तैः समं मदीयं प्रियतमं रत्नमपि न जाने क्व लीनम् ? हन्त ? प्रवृत्तिरपि नोपलभ्यते तस्य। हा हन्त ? भस्मीभवति हृदयमिदं सन्दह्य दयितं विना। अयि चन्द्र ? प्रियचन्द्र ? ननु क्वासि ? एहि एहि हृदयेश्वर ? देहि मे दर्शनमञ्जसा। विरहानलेनेयं त्वत्प्रिया कुमुदिनी दन्दह्यते, ग्लायति, ताम्यति, विरोदिति, शुष्यति, विलपति धानवरतमश्रुजलधारया क्षालयति कपोलतलयुगलम्। प्रियचन्द्र ? पर्याकुलामिमां कुमुदिनीं सान्त्ववचनैर्मधुरमधुरैः शान्तिदायकैः सान्त्वयतु शीघ्रमेत्य। शून्यमिव भासते त्वां विना सकलं जगदिदम्। प्रियप्राणेश्वर ? भवन्तमेव चिन्तयामि निरन्तरम् ? नाथ ? गतस्य तवाद्य चत्वारि दिनानि व्यतीतानि। भ्राता रणधीरोऽपि मोचयितुमेव भवन्तं गतोऽस्ति। अये ? अद्यापि क्वापि नोपलब्धा प्रवृत्तिरधुना। भवदर्थं कियन्ति घोरकष्टानि वेन विसोढानि स्युः ? हन्त ? प्रभवेत् नु प्राक्तनं कर्म।' इति वदन्ती मुक्तकलं विलपितुमुपक्रान्तवती राजनन्दिनी।

अथामूं सान्त्ववचनैराश्वासयन्ती प्रोवाच प्रियम्वदा— ' हला ? मा रुदिहि। आर्यचन्द्र-सिंहरणधीरौ यत्रैव भवेतां परमेश्वरानुकम्पया ततोऽपि समागमिष्यत एवात्र। न कदर्थया-श्रुमोचनैर्निजहृदयम्। धैर्यमालम्ब्य हृदि। किमित्येवं व्याकुलीभवसि ? आगच्छ, नीचैरु-द्याने समुपगम्य पर्यटाव आवाम्। हृदयञ्च शमयावः।' इत्युदीर्य कुमुदिन्याः कराम्बुजं गृहीत्वा निजपाणिपल्लवेन तामधोनीतवती रुचिरोद्याने प्रियम्वदा।

आगच्छन्त्याविमे विलोक्य सोऽयं पादपान्तर्लीनः पुरुषः प्रमुदितहृदयस्तन्मनसा संभावितवान्— ' अहो ? मधुरमनयोर्दर्शनम् ? ईदृशीं केसरिकटिकामिभविजित्वरश्रोणिघटीं चञ्चलचमत्कृतिचारुनेत्रःपुञ्जशालिनीं कुरङ्गलोचनां सुन्दरीमवलोक्य को नु खलु मन्द-भागधेयो न मुह्येत्तरः ? साधूक्तं कविकुलगुरुणा कालिदासेन—काममननुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति। कुतः।

सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

अस्याः खलु—

• अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥ इति।

इत्यभिधाय पुरुषोऽयं यत्र कुमुदिनीप्रियम्वदे व्यचरतां तत्र शनैरागम्य कुमुदिनी प्रोवाच— ' मनोमोहिनि ? भवादृशीभाग्यवतीनां मधुरं चञ्चलदृगञ्चलेनावलोकयस्व। तु किनीं दासं मुग्धयितुमुपस्थितोऽयं तव दासः शूरसिंहः। ' इति। शूरसिंहनामश्रवणमात्रेणैव चमत्कृत्य वारिताभिल्पति पुरतः कुमुदिनी तावत्तमेव शूरसिंहमालुलोके पुरतः स्थितम्। शूरमवलोक्यैव क्रुधा प्रज्वलन्ती कुमुदिनी— ' कोऽयम् ? शूरसिंहः किमु ? ' इति।

क्रूरसिंह । आम्, रसिके ? तव प्रेमभिक्षुरयं क्रूरसिंहो वर्तते ।

कुमुदिनी । चण्डाल ? कथन्न लज्जसे प्रलपन्नेवम् ? दुरात्मन् ? कुक्कुरो यथा प्रहत्य सकृद्धि सारितोऽपि मुहुर्मुहुरायाति तथा त्वमपि मुमूर्षुरिवान्धोभूत्वा पुन पुनरागच्छसि। रक्षितुमिच्छसि चेदात्मानमपसर त्वमित सत्वरम् ।

क्रूर । मृगाक्षि ? किमित्येवं सद्माऽऽकुलीभवसि ? तव मधुरयौवनोपवने मदनता पक्लान्तोऽहं विश्रान्तिसुखमनुबुभूषुरायातोऽस्मि । सुन्दरि ? त्वदीयमिन्दीवरेन्दिरासुन्दरं वदनेन्दुबिम्बमवलोक्य चकोर इवाथ त्वदधरामृतपानायात्याकुलोऽजनि । इन्दुमुखि ? शरण प्रपन्नोऽस्मि ते। मारय वा जीवय वा, त्वदायत्तोऽस्मितराम् ।

कुमुदिनी । अरेरे मदनमदमत्त मदनान्ध ? कापि साधारणीयमबला कुमुदिनीति मा स्मावगम खलु ?? पापिष्ठ ? स्वसतीमतप्रतापज्वलनेनेय भस्मसो करिष्यति त्वाम् । नरपिशाच ? त्वदङ्गरुधिरै रञ्जयिष्यामि निजकराम्बुजे। दुरापसद ? नाधुनापि व्यलोकयस्त्व वीराङ्गनाम्। नृशंस ? मृगतृष्णिकेव तवेयमाशा ? किमिति निजमुखेन मरण याचसे ? क्षत्रियापसद ? सर्पिणी सत्रोस्य नैव शुभ भविता ते ? द्रुतमपसर त्वमित ।

क्रूरसिंह । प्रिये कुमुदिनि ? अपि कियदपि कथयेस्त्वं किन्तु नाहं भस्ये खलु ? ऋते त्वदपहरणान् नैवाहमितो गमिष्यामि ?।

कुमुदिनी । पापिष्ठ ? त्वमेव खलु नापहरिष्यथा मामपहरिष्यन्। रे आततायिन् ? किन्तु करोमि तव ? नास्ति मदन्तिकमिदानीभामपियाऽसिपुत्रिका, अन्यथा पश्यत एव ते त्वामा स्मशौर्यमदमदर्शयिष्यम् ।

क्रूर । किमपि कथय परमहन्तु तव प्रेमणि विक्षिप्तोऽस्मि जातः खलु ? ? तदास्वादय स्वप्रेमरसामृतम् ।

कुमुदिनी । अलमल प्रजल्प्य ? ? क्षत्रियकुलाङ्गार नराधम ? किं प्रभवति कश्चिदपहर्तुं शिरोमणि फणिराजस्य, श्मश्रुकुन्तल केसरिणः, सतीत्वञ्च पतिव्रताया जीवतामेवार्मीपां कदापि ? कण्ठगतैरपि मदीयप्राणैर्नैव कदापि तव दुरभिलषित फलिता ।

क्रूर । सुन्दरि ? अनुगृहाण । प्राणेश्वरि ? पाणिं मे गृहाण । किम ते प्रकाशनीयमेव स्था दासरूप मया ? प्रिये ? मन्यस्व वचनं मे । मदनानलेनाहं दन्दह्ये । तदनुकम्प्य दासयास्य प्राणघस्मरस्मरज्वालाततिम् । विलासिनि ? मनाङ्निभाल्य प्रेमदृगञ्चलेन प्रणयार्थिनमेतम्। मानिनि ? माननीयमेव मम वचनमन्यतरस्त्वया ? सरलमनसा न मनुषे चेद्-त्ते बलात्कारेणापि त्वां मानयिष्यामि इति नियतमवेहि ।

कुमुदिनी । नराधम ? साध्वीं सीतां सतीं द्रौपदीञ्च सम्प्रार्थ्य रावणस्य दुर्योधनस्य च का गतिर्जातेति जानीषे किमु त्वम् ? ।

क्रूर । आम् । सम्यग् जानेऽहम् ? समरे तयोर्विनाश संवृत्य तदीयमखिल राज्य मपि धूलिसाद् गतम्– इत्येव जात किमुतान्यत् ? ।

कुमुदिनी। पापिष्ठ! यादृशेव गतिर्भविष्यति तथापि इति दृढमवगच्छ।

क्रूरः। आमाम्, अवगतम्। सुन्दरि! भवतु यद् भवितव्यम्! किन्तु मया सम्पादनीयमेव त्वदेकं प्रेम।

कुमुदिनी। आं विज्ञातमिदानीं खलु मया-पाषाणे कियदपि जलं पातेत परं नैवार्द्रीभवेत्कदाचित्! कृष्णवर्णं कियतापि क्षीरेण प्रक्षाल्येत परं नैव श्वेतं भविता कदापि! तथैव त्वादृशं कलुषात्मानं कियदपि ज्ञानमुपदिश्येत परं निष्फलमेवेदम्। कलुषात्मन्! नाहमभिलषामि त्वया सममधिकमालपितुम्! अपयाहि सत्वरमितः। अन्यथाऽऽकारयामि यामिकान्।

क्रूरः। न मन्यसे किमु! सुन्दरि!।

कुमुदिनी। मूढ! इयदुपदिश्यमानोऽपि त्वं नावगच्छसि किञ्चिदपि! अतिपश्चात्तापं विधास्यसि स्वमग्रे-इति सम्यगवेहि।

क्रूरः। एवम्!।

कुमुदिनी। आमेवम्! कुरु यत्कर्तुं शक्नोषि!।

जातेयं कुमुदिनीति चन्द्रसिंहः क्रूरसिंहसमरसिंहयोर्द्वन्द्वयुद्धमद्यापि जायत इत्ययथार्थं स्वं-कोट्टपालसाहाय्यार्थमभिमुखागतवान्।

तत्र निजनिर्धारणाया विपरीतमिव वृत्तमवलोकितवानयम्। नृशंसं क्रूरसिंहमधोनिपतितं दृष्ट्वैवाकृष्टवान् हन्तुमेनं क्रुधा स्वचन्द्रहासं चन्द्रसिंहः। ततः कोट्टपालो जगादैनम्–'राजेन्द्र ? धैर्यं धारयतु किञ्चिदत्रभवान्। नृशंसमेनं निघ्नतश्छेदस्य रुधिरबिन्दुरपि निपतेद् भवतः शरीरे तदाऽपवित्रो भविता भवानिति सानुग्रहं चन्द्रहासमर्पयतु मह्यम्। अहमेव छिनद्मि मूर्द्धानमस्येति–' निगद्य स्वहस्तं कृपाणमादातुमुत्थापितवान् समरसिंह। अनर्पयतैव कृपाणमसौ व्याहृतं चन्द्रसिंहेन–'नैव। वीरवर ? शृण्वा तव वचांसि प्रमीदामितरां परं तव हस्तेन नाभिलषामि निहन्तुमेनम्। यदर्थमहं चिरकालं प्रतीक्षमाणः सहस्रकष्टानि सोढवान्, यदर्थञ्च घोरं प्रतिज्ञातवानस्मि; सोऽयं नृशंसोऽद्य पुनर्ममैव पाणिपञ्जरे पतितोऽस्तीति स्वयमेव निजपितृश्वशुरयोर्वैरं शोधयित्वा विश्वासघातस्य प्रतिफलं प्रदायास्मै दुस्तरां स्वप्रतिज्ञातरङ्गिणीमुत्तरामि ' इत्यभिधाय चन्द्रसिंहः स्वहस्तं निहन्तुमेतमुत्तोलितवान्।

परमस्य नराधमस्य प्रलम्बा जीवनरज्जुरिति न हन्तुमिमेव साम्प्रतमैनं परमेश्वरः। अद्यापि तदीयहस्तेन कियन्त्येव घोराणि भवितव्यान्यभूवन् कृत्यानीति कथमिव मिथ्यामेयुस्तानि ? यथैव चन्द्रसिंहस्तदुपरि प्रहारं कर्तुं प्रवृत्तस्तथैव पृष्ठतः प्रियम्वदया साक्रोशमुच्चैर्व्यगादि–'आर्यचन्द्रसिंह ? अये समरसिंह ? सत्वरमागम्यतामिह। न जाने किमिव करोति कुमुदिनीयम् ?' इति। इममाक्रोशशब्दमुपश्रुत्यैव चन्द्रसिंहस्तत्र धावितवान्। अथ क्षणं तदीयाक्रोशध्वनिचिन्तामग्नं कोट्टपालमवलोक्य प्राप्तावसरः शनैर्निजहस्तं विमोच्य क्रूरसिंहोऽयं स्वकटितटाच्छुरिकां निस्सार्य समरसिंहवक्षस्स्थले निखातवान्। अत कोट्टपालोऽयं सहसा निःसंज्ञीभूय निपपात भूतले। उपलभ्यासुमवसरं क्रूरः क्रूरसिंहोऽसौ सपदि कोट्टकुड्यमुल्लङ्घ्य सोत्फालं पलायाञ्चक्रे। ततश्चन्द्रसिंहः कुमुदिनीमुपेत्य तामतिभयाकुलमानसामाकुञ्च्यमाणकरचरणामालुलोके। सद्य एव समीपवर्तिन्याः पुष्करिण्याः शीतलं जलमानीय कुमुदिनीशिरसि न्यषिञ्चच्चन्द्रसिंहः।

कियत्क्षणानन्तरमुपलभ्य चेतनामियं कुमुदिनी यावच्चिमालयति समन्ततस्तावत्तमेव स्वप्राणाधारं संसारसारं विजितमारं राजकुमारं सप्रेमाश्रुधारं निजपरिचर्यापरायणं ददर्श चन्द्रसिंहम्। दृष्ट्वैवाश्चर्यचकितेव प्रेमाश्रुजलं विसृजन्ती स्वनेत्राभ्यामतिप्रेम्णा प्राणप्रियममुं चन्द्रमालिलिङ्ग कुमुदिनी।

किंयत्कालानन्तरं स्मृत्वेव कोट्टपालमाह्वयच्चन्द्र.। अनुपलभ्य प्रत्युत्तरमयं स्वयमेव तदन्तिकमुपगम्य कोट्टपालमिमं मूर्च्छावस्थायां भुवि निपतितमवलोकितवान्। क्रूरसिंहस्यानवलोक्य तत्रासौ निजप्रहरिवीरानुच्चैराहूतवान्। आयातेषु तेषु तत्क्षणमेव कांश्चिद्वीरान् क्रूरान्वेषणाय प्रेषितवान्। इतरांश्च समरसिंहमुपचरितुमादिष्टवान्। अथ कुमुदिनीमुपेत्य प्रोवाच चन्द्रः 'प्रिये ? पाणि[illegible] [illegible] कोट्टाकं प्रहृत्य खलु ? इति।'

'किमयं नराधमः प्रनष्टः किमु कोट्टपालं प्रहृत्य ?' इति पृष्टं कुमुदिन्या। 'आम्। तथैव संवृत्तम्। सपद्येव नृशंसममुमहं कुतोऽपि विचित्य विनाशयिष्यामि लोकादमुष्माद्' इति व्याहृत्य कुमुदिनीं प्रियम्वदाञ्चादाय प्रासादं प्रविवेश चन्द्रसिंहः। तत्र समतीतां दुर्घटनां विचिन्तयन्तः क्षणेनैव त्रयोऽपि ते निद्रयाऽऽश्लिलिङ्गिरे।

समरसिंहं प्रहृत्यापसृतः क्रूरसिंहो द्रुतमदृष्टपृष्ठदेशो निबद्धमुष्टिको विद्रुतवान्। यदासौ विजयनगराद् बहिर्निरगात्तदा किञ्चिदस्य हृदयं शान्तमभूत्। बन्धनालयाच्चि सृतोऽयं चन्द्रसिंह इति निशम्य भृशमाकुलमजनि हृदयममुष्य। स्तोकं दूरमुपगम्य कस्यचिन्महीरुहस्य तले समुपविश्य व्यचिन्तयदसौ-'हन्त ! निष्फलमभूदन्ते विनिर्मितं मे कपटजालम्। महता परिश्रमेण स्वजाले निपातितोऽयं प्रत्यर्थी विनिःसृतोऽत्रुटितकेशाग्रः ! हन्त ! व्याकुलीभवति मे हृदयम्। किंकर्तव्यताविमूढ इवास्म्यहम्। यत्र यत्र दृष्टिं पातयामि तत्र तत्र निराशान्धकारं विना न किमपि दृग्गोचरं भवति मे। न जाने किमिति मदन्तेषु प्रज्वलितो प्रचण्डोऽनलः। (सावेशम्।) रे चन्द्र ! निःसृतोऽसि खलु मम पाणिपञ्जरात् परमन्ते त्वां दुर्गतमेव विधास्यामीति दृढमवगच्छ। क्रूरं सर्पमेनं संत्रास्य न शुभं भविता ते कदापि ?? अये ? कुमुदिन्या सह सानन्दं विहरन्तं त्वामवलोक्य संतप्ये खलु !? परं किं करोमि ! विवशोऽस्मीदानीम्। चन्द्रसिंह, रे चन्द्रसिंह ! जीवतो मम त्वमिह संसारे नैव कदापि कुमुदिन्या समं सुखमुपभोक्तुं शक्ष्यसि। यद्वन्मृगयुर्मृगमन्यं विचेतुं निरन्तरं परिभ्रमति तद्वदयं क्रूरसिंहोऽपि त्वां व्यापादयितुमनाः सततं त्वामनुविचरिष्यति; प्राणसमप्रायं त्वत्प्राणप्रियां कुमुदिनीमप्यपहरिष्यति। (किञ्चिन्मौनमाकलय्य।) चन्द्र ! यदा तवेदं राज्यमखिलं काननीकरिष्यामि[1], त्वदीयराजमन्दिराणि कन्दरीकरिष्यामि, कलेवरञ्च ते शकलीकृत्य वनजन्तुकुलाय वितरिष्यामि; तदानीमेव दन्दह्यमानमिदं हृदयं मे मनाङ्नु शममाकलयिष्यतीति।'

इत्थं विचारतरङ्गैस्तरलहृदये स्थित एवास्य-'संजातोऽयं प्रातःसमयः' इति न विज्ञातममुना। स तु विचारतरङ्गैरेव प्रेङ्खोल्यमानहृदयः स्थितवान्। अरुणोदयः संवृत्तः यदा तदरुणताम्रपिशङ्गैः[2] कर्बुरमौक्तिकिरणावलोपकाशोऽस्य[3] वदनारविन्देन संसृष्टस्तदानीमेव विषादामन्दतन्द्रायाः प्रबुद्धोऽकस्मादुपसृत्य जगादायम् 'किमरुणोदयोऽयं जातः ? आम्, एवमेव प्रतिभाति मे। गुप्तगृहे गन्तव्यमिदानीमितो मया। तत्रोपगम्य कथमयं शत्रुरपराद्धो बन्धनादपादिति सम्यगनुसन्धास्यामि। मदीया वीरभटाः प्रमादं कुर्युरिति न संशेमवैमि। तथापि कथमपसृतो वैरिहतकः ??' इति मनसि विचिन्तयन्नेवायं स्वनिवासस्थानमुपाजगाम। निखिलां रात्रिं प्रजागरेण चन्द्रसिंहस्य चापसरणेनाप्यतीव रोषारुणनयनः प्रतीयतेऽसौ। ईदृशं विकरालं रूपं निरूप्यास्य सैनिकाः किमपि प्रष्टुमपि न शेकुः। चापल्यमवल-

१ काननतुल्यानि करिष्यामि। (अभूततद्भावे च्विः) २ विशदं पीनम्। ३ कर्बुरं मिश्रितम्। ४ प्रभाः।

म्बितुम्। साञ्जलिबन्धमेनं प्रणम्याखिला एकतोऽवतस्थिरे। तानवलोक्य सहसा तारस्वरमवादीत् क्रूर – 'अरेरे ? कारालय गत्वा शीघ्र प्रहरिणमाकारयतु कोऽपि' इति। तत्क्षणमेव पालितोऽय निदेश । क्षणेनैव वीरणैकेन फुल्लसिंहमाहूय सहानीय चोपतस्थे। क्रुधा क्रूरसिंह पृष्टवान् प्रहरिणमेनम्– 'क्वास्ति बन्दीकृत पुरुष ?' इति।

फुल्लसिंह । प्रभो ? बन्धनालय एवास्ति निरुद्धोऽयम्।

क्रूरसिंह । अपि सत्य कथयसि ?।

फुल्लसिंह'। आं प्रभो ? बन्दीकृतोऽयमधुनापि नोत्थितो निद्राया'।

क्रूर । ( स्वगतम्। ) अये ? किमय मरीति ? यन्मया स्वनेत्राभ्यां निरीक्षित तत्सत्यम्, उतास्य कथनम् ? ( प्रकाशम्। ) बन्दीकृतमेन पुरुष सत्वरमुपस्थापय पुरो मे।

फुल्लसिंहस्तु– 'यदाज्ञापयति प्रभु' रित्यभिधाय ततो गत्वा क्षणेनैव बन्दीकृतमादाय तत्सम्मुखमुपस्थितवान्। बन्दीकृतमवलोक्यैव भृशमाश्चर्यचकित सञ्जय सासिंहनादमगादी त्क्रूरसिंह 'अये ? अयन्तु मदन्तिकवर्ती किङ्करत्वेनोपितो रणधीरो वर्तते। रणधीर ? कुत स्त्व कारायाम् ? अह तु त्वामावश्यककार्यार्थं विलासपुर प्राहिणवम् ?' इति।

रणधीरः। किमाह श्रीमान् ? नावगत खलु मया सम्यग् भवदुक्तम्।

क्रूर । पृच्छामि ननु त्वामहम् 'कुतस्त्वमिह कारायामिति ?'।

प्रश्नममुमाकर्ण्य क्षण तूष्णीं स्थित्वा विचिन्तयामास रणवीर 'हन्त ? मरणीयमेवाधुना मया ? अपि प्रकटीभवन्मम रहस्यम् ? भवतु यद् भाव्यम् ? नाह बिभेमि मरणात्। अपि साम्प्रतमेवापहरतु प्राणानय मे क्रूर ?' इति।

यावन्न समाप्नोति रणवीरविचारतरङ्गमाला तावदेव पुनरपृच्छदमु क्रूरसिंह, 'किं रे डिम्भ ? किमिति नाकर्णयसि मम कथनम् ? ब्रूहि कस्त्वम् ? त्व कोऽपि वञ्चकोऽसीति सन्दिहे खल्वहम्। तदुत्तरय सत्वरम्।' इति।

रणवीर'। कोऽहमिति शृणु रे हलाहलपूर्णोदर क्रूरसिंह ? यं त्व निजकिङ्करमवधारयसि नास्त्यसौ तव दासो रणधीर किन्तु त्वदुग्रवैरी महाराजश्रीकेसरीसिंहस्य कनिष्ठराजकुमारो रणवीरो वर्तते।

क्रूर । ( सरोषम्। ) किम् ? रणवीर ? त्वमद्यापि जीवसि किमु ? त्वयैव वञ्चितोऽह ननु ? हन्त ? त्वयैव मोचितोऽय चन्द्रसिंह इति मन्येमि खलु ?

रणधीर । आम्, आम्। मयैव मोचितोऽयमार्यचन्द्रसिंह । नृशस ? कुरु यत्कर्तुमभ्यस्त त्वया ? प्राणिष्यामि यद्यह त्वत्प्राणानपि ग्रहीतु नैव विस्मरिष्यामि।

क्रूरः। रे धूर्त ? नैव प्राणिष्यसि त्वम् ? नैवापरिचितस्त्वमस्य क्रूरसिंहस्य ?।

रणधीरः। नृशस ? सम्यगभिजानामि त्वामहम्।

क्रूरः। यावद्याह प्रतारितोऽस्मि तत्तदीयप्रतिफलत्वेन तवासूनाहरिष्यामि।

रणधीर । तूष्णीभव रे नपुंसक ? मा, मा प्रलपाधुना त्वम् ? अहमपि क्षत्रियकुल

एवासि, नैवाहं बिभेमि कदापि तव विभीषिकायाः ?

क्रूरः । रे क्षत्रियबटो ? लोहशृङ्खलया तव करचरणे नियन्त्रितेऽप्येतावत्त्वमभिमन्यसे ? राज्येन समं विनष्टेऽपि पितरि न कापि परिणतिर्जाता ते मनसि ? ।

रणवीरः । नैव त्रस्यन्ति विपदः कदापि वीरपुरुषाः । पापिष्ठ ? सहस्रशो विदलितमपि हीरकरत्नं यथा नैव परिजहाति निजां रुचिरकान्तिम्; तद्वद्रणवीरोऽप्ययं कियदपि पीड्यमानोऽपि त्वया कर्हिचिदपि नैव त्वामभ्यर्थयिष्यते ! ।

क्रूरः । रे अर्भक ? बालकोऽसि त्वमिदानीमित्यनुकम्प्योऽसि खलु ? परं त्वं तु निजमुखेनैव मरणं दारुणं याचसे ।

रणवीरः । रे आततायिन् ? रणाङ्गणभुवि विचरन्तो वीरवरा यथा कदापि मरणभिया नैव पलायन्ते युद्धस्थलमपास्य; तथैवाहमपि त्वत्तो भीत्वा स्ववैरशोधनं विना न कदापि पृष्ठं दर्शयिष्यामीति सम्यगवेहि ।

क्रूरः । भोः ! त्वद्वचनमंथुक्षिता मत्क्रोधानलज्वाला ज्वलयन्तितरां मम प्रतिरोमाङ्गानि । अलमलं प्रलप्य ? ? सन्नद्धो भव मरणाय ।

अत्रान्तरेऽकस्मादेको भयङ्करो ध्वनिरजायत । ध्वनिसमकालमेव 'क्रूरसिंह ? अधुनाऽतिविलम्बो रणवीरमरणे । नायं मरिष्यति तव हस्तेन ' इति वचनं श्रुतवान् क्रूरसिंहः । इत्युक्त्वैव सहसा शान्तोऽयं ध्वनिः ?

ध्वनिममुमुपश्रुत्यैव चमत्कृतः प्रोवाच क्रूरः– ' अये ? कस्याऽयं ध्वनिः ! रे वीराः ! गत्वा विलोकयत सानुसन्धानम् । वक्तारमिमं निगृह्य मदभ्यर्णमानयत सत्वरम् । ' इत्युदीर्य परितो विलोकितवानयम् ।

वीरा अपि समन्ततो विचेतुमारेभिरे । परं नोपगतमक्षिगोचरं किमपि तेषाम् । तदा कोऽयं भवेद् वक्तेति वदन् क्रूरसिंहोऽनितान्तं क्रुद्धोऽभवत् । तत एवायं रणवीरं ततो नेतुमादिश्य कथितवान् सैनिकान्–' अद्यतनीं रजनीं बालकमेनं निपुणमुपरक्षत यूयम् । श्वः प्रातःकाले देव्या उपहारीकरिष्याम्येनम् । यदा स्वतीक्ष्णतरवारिणा निकृत्यैनमग्निकुण्डे होष्यामि तदानीमेव शान्तिं कलयिष्यति मम स्वान्तम् । गच्छत, नयतैनम् ? ' इति । सैनिका रणवीरं ततो निन्युः । गच्छन्नेव रणवीरः क्रुधा क्रूरं समगादीत्– ' क्रूरसिंह रे नृशंस क्रूरसिंह ! प्रकम्पते धरित्रीयं तव विपुलपापकर्मणा । नालं सोढुमियं तव भारं वसुन्धरा । पश्य पश्य । पशुपक्षिणोऽपि त्वामवलोक्य संत्रस्यन्ति । रे चण्डाल ? नितान्तमेव क्लीबोऽसि त्वमिति मन्येऽहम् । केसरिकिशोरमेनं केवलमेकवारं विमुच्य बन्धनात्पश्य पराक्रममस्य । धिग् ? नेदं सम्भाव्यते त्वयि । मृगेन्द्रबालं पञ्जरे बन्दीकृत्य तु शिशुरपि प्रभवति निहन्तुम्– ' इति । ' नीयतामयं सत्वरमितो दुष्टबाल ' इति कोपाग्नेयेन क्रूरेणाज्ञप्ताः सैनिकाः ।

' धिग् धिक् त्वां क्लीबम् !- ! अन्ततः प्रकृतिमेव प्रतिपन्नः खलु ? न खलु तावकीं त्वद्वैरशोधनं करोम्यहं किन्तु परमेश्वरस्तु करिष्यत्येवेति नियतं जानीहि ।' इत्येतानि वचांसि

श्राविताग्येव क्रूरसिंहं वीरैर्नीयमानेन रणवीरेण। रणवीरस्य रोषमयानि वचांसि निशम्य ततः सहसा निर्गतः क्रूरसिंहः। वीरैश्च स्थापितोऽयं कारायां रणवीरः।

' श्वो रणवीरो निहनिष्यते- ' इत्याकर्ण्य कर्णपरम्परया तदीयप्रियमित्रं मानसिंहो मुक्तगलं विललाप। मुहूर्त्तानन्तरमश्रुमोचनैर्लघूकृत्य निजहृदयमयं रणवीरस्यान्तिमं दर्शनं विधातुं नक्तं बन्धनालयं गन्तुं निर्ययौ।

सम्बन्धित्वेन क्रूरसिंहस्य गच्छन्नयं मानसिंहो बन्धनालये न निवारितः केनापि। एष रणवीराधिष्ठितं कोष्ठमासाद्य बहिः स्थित्वा तमाकारितवान्। मानसिंहशब्दं परिचित्य रणवीरो लोहदण्डजालिकान्तिकमुपेत्य तस्थौ। अमुं विलोक्यैव रोदितुमारब्ध मानसिंहः। तं रुदन्तमालोक्य प्रोवाच रणवीर-' भ्रातर्मानसिंह ? किमिति रुद्यते त्वया ? यस्मिन् काले यद्भाव्यं भवत्येव तत्तदानीम्-इति मा कार्षीः शोकहर्षौ। किमधिकमहं कथयामि बुद्धिमन्तं भवन्तम् ? इति।'

**मानसिंहः।** रणधीर ? प्रिय रणधीर ? किं त्वं गन्तासि मानसिंहमेनं परिहाय लोकान्तरम् ? प्रियबन्धो ? नाहं पारयिष्यामि त्वदृते धारयितुमात्मानमिदानीम्। रणधीर ? किन्तु रचयामि त्वां मोचयितुमुपायम् ? ( इति रोदिति। )।

**रणवीरः।** ( तमाश्वासयन्। ) मानसिंह ? किमिति व्याकुलीभवसि ? मनुजमात्रेण सत्वरं चिरं वैकस्मिन्नहनि मृत्युपरतन्त्रेण भाव्यमेव। भ्रातः ? व्यर्थमिदं जगन्मोहजालम्। सकलं हि जीवजातं निजनिजपूर्वजननकर्मजन्यसंस्कारबलेन सङ्गच्छते परस्परमेकमपरेण जगतीह। सर्वेऽपि वयं संसारकान्तारपथचारिणो हि पथिका स्म। तदपहाय शोकमद्यतनीं रजनीं सानन्दं मया समं वितनोतु वार्ताविनोदं भवान्।

**मानसिंहः।** रणधीर ? त्वदीयज्ञानोपदेशामृतवारिणा शान्तमिव भवति मे हृदयम्। किन्तु नाभिलषामि जगतीह कमप्यन्यं त्वदृते। त्वमेव मे परमप्रियो बन्धुरसि। अये ? बन्धोरपि प्रेयानसि-इति विवशेन जगदिन्द्रजालपरतन्त्रेण भूयते मया। अत एव विगलति चाविरलमश्रुजलबिन्दुधारा विलोचनयुगलान्मे। ( विमृश्य। ) नृशंस क्रूरसिंह ? किं त्वं मदीयमेकमात्रं मित्रं मत्तोऽनु वियोक्ष्यसे ? हन्त ? इत्येव प्रतिभाति मे। रणधीर ? किन्तु प्रपथमेव ते मरणम् ?।

अत्रान्तरेऽकस्मादेव-'नैव, नैव ? ? महान् विलम्बोऽधुना [1]दयितमलङ्कर्तुं रणवीरस्य। ध्रुवमेवायमलङ्करिष्यति।' इत्येवं वदन् कश्चन सम्मुखमागच्छन् ददृशे योगीन्द्रः। आपादमामस्तकमेष काषायाम्बरं परिदधे। पादयोश्चास्य सुन्दरकाष्ठमये पादुके विरेजतुः। कान्तवर्णमस्य वपुः, विशालश्चास्य ललाटे किमपि तेजःपुञ्जमिव वमति स्म। योगीन्द्रोऽयं रणवीराधिष्ठितबन्धनालयप्रकोष्ठस्थलमुपगम्यावतस्थे। एनमवलोक्य मानसिंहरणवीरौ विचिन्तयामासतुः-' अये ? किमिदम् ? सर्वेऽपि मार्गा निरुद्धा वर्तन्ते। पदे पदे प्रहरिणोऽपि

१ प्रियतम,।

सज्जनं विदधति । कथमिहायं योगीन्द्रः केन च कर्मणा समुपस्थित ' इति ।

योगीन्द्रः । ( हस्तमुद्यम्य । ) वत्स ? भद्रं भूयात्तव ? ? ।

रणवीरस्तु– ' परिचिनोम्यहमत्रभवन्तं महानुभावम् । भगवतैव प्रागेकदाऽयं बालो दुरात्मनः क्रूरसिंहस्य पाणिपञ्जरात्परिरक्षितः । स एवायं श्रीमतामर्भकः पुनरपि पापस्य पञ्जरे निपतितोऽस्ति ' इति निगद्यामुं प्रणम्याधोदृष्टिः सन् साञ्जलिस्तदभिमुखं स्थितवान् । मानसिंहोऽपि क्षितितलमिलन्मौलिमण्डलः साष्टाङ्गं प्रणम्य बभाषे योगीन्द्रम्– ' प्रभो ? परित्रायतामयं मे बन्धुर्भगवता । श्वः प्रातरेव निहन्ताऽयं क्रूरेण । दयानिधे ? शरणमयं प्रपन्नः कुमारो भगवताम् । दयालुदेव ? निजशरणमुपादायाभयमस्मै वितरतु श्रीलः । ' इति ।

योगीन्द्रः । मङ्गलमेव कर्ता सकलं सकलेश्वरः प्रभुः । रणवीर ? नाहमभवं पुरा परिरक्षकस्ते । परं ममैव गुरुवर्यो योगेन्द्रनाथोऽभूत्परित्राता ते । तदीयनिदेशेनैवाद्याहमत्र समायातोऽस्मि । नास्म्यहं प्रभुस्त्वां परित्रातुमात्मना; परमेष परमकृपालुः परमेश्वर एव परमेश्वरस्त्वां भयङ्करविपज्जालेभ्यो मोचयितुं रक्षितुञ्चानिशम् । स एव रक्षिष्यति त्वाम् । श्रद्धत्स्व तं श्रद्धास्पदमीशानम् । एष एव त्वामितो मोचयिता । रणवीर ? सज्जीभूय शीघ्रमागच्छ मया समम् ।

रणवीरः । का प्रभो ?

योगीन्द्रस्तु–' बहिर्यन्धनालयाद् ' इति निगद्य कारागृहद्वारमस्पृशत् स्वहस्तेन । तत्क्षणमेव समुन्मुद्रितं द्वारम् । शृङ्खलया निगडितो रणवीरो बहिर्निद्रुत्य योगीन्द्रपादयोरपतत् । एष तमात्मपाणिभ्यामुत्थाप्य बन्धनान्मुमोच । बन्धनान्मुक्ते सति रणवीरे मानसिंहं जगाद योगीन्द्रः ' मानसिंह ? त्वमिदानीं विजयनगरमुपगम्य– ' बन्धनालयान्मुक्तोऽयं रणवीर ' इति चन्द्रसिंहं विज्ञापय । वत्स ? यं त्वं रणधीरनाम्नाऽऽकारयसि नेदं तदीयमभिधानम्; अपि तु ' रणवीर ' इत्यभिधीयतेऽसौ । इतः प्रभृति त्वमपि तत्रैव वासं कुरु । ' इति ।

मानसिंहः । प्रभो ? भगवन्निदेशानुसारमखिलमिममुदन्तं चन्द्रसिंहं विज्ञापयिष्यामि; परं किं मया रणवीरत पृथगेवोषितव्यं स्यात् ?

योगीन्द्रः । आम् । समयं विमृश्यत एवाप्तमसाम्प्रतं सह नेतुं त्वाम् । अधुना कियत्कालं पृथक्तयैव स्थातव्यं रणवीरेण । द्रुतं गच्छ त्वं चन्द्रप्रकाशम् । यतोऽसौ कारानिरुद्धं रणवीरमवधार्य भृशमुद्विग्नमनाः स्यात् ? ।

मानसिंहः । यदादिशन्ति प्रभु ? ? ( रणवीरं प्रति । ) वीर ? गच्छाम्यहम् ।

रणवीर । सुखं गम्यताम् । भ्रातृवराय मदीयं कुशलमावेद्य सर्वकालमत्रस्तदन्तिके निवसतु भवान् । भगवदनुग्रहश्चेदन्यदाऽपि नैवाहमपि त्वां द्रक्ष्यामि । भ्रातुरभ्यर्णे विस्मर्तव्योऽहमस्य कदापि । त्वमेव मदभ्यधिकं स्निह्येः ।

मानसिंहः । प्रियरणवीर ? सत्वरमागच्छ । तव विरहानलदन्दह्यमानहृदयमेनं मानसिंहं

१ ' यवनं तुरुष्काणाम् । इस्नतरः । ' पैहरा ' इति भाषायाम् ।

सपदि साक्षात्कुरु । तव कुशलसमाचारं भ्रात्रे निवेद्य तत्रैवाहं निवत्स्यामि ।

अथ रणवीरमालिङ्ग्य प्रणम्य च योगीन्द्रं निर्गतस्ततो मानसिंहः । प्रयाते तस्मिन् रणवीरमब्रवीद् योगीन्द्रः ' एहि, रणवीर ? साम्प्रतमावां बहिर्निर्गच्छावः । गृहाण छायामादेयश्चैकिश्चित्त्वया ? ' इति । सद्य एव कृपाणमेकं भुशुण्डिकाञ्चैकामादाय योगीन्द्रेण साकमुच्चलितवान् रणवीर । उभावपि वीथिकान्तराणि विलङ्घ्य गुप्तगृहाद् बहिर्निर्गत्य महारण्यवर्त्मना चलितुमारेभाते । अतिदूरमेतौ गच्छन्तौ विकटामटवीमासेदतुः । अथ विरम्य रणवीरमुवाच योगीन्द्रः ' रणवीर ? साधयाम्यहमिदानीम् । सावहितः शृणु मम कथनमिदम्— ' न गन्तव्यं त्वया सम्प्रति भ्रातृसमीपे । प्रच्छन्नं तिष्ठ कियत्कालम् । पुनर्जन्म जातं तवेदमित्यवेहि । '

रणवीर । ( साञ्जलिः । ) कृपालो ? न गम्यतामिह विकटायामटव्यामेकाकिनं मां परिहाय भगवता । किमिदानीं मे भवेत् ? क्वाऽहं व्रजामि ? ।

योगीन्द्रः । रणवीर ? नासि त्वमेकाकी । निरन्तरमन्तर्यामी प्रभुस्तिष्ठति त्वया सदैव । किं त्वया विधेयमिति परमात्मैवायं त्वदात्मानं प्रेरयिष्यति । गच्छ श्रेष्ठं तव भाव्यम् । गच्छता कालेन महानभ्युदयो भविष्यति ते । तव हस्तेनैवायं दुरात्मा क्रूरसिंहो विनङ्क्ष्यते । श्रेयस्तनोतु भगवानखिलेश्वरस्ते, विजयस्व सदा ' । [ इत्यभिधाय यावन्नेत्रे निमील्य पुनरुन्मील्यैते तावदेवान्तर्दधे योगीन्द्र । ] कुत्रासौ गतवानिति नावेदि रणवीरेण । योगीन्द्रतिरोधानानन्तरमेकाकी भूत्वा रणवीर ' निषिद्धोऽस्म्यहं योगीन्द्रेण भ्रातुरन्तिकं गन्तुं तत्कुत्राधुना गन्तव्यं मयेति ' मुहूर्तं विचिन्त्यान्यतमेनारण्यवर्त्मना समुच्चलितुमुपचक्रमे ॥

॥ * ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ प्रकृतिसौन्दर्यसोदर्ये कुमुदिनीचन्द्रे अष्टमी कला ॥ * ॥

---

# अथ नवमी कला ।

---

" भवति हृदयहारी कापि कस्यापि कश्चिन्
न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयति वनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः । ( नलचम्पूः । )
" आकारं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ? । "

( पञ्चतन्त्रके )

" गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः। "

( कविवरो भवभूतिः )

" पदं हि सर्वत्र गुणैर्निधीयते। " ( कविरत्नं कालिदासः )

* राजकुमारोऽयं रणवीरो वनाद् वनान्तरं विचरन्नेव कस्यचिन्नगरस्य विशालमुपशल्यमाससाद। अथ नयनगोचरमुपेतमस्याऽतिरमणीयानेकालोकैद्धानिरुद्धपरिवलयितं मन्दमन्दानिलान्दोलितवल्लितलतामफुल्लपुष्पवल्लभलालितं चलन्मैल्लोलज्जहरीरचिरसरोवरविराजितं महीरुहपल्लोलमहार्थैकलोदशितचारुचन्द्रकचालिकलापिकुलसुन्दरमन्वमरावतीवीरमतिरुचिरमेकमतिविशालमुद्यानम्। अमूदिदमतिमनोहरमुद्यानमभिनिर्मितममरकण्टकाधिपतिना महाराजश्रीरणजितसिंहनरेन्द्रचूडामणिना। तत्परिसरे सकलकलं निनदन्ती दन्तीन्द्रवृन्दविमण्डिततटा तद्वनिरुद्धनिकररुचिरा चिरार्जिततपोधनतपस्विपुङ्गवविरचितपर्णकुटीरमण्डलविराजिता निर्वाक्षमुनिवृन्दलसिता सिताब्जच्छदविविधहृदयङ्गमकूजितविहङ्गमगणमन्दिता ततानेकप्रवरोत्तुङ्गतरङ्गतरंगभङ्गा गङ्गामुपहसन्तीवामराङ्गनोपभुक्तकूलकुञ्जा अमरावतीनाम्नी तरङ्गिणी प्रवहति। उद्यानेऽस्मिन् विविधदेशान्तरानीता नानाजातीया मधुरपरिमलाकृष्टपरिभ्रमद्भ्रमरझङ्कारझङ्कृताः प्रतिवृक्षमन्तरान्तरा संरोपिताः क्षुपैलयः। इदमुद्यानं मनो हरतितरां चक्षुरुन्नतामनवरतम्। अतिरमणीयेऽस्मिन्नीदृशे विशालोद्याने प्रविवेश रणवीरः। अथैष तदन्तर्वर्तिनः सुन्दरारविन्दमरन्दपानगुञ्जन्मिलिन्दवृन्दकलेन्दिरासुन्दरीगानविडम्बनशालिनः कलहंसकुलमन्दिरकारिणः सरोवरस्य निर्मलसलिलेन निजहस्तमुखपदानि प्रक्षाल्य निश्चिन्तमना माकन्दमहीरुहतले मुहूर्तं शयितुं पर्यलुठत्। अतिदीर्घाध्वगमनश्रमक्लान्ततया रात्रेश्च प्रजागरत्वेनापि शीतलमन्दसमीरणेन वीज्यमानोऽयं क्षणेनैव निद्रापरवशो बभूव।

निद्राणे तस्मिन्मुहूर्तानन्तरमेव स्वसमवयोरूपगुणशालिनीभिः प्रियतमसखीभिरनुगम्यमाना महाराजश्रीरणजितसिंहनरेन्द्रनन्दिनी रत्नप्रभा नाम राजकन्या कलहंसगत्या मन्दमन्दं चलन्ती रतिप्रतिकृतिरिवापरा युवजनमनोनयनहारिणी प्रविष्टवती सुन्दरमिदमुद्यानम्।

आसीदतिप्रियलेयं रत्नप्रभा। पञ्चदशवर्षमिव स्पृशन्तीयं वयसा लक्ष्यते। यथेयं बहिः सर्वाकारहृदयङ्गमा प्रतीयते तथैवाभ्यन्तरेऽपि सुन्दररमणीरत्नानुगुणगुणशालिनीयमिति सद्य एवावगम्येत प्रेक्षकवरैः। स्ववयस्याभिः सममियमुद्याने पर्यटन्ती कस्यचन महीरुहस्याभिमुखमङ्गुल्या नवमालिकां दर्शयन्ती सखीमाबभाषे–' सखि मालति! पश्य–सेयं लता वृक्षस्कन्धमालिङ्गन्ती कियती मनोहरा विभातितराम्?' इति।

मालती। ( सपरिहासम्। ) सत्यमाह–सखि! कियत्कालानन्तरमधुना त्वमपि एतेव

१ ' प्रमान्त उपशल्यं स्याद्ग्रामान्तरः '। २ अनोकहनिवहो वृक्षसमूहः। ३ चाडुचञ्चलतरङ्गः। ४ तरसलता हृदयङ्गमम्। ५ कलापिकुलं मयूरवृन्दम्। ६ प्रान्ते। ७ दन्ती गजः। ८ निराशो जितेन्द्रियः। ९ श्वेता। १० स्खलत्प्रमत्ता चलत्तरङ्गा। ११ क्षुपा लघुशाखाः। ' ह्रस्वशाखाशिफः क्षुपः '। १२ मिलिन्दो भ्रमरः। १३ इन्दिरा लक्ष्मीः। १४ माकन्दः आम्रः।

निजहृदयेश्वरमालिङ्गितुं भाग्यशालिनी भविष्यसि । ततस्त्वमपीदृश्येव मनोहरा प्रतिभास्यसि ।

रत्नप्रभा । हला मालति ! सहस्रशो नु कथितं मया यत्कदापि मया सह न करणीया परिहासकेलिः किन्तु न परिजहास्येवाऽमप्रकृतिम् । अहन्तु सहजमेवेमां लतामालोक्य कथितवती । ततस्त्वं किमिति विपरीतमिवार्थमीदृशं कुरुषे ?।

मालती । ( विहस्य । ) आम्, प्रियसखि ! विपरीतमेवार्थं करोम्यहम् । द्रक्ष्यामि यदा त्वं परिणेष्यसि तदा स्वप्राणनाथमालिङ्गिष्यामि नवेति खलु !। प्रातःकालमखिलं ते दर्शयिष्यामि !।

रत्नप्रभा । पश्य–पुनरिदानीमियमेव नु वार्ता !! अलमलं परिहासगिरा !। एहि, रमणीयपुष्पहारमेकं विरचयावः ।

मालती । आम् । तदनेन सुन्दरपुष्पहारेण कस्य नु कण्ठोऽलङ्कर्तुं निर्धार्यते त्वया ! न खलु कश्चिद् विलासी ललितयुवक इतः प्रभृत्येव स्वहृदयमन्दिरे प्रतिष्ठापितः !।

रत्नप्रभा । अलमलं प्रलप्य धार्ष्टूके ! किमिदं नु मुहुर्मुहुः ! इत्यभिधाय मालत्या गृहीतं निजकरपल्लवं विमोच्याग्रतः प्रस्थिता । तामनु मालत्यपि विहसन्त्येव चलिता । अत्रान्तरेऽपरैका सखी धावमाना तत्रोपगम्य राजकुमारीं कथितवती– ' सखि सखि !'

रत्नप्रभा । किम् ? किमस्ति सरले ?।

सरला । हला रत्नप्रभे ! आदेशं विनाऽस्मदुद्याने समुपेत्य शयितोऽस्ति कश्चित्पुरुषः । गाढं निद्राणोऽयमिदानीम् । सखि ! अतिमनोहरं रूपमस्य ।

मालती । आ एवं किमु ! अतिसुन्दरोऽसौ किमु ! अयि सरले ! न खलु मुग्धाऽसि तदा सुन्दरमेनमवलोक्य ? यद्यमियान् सुन्दरोऽस्ति तत्किमिति ततः परावृत्य त्वमिह समायाता ! तत्रैव तदन्तिकमेव स्थातव्यमासीत्तनु ! किं सत्यं न्वेतत्–सखि !' इति निगद्य रत्नप्रभाभिमुखमालोक्य हसितवती ।

रत्नप्रभा । मालति ! त्वमीदृश्येव ननु स्थिताऽसि !! साधारणेऽपि वृत्ते सरलहृदयां सरलामिमां कियन्मात्रमुपहससि ! ( सखीगणं प्रति । ) आगच्छत, वयस्याः ! कोऽयमिति तत्र गत्वाऽनुसंदध्मो वयम् ।

मालती । सखि ! पश्य पश्य ननु !! अनुसंधातुं गमिष्यन्ती न जातु त्वमेव प्रणयमूढा भवेः ! अन्यथा दुष्करमिह भविष्यति नः !!।

' अपि समायास्यसि जल्पनं विहाय त्वमिदानीम् ?' इति मालतीमुक्त्वा सखीगणेन समं यत्र निद्राणोऽभूद् रणवीरस्तत्स्थलमुपससार रत्नप्रभा ।

अथ निद्राणं रणवीरं ददृशुरखिलाः सुन्दर्यः । रत्नप्रभा तु तदीयं कन्दर्पप्रतिरूपमप्रतिमं लावण्यं निर्वर्ण्यैवाकस्मान्मुमोहातितराम् । विचिन्तितवती चान्तःकरणे– ' अहो ! कोऽयं

१ केलिः क्रीडा । २ प्रकृतिः स्वभावः । ३ ' वावदूकोऽतिवक्तरि ' इत्यमरः । ४ कामदेवसदृशम् । ५ अतुलम् । ६ विलोक्य ।

नु स्यात्पुरुषः ? साक्षाद् रवीश्वरस्तु नैवागततोऽयमिह नु ? सताहो, मानवरूपधारी कोऽपि देवकुमारस्तु नावतीर्णः खलु ? अहो ? कियन्मनोहरमस्य दर्शनम् ? कीदृक् तेजःपुञ्जशालि विलोक्यते वदनाम्बुजमस्य ? अहह ? अवलोक्यैवैनं कोऽपि महामोहगम्भीरो मन्थरयति विकारोऽन्तःकरणं मे। विद्धमिव केनापि मम हृदयम्। निकृन्तति मूर्दां हृन्मर्मस्थलमिव कोऽपि मे। अये ? किन्तु बालब्रह्मचारी भवेदयम् ? भवतु कोऽपि। परमयं परमसौन्दर्यशाली कोऽप्यपूर्वे हि निदर्शने युवा विश्वकर्मणः शिल्पैवाया इति प्रत्येमि। सुष्ठु स्याद्यदि प्रबुध्येदयमिदानीम्' इति।

इत्थं विचिन्तयन्ती सुप्तेव, जडीकृतेव, काष्ठपुत्रिकेव निश्चलं निभालयन्ती स्थिता रणवीरमिमं रत्नप्रभा। राजदुहितुरीदर्शी विचित्रां दशामालोक्य न पारितं निरोद्धुमन्तःकरणं मालत्या। इति सहासं राजकन्यायाः कराम्बुजमादाय स्वहस्ते प्रोक्तमनया-' किं नु सखि ? इयतैवावधिना विमूढेयमीदृशी जाता किमु त्वम् ? सखि ? आदेशश्चेत् प्रबोधयाम्यहं युवकमेनम् ? ' इति। मालत्या वचनेन चमत्कृत्य रत्नप्रभा मिन्दाक्षेणाधोमुखं निभालयाम्बभूव। पुनरपि समभाषत मालती- ' सखि ? किन्तु लज्जसे त्वमेवम् ?। '

रत्नप्रभा। शृणु-प्रियसखि मालति ?

" यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दसान्द्रममृतप्लवनादिवाऽभूत्।

तत्सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते॥ "

(मालतीमाधवे।)

मालती। अयि प्रणयमुग्धे हला रत्नप्रभे ? किमिति व्याकुलीभवस्येवम् ? कियत्कालकला धैर्यमाकलय हृदि। शीघ्रमिदानीं तव परिणयकौतुकं भविता। तदा त्वदीयहृदयवल्लभस्त्वामुपेत्य विविधैराहारविहारनर्मशर्मविलासैः सुखयिता; प्रणयपाठञ्च पाठयिता ? अप्यवगतं बुद्धिमत्या ?।

रत्नप्रभा। मालति अयि मालति ? मनसस्खेऽदयं परिहासो ननु जायते। परमाकुलीभवन्ति मदीयप्राणाः। व्यथते हृदयं ताम्यति च मनो मे।

मालती। मोत्ताम्य सखि ? भवेयुरिमे प्रेम्णो विलासा ननु ? आम् ! स्यादयं तव हृदयमन्दिरे कन्दर्पदेवस्य प्रस्थानमङ्गलमयसमयसूचको दुन्दुभिनादः खलु ? ? तन्मा व्यथिष्ठाः, सखि ? प्रातःकालमवगम्येव सकलमिदं त्वया।

रत्नप्रभा। मालति ? एषाऽहं निपतामि त्वत्पदाम्बुजयोः। परित्यज्यतामयं परिहासो मे। ज्वलन्तीमिमां ज्वलयन्ती किमिति हृष्यसि त्वम् ? कुरुष्व यथारुचि त्वमधुना। (सहचरीगणं प्रति।) आगच्छत-प्रियवयस्याः ? साम्प्रतमितो गच्छामो वयम्। इत्युदीर्य तवश्चलितुमारेभे। चलितामिमामवरुध्य पुनरपि गदितवती मालती ' तिष्ठ, सखि ? तिष्ठ।

---

१ जडयति। २ प्रभुणः। ३ कौशलस्य। ४ विवाहमङ्गलम्। 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले ' इति यादवः।

न लप्स्यते पुनरीदृशोऽवसरस्त्वयेति निरीक्षणीयाऽनिमेषलोचनाभ्यां मूर्तिरियमिति ।'

अस्या वचनस्य प्रतिवचनमदत्त्वैव प्रस्थिता रत्नप्रभा । सहचरीसमूहोऽपि तामनुचचाल । सरोवरसमीपमुपगम्यावतस्थिरे सकला इमा सहचर्यं । क्षणान्तरमिमा अखिला अपि वयस्या पुष्पाण्यवचेतु जग्मु । पुष्पावचयं कुर्वाणा इमा सुदूरं निर्गता । साम्प्रतमेकाकिनी संवृत्ता रत्नप्रभेति पुनरपीयं निद्राणं रणवीरमवलोकयितु मतिं कृतवती । 'दूरं निर्गताः सर्वा सहचर्य । तदेन शुभमवसरमुपलभ्य पुनरेकदाऽहं स्वमनोहारिणं मनोहारिणममुं साक्षात्कुर्त्यागच्छामि ' इति विचिन्त्यैव रत्नप्रभा यत्र प्रसुप्तवान् रणवीरस्तत्रोच्चलितुमारब्ध ।

इतस्तु शयानोऽयं रणवीरस्तन्नयनयोरुपरि रविकिरणावलीप्रकाशपतनेन प्रबुध्य नगरं गन्तु यावद् विचिन्तयति तावदेव कलहंसगत्या मन्दमन्दं तत्रोपस्थितवती राजनन्दिनी रत्नप्रभा । उन्निद्राणममुमवलोक्य मनसि निजसाहसं विनिन्दन्ती पश्चात्तप्यमानमानसा निश्चलं भूतलं विलोकयन्तीयमधोमुखी स्थितवती तत्र चन्द्रमुखी । तामवलोक्यैव रणवीरोऽपि विस्मयाकुलमानसोऽभवत् । निरीक्ष्य चास्या वदनारविन्दं मनस्येव तदीयसौन्दर्यं प्रशशसायम् ' अहो ! उद्यानेऽस्मिन् कुत इयं देवाङ्गना ? मा मैवम् ? देवाङ्गना तु देवमन्दिरे तिष्ठति खलु ? किं तदेयं कापि पद्मिनी स्यादाहोस्विद् विश्वामित्रराजर्षिमनोमोहिनी मेनकेयं किमु ? अहो ? कियन्मनोहारि रूपमस्या ! तथाहि

' इन्दो सौन्दर्यमास्यं कलयति कमलस्पार्धिनी नेत्रपत्रे
कालिन्द्या कुन्तलाली तुलयति विभवं भव्यमङ्गैस्तरङ्गै ।
अस्या किं श्लाघ्यतेऽन्यत्सुभगगुणनिधे काप्यपूर्वैव यस्या
पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी यौवनश्री ॥ ' ( नलचम्पू )

अये ! परं कथमहमेनां पृच्छामि— ' का त्वमिति ? '

अत्रान्तरे— एव लज्जां विजित्य रणवीरान्तिकमुपेत्य ससाहसं पृष्टं रत्नप्रभया— ' को नु श्रीमान् ? विना निदेशं कथमिदमुद्यानं प्रविष्टो भवान् ? ' इति ।

रणवीरः । ( स्वगतम् । ) अपक्रान्तमनया मार्गण खलु[1] अहो ? कीदृशी आपणभङ्गी विषयतेऽस्या । ( प्रकाशम् । ) पथिकोऽस्म्यहं—[2]बालु ! कश्चन । ' रणवीर ' इति मदभिधानम् । क्षत्रियपुत्रोऽस्म्यहम् । मार्गेऽस्मिन्नगरगमनादिदमुद्यानमवलोकयितुमनाभ्यन्तरं प्रविष्टोऽहम् । अपीदानीमात्मानमभिशापयिष्यति भगवती ? ।

रत्नप्रभा । भद्रम्यप्रतापशालिमहाराजश्रीरणजितसिंहनरेन्द्रनन्दिनी मामवगच्छतु श्रीमान् । रत्नप्रभेति नाम्ना प्रख्यातास्मि । अस्मन्निदेशोऽत्र भवान् प्रविष्टयानुद्यानमिदमिति लौमशासनेन दण्ड्यो भवान् ।

रणवीर । अपि दण्डनीयोऽहम् ? ।

रत्ननप्रभा । आम्, दण्डनीयः । अतीवतीव दण्डनीय खलु भवान् ? !

---

1 प्रबुद्धम् । 2 बालु-बाले ? । 3 दण्डार्ह ।

रणवीर । ( दीनवदन इवारम्य ) यथाभिरोचितं श्रीमत्या । नरेन्द्रनन्दिनी खलु भगवतीति सानुग्रहं भगवत्येव नैव क्षन्तव्योऽयं दास किमु ? । अन्यैव चेद्भवत्या खलु दुष्कृतं स्यादयम् ।

रत्नप्रभा । वरम् । परं किन्तु प्रत्युपकर्ता श्रीमान् ? ।

रणवीर । अकिञ्चनोऽहं सम्प्रति किमिव प्रभुः प्रत्युपकर्तुं राजकुमार्याः श्रीमत्याः । परमेश्वर एव प्रत्युपकरिष्यति तवास्योपकारस्य ।

रत्नप्रभा । अहो, अहो ! ? परमसरसमधुरेयं भवदीयभाषणशैली ? । मधुरमधुरैरेव नोपन्यासैर्नं खलु क्रियतामात्मसमोचनाशा श्रीमता ।

रणवीर । नरेन्द्रनन्दिनि ! किन्तु तदा बन्दीकर्तुं निर्धारितोऽहमत्र त्वया ? ।

रत्नप्रभा । आम्, इदमत्र निर्धारितं मया ।

रणवीर । ( सोद्वेगम् । ) अपि सत्यं कथयसि ? राजकुमारि ! किन्तु तादृशं मयापराद्धं ते यदियदुग्रं दण्डयितुं विचिन्तितं भवत्या ? ।

रत्नप्रभा । महच्चौर्यं कृतं खलु भवता ? ?

रणवीर । ( साश्चर्यम् । ) किम् ? चौर्यं कृतं मया किमु ? ।

रत्नप्रभा । आम् । चौरिका कृता भवता ।

रणवीर । राजकन्ये ? किमिदमुच्यते त्वया ? अपि कथयिष्यसि मा— ' किं मयाऽपहृतं ते ? ' इति ।

रत्नप्रभा । ( विहस्य । ) हृदयं मे ? ? ?

रणवीर । ( स्वगतम् । ) अये ? अतिमात्रं विप्रलब्धोऽहमनया । ( प्रकाशम् । ) एवं किमु ? आम् । अवगतं मयाधुना । तदेव विशदं ब्रूहि । येन साक्षरमवगम्येत । राजनन्दिनि ? त्वमपि सुतरां चतुरासि मन्ये । नैव नैव ? ? नैवेदं कृतमेव मया ? ।

रत्नप्रभा । कथं नैव ? गुप्तस्थले स्थापितमिदं भवता ।

रणवीर । तत्किमिति सम्यङ् नैव रक्षितमिदं भवत्या ? ।

रत्नप्रभा । कथं नु रक्ष्यते ? कितव ! प्रतारिताऽहं खलु त्वया ।

रणवीर । एवं किमु ? तदा त्वमपि काचिन्मायाविनीति शङ्के ? ? अये ? मदीयमपि हृदयं नास्ति सम्प्रति मदन्तिकमिति त्वयैव हृतमिति प्रत्येमि ।

रत्नप्रभा । धन्योऽसि—भ्रमितकुमार ? स्वयं तस्करः इति त्वमपरामपि तस्करं मन्यसे किमु ? नूनमिव तु— ' स्वयं चौरः कोट्टपालं दण्डयती ' ति युक्तिरायोजिता भवता ।

रणवीर । रत्नप्रभे ? प्रभु हृदि निधाय ब्रवीमि यत्त्वयैवापहृतमिदं मे हृदयम् । त्वम् विधुरा तस्करिणी धूर्ता रिपु वा तादृशयामि ।

रत्नप्रभा । भद्र वद ? ! तमयोरव आतोऽयं खलु निर्णय । उभावप्यावां तस्करौ ।

---

१ दरिद्र ।

वीरपुत्र ? अप्यनुकम्पिष्यतेऽभ्यर्थनामङ्गीकृत्याकिञ्चना दासीयं श्रीमता ?।

रणवीरः। अये ? किमेवमुदीर्यते ? त्वदर्थं प्राणानप्यर्पयितुमुद्यतोऽस्मि दासोऽयम्।

रत्नप्रभा। तर्हिमां रत्नप्रभां स्वहृदयमन्दिरे निवेशयतु श्रीमान् ।

रणवीरः। अये ? प्रागेव निवेशनात्त्वयमेव प्रविष्टाऽसि चिरात्त्वं मदीयमनोमन्दिरे। यातु ? समर्प्य स्वस्नेहमसौ कृतार्थितोऽयं जन इति नासौ विस्मरिष्यति भवदुपकारममुम्। गन्तुमनुमन्यस्व मामिदानीम् ।

रत्नप्रभा। किमु ? क जिगमिषति भवान् ? चन्द्रं विमुच्य क्षणमपि दूरे निवसेत्तु चकोराङ्गना ? जलं विहाय क्षणमपि जीवति किमु मीनः ? हृदयेश्वर ? क्षणं विरम्यताम्। यास्यते परतः। किमित्येव त्वर्यते ? ( इत्यभिधाय रणवीरस्य पाणिपङ्कजं जग्राह रत्नप्रभा। )

रणवीरः। ( हस्तं विमोच्य ) राजपुत्रि ? विमृश त्वं प्रागमुना प्रवासिना सममात्मानं प्रेमपाशेन निगडयन्ती; नानुतप्येत येन पुनस्त्वया ।

रत्नप्रभा। समुचितमेव भूतं यदेव जातम्। नास्ति किमपि पश्चात्तप्तुमिह ।

रणवीरः। तद् भद्रमभूद् भद्रे ? अनुजानीहि मामिदानीं गमनाय। कश्चिदितः समायास्यति चेल्लज्जितव्यं स्यादावाभ्याम् ।

रत्नप्रभा। नाथ ? भवतो वियुज्यमानाया एतस्या मनसि न जाने किमिव जायते ? प्राणवल्लभ ? नाहमनुमंस्ये कदापि भवद्गमनमनुमोदितुं निजरसनाम् ।

" तदयं बन्दीकृत्य निजहृदयमन्दिरे निरुध्यतां यतो नैव निःसरेदयं कदापि त्वदन्तिकाद् " इति व्याहरन्ती पृष्ठदेशान्मालती सम्मुखमागता। मालतीमवलोक्य लज्जया मनाङ्नतमुखीयं संवृत्ता चन्द्रमुखी। रणवीरस्ततः संभ्रान्तचित्तो भूत्वा गन्तुं प्रावर्तत। गच्छन्तममुमालोक्य पुरो भूत्वा निरुध्य समभाषत मालती–' कुमार ? त्वमपीदृङ् निर्दयो भविष्यसीति नावाधारयं खल्वहम् ' इति ।

रणवीरः। ( ससंभ्रमम्। ) अनुजानीहि मामिदानीं गन्तुम्।

मालती। वीरकुमार ? मा स्म व्याकुलीभू। मदीयसखीहृदयमपहृत्येदृशे सान्द्रारण्ये निराश्रयामिमामेकाकिनीं परिहाय गन्तव्यं किमु भवता ? स्थीयताम्, विसर्जयाम्यहमुभावपि वाम् ? ? अथ रत्नप्रभाभिमुखमालोक्य कथितवतीयम्–' किं प्रियसखि ? किं विचिन्त्यते ? अपि जिगमिषति कुमारेणामुना समम् ? ' इति ।

रत्नप्रभा। (सकपटकोपम्।) मालति ? निर्मर्यादं मनोऽपि खलु त्वम् ? नाहमिदानीं शुश्रूषे तव वचः। ब्रूहि, यदेव वक्तुं वाञ्छसि ? नाहं किमपि वेद्मि विषयेऽत्र ? राजकुमारमेनमपि नाहमभिजानामि ? ब्रूहि किं वदसि ?।

मालती। आम्–सखि ? कथमिवाभिजानासि ? मिथः प्रेमसंवादो जायेत चेदभिज्ञापेत तदानीम् ?।

रत्नप्रभा । अये ! विदिताखिलवृत्तान्तासि त्वमिति प्रत्येमि ।

मालती । प्रियसखि ! यदा त्वमेकाकिनी कुमारमभिप्रस्थिता तदा त्वां विना न पारितमवस्थातुं मालत्यानया-द्वितीयमपि त्वामन्वेषमाणा इव आगम्यात्रैव समीपभुवि निलीय युवयोः प्रेमसंवादमाकर्णयत् । त्वया राजपुत्रायास्मै समर्पितं स्वप्रेमेति विज्ञाय प्रसीदामितरामहम् । सखि ! तवान्तरङ्गवयस्याऽस्म्यहं खलु ! क्षणं विनोदमपि कुर्याम् ? । तन्मत्तस्त्वया न लज्जनीयं खलु ? ? ।

रत्नप्रभा । सखि ! त्वन्तु प्राणाधिकप्रिया मे सखीति किं नाम गोपनीयं त्वत्तो मया ! शृणु, प्रियसखि ! अर्पितं मया स्वप्रेम राजकुमारायास्मै । मनसा वचसापि तेन सममहं प्रणयपणेन निबद्धाऽस्मि । इतःप्रभृति प्राणेश्वरोऽयं मे; अहमपि तदीयाऽस्मि प्राणेश्वरी । हला मालति ! किमनुमंस्यते मां तातः ? ।

मालती । सखि ! यस्मिन् काले यद् भाव्यं तद् स्वत एव सम्पद्यते । यदेवाद्युपपन्नमखिलं ते तदिदानीं तातचरणान्तिकात् किमर्थमाशङ्कनीयं त्वया ! भद्रमेव स्यात्तु सकलम् ! तन्मा चिन्तय ! । वरं सखि ? अनन्यसाधारणसौन्दर्यशाली कोऽयं कुमारः ! कस्यां वा पुरि वसन् पुरन्ध्रीणां लोचनानन्दममन्दं कुरुतेतरामसौ ! इति विदितमखिलं नु त्वया सम्यक् ? ।

रत्नप्रभा । अयमेकः सत्यवादी वीरनरः क्षत्रियकुमारोऽस्तीत्येव जानाम्यहम् । नान्यद् वेद्मि किमपि ? ।

मालती । नासीदालम्बनीयमीदृशं धार्ष्ट्यं त्वया । सखि ! पूर्णपरिचयं विना नाभूदर्पणीयमात्मनो निखिलं प्रेमास्मै । कदाचिदयं राजकुमारस्त्वां न कामयेत यदि ? ।

रत्नप्रभा । नेदं संभाव्यतेऽत्रभवति कदापि । मम मनसि तदीयं सत्त्वं प्रेमादिकं यदि कथमिव तर्हि तदीयहृदये न स्यान्मदीयं हार्दममलम् ? ? सखि ! सम्प्रति स एव मम हृदयेश्वरः । स एव मत्प्राणावलम्बनम् । हला मालति ! अतिमात्रमुत्कण्ठितमिदानीं हृदयमिदं मे प्राप्तुमेनम् । तस्यैवाधुना पवित्रनाममात्रं जपामि ।

मालती । धैर्यमाधेहि सखि ! धैर्यमाधेहि । मा त्वरस्व । प्रफुल्लयिष्यति त्वदाशानवमालिकां सच्छेखरः सच्चिदानन्दकन्दविभुप्रभुः । ( रणवीरं प्रति । ) राजकुमार ! क्षम्यतामयमविनयाचारः । निजवृत्तेनाखिलेनास्मानभिज्ञापयिष्यति श्रीमानित्याशास्यते ।

रणवीरः । आर्यमालिके ! इदानीं केवलमहमिदमेव निवेदयामि भवतीभ्याम्- 'मन्त्रिदुर्गाधिपतेर्महाराजधीरकेसरीसिंहमहीपतेरस्य कनिष्ठराजनन्दनो रणवीरनामास्म्यहमिति ।' श्रीमत्यौ गुणगणशालिन्यौ बुद्धिमत्यौ चेति निवेदयामि- 'सानुग्रहं वृत्तमिदं मे किञ्चित्कालं न प्रकाशनीयं भवतीभ्यामिति ।' प्रत्युपकारमहमासनैवाधिगमिष्यामि ।

मालती । ( सविस्मयम् । ) किं महाराजधीरकेसरीसिंहनरेन्द्रस्य कनीयान् कुमारः

१ कुन्दलतिका । २ प्रेमप्रतिज्ञया । ३ [illegible] । ४ 'प्रेमा ना प्रियता हार्दम्' ।

श्रीरणवीरसिंह. किमु श्रीमान् ? अहो ? विलक्षणा गतिस्ते प्रभो ? सखि रत्नप्रभे ? सफलितं तव जनु. । अभ्युदितं तव [1]भाग्यरविणा । नूनम्, मानवरत्नयोर्युवयोर्योग्यसमागमेन फलितोऽयं ब्रह्मणो निर्माणशिल्पश्रमः । भद्रं तनोतु सर्वदा सच्चिदानन्दविभु प्रभुः।

राजपुत्री तु रणवीरसिंहनामश्रवणसमकालमेव परमानन्दसागरे निमग्ना ।

**रणवीर** । नरेन्द्रनन्दिनि ? अप्यनुमन्येत गमनमिदानीं मे ? !

राजकन्यया न दत्तमस्मै किमप्युत्तरम् । तस्मिन्नेवावसरे बन्दिवृन्दारकवृन्दवदनारविन्दनिर्गतवन्दनामयगीतरवगम्भीरो नरेन्द्रप्रस्थानमङ्गलसूचकः कोऽपि दुन्दुभिनादो दिगन्तदन्तावलकर्णकुहरभेदक· समश्रूयत ।

समाकर्ण्य सहसाऽब्रवीन्मालती-- ' हला रत्नप्रभे ? प्रस्थितो नु तातः ' इति ।

**रत्नप्रभा** । किमिदानीं करणीयम् ? ।

मालती तु- ' किमिति संभ्रान्ताऽसि-सखि ? एहि । उद्यानस्यास्य पृष्ठद्वारे यत्रास्मदीया निखिला वयस्या पुष्पाण्यवचिन्वन्ति तत्रोपगम्य ताभि. सममावां बहिर्निर्गच्छाव । ' इत्यभिधाय रत्नप्रभाया. पाणिपङ्कजमादाय चलितुमारेभे । मुहूर्तेनैव नमितनिखिलमण्डलेश्वरमौलिमण्डलो महीमण्डलाखण्डलो महाराजश्रीरणजितसिंहनरेन्द्रोऽपि सुन्दरमिदमुद्यानं प्रविवेश ।

निपतन्ति यदा हि मनुजशिरसि विपत्तिपर्वतपरम्परास्तदाऽयमतिमात्रमुद्विजते, व्याकुलीभवति मनःसंतापमनुभवति भवति च किंकर्तव्यताविमूढ । विपत्तौ धैर्यमालम्बमाना विरला हि भवन्ति पुरुषाः ? निर्कम्पायमाणा हि विपदियं वर्तते निखिलनृणाम् ।सङ्कटैर्मुहुर्मुहुराहन्यमाना ह्यन्ते सन्मार्गमाश्रयन्ति मानवा । स्मरन्ति चाखिलेश्वरं तदानीमेव । तन्मनुजमात्रेणैव सम्मुखमापतदापज्जालं धैर्येणैवाधाकरणीयमनिशम् । उद्भवति चादौ दु.खं परमन्तत सुखमेवोपनमति । यथा खलु रजनेरनन्तरं दिनं दिनानन्तरं रजनी क्रमश आयाति याति च तद्वदेव जगतीह सुखानन्तरं दु.खं दुःखानन्तरं सुखं चक्रनेमिक्रमेणोपयाति मनुजसविधे । नात्र ससृतौ कोऽपि सर्वथा सुखी विद्यते । नानाविधैरुपाधिभिर्ग्रस्यमाना एव दृश्यन्ते प्रायो मनुजा· । तदीश्वरे श्रद्धाय विपत्तिसमये सच्चिदानन्दकन्दपरमात्मन. स्मरणं करणीयं नरेण येनामुना सकलमपि विपदम्बुधिजालमुत्तरिष्यते तत्साहाय्येन । यो हि नरः सर्वदा तदानन्दघनं परं ब्रह्म हृदि विचिन्त्य तदादेशानुगुणमाचरति स एव बहुविधदु.खजालेभ्यो लीलया विमुच्यते । यथा विना विज्ञानं विज्ञानेन वा चेदनलः संस्पृश्यते नरेण दहत्येवासौ दहनः पुरुषमेनम्; तथैवाज्ञाया ज्ञाया वा दुरितानि समाचरन्तो नियतमेवोपनमयति दु.खजालमात्मनिकटम् । यतो न्यायकारी परमेश्वरो निखिलजीवेभ्यस्तत्तत्कर्मानुरूपं सुखदुःखरूपं फलमर्पयति । मनुजो दु खसमये धीरतया महावातेऽचलेन्द्रवदचलं समयतिष्ठेत यदि तर्हि स्वदु खजन्यं कष्टमननुभवन् सन्मार्गं तमनुवर्तमानः ससारसागरमिमं दुस्तरमपि समुत्तीर्य

१ निरस्यदाचरति निरायवेऽपी निरायमाणा । ' प्राणरक्तु निरस वदः ' २ सनिधापयति ।

परमानन्दकन्दं निन्दैवैव । तथैव रणवीरमपि विपत्पयोधौ निपात्य निकषेण परीक्षितुं न किमपि न्यूनत्वमकारि प्रभुणा ।"

गतायां मालत्या समं रत्नप्रभायां रणवीरोऽयं महाराजमुद्याने प्रविष्टमवलोक्य संभ्रान्तमना बभूव । आत्मानञ्चासौ गोपायितुमनाः समन्ततो वीक्षितुमारेभे । उपगतञ्चास्य नयनविषयं सुन्दरोद्यानेऽस्मिन्नेकं संफुल्लवल्लीललितवलयवेल्लितं जनितचतुरजनमनोनयनरञ्जनं रचितचञ्चरीककुञ्जमनुल्गुञ्जनं किमप्यद्भुतं मञ्जुमनोहरं विस्मारककेलिकुञ्जम् । ततः सपद्येवायं तदभिमुखं विद्रुत्य निलीय च तत्र लीलाकुञ्जे व्यचिन्तयत्—' नात्र कोऽपि मां द्रष्टुं शक्नोतीति साम्प्रतमस्मिन्नेव स्थले श्रेयस्करमात्मगोपनम् ? ' इति मनसि विचिन्त्य तस्मिन् विस्मारककेलिकुञ्जे कस्मिंश्चिन्महीरुहतले शाद्वलललितायां भुवि व्यलुठत् ।

'आसीदृतुरेष ग्रीष्मः । तत्रापि मध्याह्नसमयोऽयमिति बहिः प्रचण्डश्चण्डकरतापः । परमिह विस्मारककेलिकुञ्जे महीरुहाणां सान्द्रच्छायतया शीतलतरोऽनिलो वहति स्म । अमन्दशीतलतया प्रभञ्जनस्य बुभुक्षितोऽयं रणवीरो भुवि विलुठनसमकालमेव निद्रयाऽऽलिङ्गितः । अहह ! यस्य छिक्कासमक्षणमेव शतशोऽनुचराः संभ्रान्तमनसः समन्ततः प्रधावमाना आगच्छन्ति स्म; अये ! नितान्तमपि यो न जानाति स्म दीनतार्थं तस्य नृपनन्दनस्येयं शोचनीया दशा !! भोजनमपि सकृदस्य दुर्लभं भवति दिने । हा भाग्यदेवि ! को नु प्रभुलवागम्याविलासलीलामवगन्तुम् !

निद्राणे रणवीरे क्षणानन्तरमेव तदधिष्ठिततरुतलवर्तिनो निजबिलादेको भयङ्करः कृष्णभुजङ्गमः सद्य एवानिलभुग्विवान्य शिरीषकुसुमसुकुमारस्य राजकुमारस्य प्राणान् फणया फूत्कुर्वाणो बहिर्निर्जगाम । परम्— ' अरक्षितं तिष्ठति दैवरक्षितम् ' । इति प्रथिताभाणकानुसारं फणधरोऽयं निजविवरनिकटे निद्राणः कोऽपि पुरुषो वर्तत इत्यवगम्य तदीयपार्श्वतो भूत्वा निर्गम्य तदभितः परिभ्रम्य तस्य राजकुमारस्य चरणमारुरोह । सद्य एवायं भुजङ्गमो निरागसं बालकमेनं दशेन्नु निजोल्बणविषमयदशनैरिति कोऽपि प्रेक्षकः सद्य एव व्याहरेत्खलु !! परं प्रभुनायं सर्पस्तु तत्कलेवरादधोऽवरुह्य रणवीरशिरःसनीडमुपगम्य तदीयमूर्द्धनि स्वफणां वितत्यान्दोलितुमारेभे । समयेऽस्मिन्महाराजश्रीरणजितसिंहनरेन्द्रः स्वमन्त्रिवरेण सह पर्यटन्नुद्याने तत्रोपस्थितः । यावदमुः प्रविष्टो महाराजस्तावदेवाकस्मात् मन्त्रिवर्यस्य नयनपथमुपगतवानयं रणवीरशिरसि फणां प्रसार्य स्थितः कालसर्पः । सहसा चमत्कृतात्मा महाराजकरतलं गृहीत्वा पुरोगच्छन्तं तमवरुध्य जगाद— ' देव ! पश्य पश्य—सम्मुखमयं शयितोऽस्ति कश्चन बालः । तदुत्तमाङ्गे स्वफणां वितत्य फणधरश्चैको निषण्णोऽस्ति । कदाचिद् बालोऽयं निद्रायामेव चेष्टितपार्श्वं परिवर्तयेत्तदा नियतमयं स्वाङ्गावमर्दनेन नागस्तदीयप्राणानाहरेदिति शङ्के । ' इति ।

---

१ चञ्चरीकपुञ्जं भ्रमरकुलम् । २ 'भुलभुलैया' इति भाषायाम् । ३ प्रभञ्जनः पवनः । ४ 'छींक' इति भाषा । ५ उल्बणम्—उग्रम् । ६ दृष्ट्वा—[illegible] ।

नरेन्द्रोऽपि क्षणं विमृश्य बभाषे–' नूनमयं कोऽपि राजवंश्यो बालः ? ध्रुवमयं कुमार-श्चक्रवर्ती नरेन्द्रो भवितायं ? इत्येव नागोऽयं तदुपरि फणां प्रसार्य तिष्ठतीति।'

अत्रान्तरे भुजङ्गमोऽयं पादध्वनिमाकर्ण्य नृणां सहसा स्वविवरं प्राविशत् । विषधरमेनं गतमवलोक्य सुतरां ननन्दतुस्तौ नरेन्द्रमन्त्रिपुङ्गवौ । अथ प्रधानं व्याजहार नरेन्द्रः ' मन्त्रि-वर्य ? निकटवर्तिनीह लतामण्डपेऽहमुपविशामि । स्थीयतामत्र बालसमीपे भवता । यदा-ऽसौ प्रबुध्येत्तदैनं तदानीय मदभ्यर्णं समायातु भवान् । ' इति । अथ लतामण्डपं प्रतस्थे महीमहेन्द्रः ।

प्रयाते महाराजश्रीरणजितसिंहे बुद्धिमानमात्यवर्यो रणवीरसमीपमुपविश्य तदानन-पङ्कजसंभूतस्वेदसलिलमपनेतुममुमात्मपटखण्डेन वीजयितुमारेभे । ततः प्रबुध्य रणवीरः स्व-निकटमुपविष्टं कमपि पुरुषमवलोक्य सुतरां विसिस्मिये । रणवीरकरसरोरुहं गृहीत्वा समभ्य-धादमात्यपुङ्गव.– ' कुमार ? मा भैषीः । इत.प्रभृति जातोऽयं तव भाग्यभानूदयः । अस्म-न्महाराजस्त्वां प्रसुप्तं विलोक्य त्वदुपकण्ठमुपवेष्टुं मामादिष्टवान् । कुमार ? तदुत्थायोपविश्य सज्जीभूय चायाहि मया सह महाराजसन्निधौ । आत्मनिकटमानेतुं त्वामसौ समादिशन्मां नरेन्द्रः ।' इति सकलं वृत्तान्तमावेद्य भुजङ्गमसम्बन्धिनीं वार्तामपि रणवीरं न्यवीविदद्यम् । निखिलमिदमात्मनिद्रावस्थायामेव संघटितं वृत्तमुपश्रुत्य विस्मयस्मेराननाम्बुरुहो रणवीरो मन्त्रिवरेण साकं तत्कथनानुसारं नरेन्द्रचरणाश्रितं रुचिरं लतामण्डपमुपेत्य सादरं सप्रश्रयं प्रणम्य महीतलमं वाचंयम एव स्थितवान् । अथ पृष्टोऽयं राष्ट्रपतिना प्रहृष्टम-नसा– ' कुमार ? कस्त्वम् ? किमर्थंश्चात्रागमनं जातं ते ? ' इति ।

रणवीरः । भगवन् ? क्षत्रियकुमारोऽस्म्यहं कश्चन । विविधदेशभ्रमणाभिलाषुकोऽहं निर्गतः स्वगृहं परिहाय ।

नरेन्द्र.। कस्तव पिता ? कस्मिन् देशे निवससि ? किञ्च तवाभिधानमिति सकलं विश-कलय्य निवेदय मे ।

रणवीरः । भगवन् ? ' रणवीर ' इति गुरुभिरभिहितनामधेयोऽस्मि । अजितदुर्गनगरा-धिपतेर्महाराजधीवेसरिसिंहनृपतेः कनीयान् कुमारोऽहम् ।

नरेन्द्रः । ( स्वगतम् । ) अये ? किमिदं शृणोमि ? ( प्रकाशम् । ) कुमार ? मन्ये तवैको ज्येष्ठबन्धुरासीदिति । ?

रणवीरः । आम्, प्रभो ? अस्ति ममैकश्चन्द्रसिंह इति विख्यातोऽग्रजन्मा बन्धुः । साम्प्रतमसौ विजयनगरराज्यधुरं वहति ।

नरेन्द्रः । ( स्वगतम् । ) अये ? इदानीमेव विदितं मया सकलं मदयं दुरात्मा क्रूरसिंहो मिथ्यावृत्तान्तं निवेद्य मां प्रतारितवान् । भवतु । तमप्यग्रे द्रक्ष्यामः । ( प्रकाशम् । ) रणवीर? मा भैषीः । यद्यपि पुराऽहं तव पितुः प्रतिद्वन्द्वी समभवम्; तदपीदानीं तवामुना सत्यवचसा

१ आननं मुखम् । २ धूर्भारः ।

सम्मुख्य विस्मरामि निजमन्त्रिणं चैतम्। इत आरभ्य त्वामहं स्वपुत्रनिर्विशेषं मंस्ये। रणवीर! सहोदरयोर्युवयोः पीडयितारं दुरितकारिणमेनं शूरसिंहमवश्यं दण्डयिष्यामि। आगच्छ मदुपकण्ठम्। इति प्रोच्य निजपार्श्वमुपावेशयत्। क्षणं तत्रोपविश्य रणवीरमादाय सह मन्त्रिवरेण क्षितिपतीन्द्रः प्रासादं प्रविष्टः। 'सानुचरैः समं रणवीरः प्रासादं समागतवानिति' निशम्य प्रमुदितान्तरङ्गा प्रफुल्लवदनाम्बुजा च जाता राजकन्या रत्नप्रभा। 'कदा तेन सङ्गच्छेयामुना?' इति प्रबलमुत्कलिकाकुलहृदया प्रारब्ध पर्यटितु-नियमितस्ततः।

प्रासादप्रवेशकालमेव महाराजो रणवीरकृते भोजनप्रबन्धं विधातुमादिशत् किङ्करमेकमिति सद्य एव निष्पन्नं तदर्थं भोजनजातम्। भूमिपेन समं कक्षान्तरे भोजनार्थं गतवति रणवीरे प्रधानमवदन्महाराजः 'मन्त्रिवर! कलितदुर्गनाथस्य महाराजश्रीकेसरिसिंहस्य तनयोऽयं निजदुहितू रत्नप्रभाया अनुरूपो वरो वर्तते इति तेन समं स्वदुहितरं रत्नप्रभां विवाह्य सकलमिदं मदीयराज्यमस्मै कन्यादानेन साकमर्पयितुं जायते मतिर्मे। तदत्र विषये का सम्मतिर्भवत इति निवेदय मे' इति।

मन्त्रिवरः। सम्यङ्निरधारि नरेन्द्रेण। परं कथमयं यवीयान् कुमारः पारयेदिमां दुर्वहां राज्यधुरं वोढुमित्येवाऽऽशङ्क्यते मया?।

नरेन्द्रः। विश्ववर्य! सिंह एव भवति सिंहबालः। नालिङ्ग्यन्ते कर्हिचिदप्यङ्गानि रिपुभिरेनाम्। अभ्युन्नतया राज्यतन्त्रं चालयितुमयं प्रभविष्यतीत्यवधारयामि खलु! पुनर्भवानपि तत्सहायक इति किमपि कष्टं नानुभविष्यत्यमुना। सुमन्त्रितमस्मै दास्यति भवानिति दृढं विश्वसिमि। प्रियमन्त्रिपुङ्गव! इदानीमहमेभिः संसारोपाधिभिरुद्विग्नोऽस्मि भृशमिति तस्मै समर्प्येदं राज्यमखिलं मोहमायाजालं परित्यज्य सच्चिदानन्दकन्दजगदीश्वर-मभिध्यातुं निरन्तरं निरन्तरायं कस्मिंश्चिदेकान्तशान्तकान्तारभुवि समुपगम्य शेषं वयः सुखेन गमयितुमभिलषामितरामहम्।

मन्त्रिवरः। किमाह राजेन्द्रः? यत्र देवो गमिष्यति तत्रैवायं सेवकः प्रधानोऽपि सदैव स्थास्यति। अहमपि नाभिलषामि जगद्द्वन्द्वमिदमिदानीम्। अतस्तत्र भवतैवा-हमपि सम्प्रति जगदीशाराधनं कुर्वन्नेकान्ते जीवनशेषं व्यतीतयितुमिच्छामि।

नरेन्द्रः। सुधीन्द्र! नोचितं मन्ये सम्प्रति भवन्तं सह नेतुमहम्। यतोऽपि च भवान् राजन्यबान्धवैः सकलज्ञानेन रणवीरमभिज्ञातं करोतु। प्रातःकालेऽयमाह श्वान्तिकमानन्द-विन्दे मङ्गलम्। यदिदानीं मद्वचनमङ्गीकृत्यात्रैव निवसतु भवान्। (नरेन्द्रवचनं निशम्य तूष्णीमतिष्ठदमात्यवर्यः)

अथ राजमहिषीमाहूय सकलं वृत्तमिदं न्यवेदयन्नरेन्द्रः। रत्नप्रभायाः परिणयवृत्तान्तं निशम्य नितरां प्रमुदिताऽभून्महाराज्ञी। परं तेन समं महाराजस्य वनगमनवार्तामाकर्ण्य-

---

१ मृदेन। २ कस्मिंश्चिन्ते विशोकिन्दते। ३ मयूराम्भू।

तिमात्रं चिन्तातुरा बभूव नरेन्द्रवल्लभा । बहुविधैः सान्त्वनामयैर्वचनैस्तां प्रशमय्य यावदाश्वासयति महाराजस्तावदेव तत्रोपस्थितो रणवीरः । नरेन्द्रं महिषीञ्चापि सादराचारं प्रणम्य महाराजसन्निधौ समुपविष्टवान् । क्षणं शान्तिराविरासीत्तत्र । परमन्ते शान्तिभङ्गं विधाय रणवीरमभ्यधत्त नरेन्द्रः– ' वत्स रणवीर ? त्वामहं निजतनयापेक्षयाऽप्यधिकप्रेम्णाऽभिलषामि–इति । मदीयं वचनं न च नाङ्गीकरिष्यसि त्वमित्याशास्यते मया ' -इति ।

रणवीरः । पूज्यवर्य ? किमिदमभिधीयतेऽत्रभवता ? निःशङ्कमादिश्यतामयं यदाज्ञापनीयं श्रीमता । नायमुल्लङ्घयिष्यति भवन्निदेशं श्रीमच्चरणकमलचञ्चरीक. कदापि ? ।

नरेन्द्र. । श्रृणु–राजकुमार ? स्वप्रियतमकन्याया रत्नप्रभायाः पाणिग्रहणं त्वया कारयित्वा तया सह मदीयमिदं प्राज्यं राज्यमपि तुभ्यं प्रदाय वानप्रस्थाश्रमं परिग्रहीतुमहमिच्छामि । ब्रूहि, किं वाञ्छसि त्वम् ?

रणवीरस्तु महाराजस्येदृशं भाषणं निशम्य स्तब्ध एवाऽभूत् । महाराजाय किमुत्तरं देयमिति न स्फुरितमस्य हृदि किमपि । प्रकारममुमालोक्य पुनरवदन्नरेन्द्रः– ' रणवीर ? किमुत्तरं न दीयते ? त्वमप्यस्मिन् विषये मामनुमन्यसे– इति तर्कयामि खलु ? ' इति ।

रणवीरः । ( सगद्गदस्वरम् । ) भगवन् ? शिरसा वहामि श्रीमदादेशस्रजम् । परमत्रभवानस्मान् परिहाय गन्तुं यद् ब्रवीति तन्नाभिरुचितं मे नितान्तम् ।

नरेन्द्र. । रणवीर ? मोद्विजस्व ? अस्मन्मन्त्रिवरस्त्वां सन्निधास्यते । यदवधि नाभिज्ञातो भवसि राज्यकर्मणा तदवधि त्वमस्य प्रत्येककर्मणि गृहाण सम्मतिम् । पालय स्वप्रजा .इव प्रजा. । प्रजानां सुखेन सुखी दुःखेन च दुःखी भवति नृपतिरिति सम्यगवगम्य प्रकृतीं रञ्जयन् राज्यं प्रशाधि ।

क्षणेऽमुष्मिन्नुपतस्थे तत्र रत्नप्रभा । पितरं प्रणम्येयं मातुरन्तिकमुपविश्य साचि[1] दृगञ्चलेन रणवीरं निभालयाम्बभूव । रत्नप्रभामवलोक्य व्याहृतवती नरेन्द्रकान्ता– ' वत्से ? समर्पिताऽसि त्वमस्माभिरस्मै राजकुमाराय । परिचर त्वमेनं मनोवाक्कर्मभिरिति । ' तत्कालमेव महाराजो राजपुरोहितमाहूतवान् । अखिलजनसमक्षं विवेकमपि समारभ्य राजपुरोधा राजकुमार्या रत्नप्रभायाः पाणिपल्लवतल्लजं राजकुमारेण रणवीरेण वैदिकविधिना ग्राहयामास । महाराजो राजमहिषी चानन्दितौ भूत्वा तौ दम्पती शुभेनाशीर्वचसा सम्भावयामासतुः– ' भद्रं भूयाद् भवतोः । मङ्गलं तनोतु सदा सकलमङ्गलमूलमहेश्वरो याम् ? ' इति ।

तस्मिन्नवसरे तत्ररया धरणिः प्रकम्पितुमारेभे । तेन सममेव महानेको भयङ्करो निःस्वनोऽजनि । तदभिमुखं यावदवलोकयन्ति सकलास्तावदेव स्वसम्मुखं कमपि शान्ताकारं मनस्विवरं योगीन्द्रमुत्तराधिकारिसमपश्यन्नखिलास्ते । रणवीरस्तु योगीन्द्रमवलोक्यैव तदभिमुखमभिधाव्य दण्डवत्प्रणमन् पदयोः पपातामुष्य । ' वत्स ? सुखी भूयाः, ' इत्यभि-

[1] साचि तिर्यक् ।

धाय स्वहस्ताभ्यामभ्युत्थापयामास योगीन्द्रः। महाराजश्रीरणजितसिंहः, तत्रोपविष्टाश्चान्येऽपि जना अदृष्टचरमिदं वृत्तमवलोक्य विस्मयविकासितनयनारविन्दा योगीन्द्रं प्रणेमुः। यथायथं मङ्गलमयेनाशीर्वचसा सकलान् संमान्य नरेन्द्राभिमुखीभूय बभाषे योगीन्द्रः–राजेन्द्र! समुचितमेव कृतमात्मनो यदकारि त्वया। आवश्यकमिदानीं तवास्य संसारमोहजालस्य परित्यागकरणमेव। त्वामहमात्मना सममरण्ये नेतुमभिलषामि। एहि, सन्नद्धो भव त्वरम्। परिधेहि काषायवसनमिदम्। समाधेहि विविक्ते[1] परमेश्वरं हृदि तमिति।'

इत्युदीर्य नरेन्द्राभिमुखमेकं काषायवस्त्रं प्राक्षिपद् योगीन्द्रः। तदवलोक्य सद्य एवोत्थाय काषायवसनं वसानो नरेन्द्रस्तारस्वरमवादीत्–'अहो! धन्योऽसि विभो प्रभो! धन्योऽसि। विजयते जगति जगदेकनियन्ता जगदीश्वरः। अहो! उपलब्धोऽयमिदानीमानन्दरसः। अपास्तमिव मे जननमरणचक्रमधुना'। इति व्याहृत्य पुनरपि प्राणंसीदयं योगीन्द्रम्। राजेन्द्रं वनं प्रस्थातुमुद्यन्तमालोक्य रणवीररत्नप्रभाराजमहिषीमन्त्रिप्रमुखाः सर्वेऽपि पर्यश्रुनयना योगीन्द्रसम्मुखमवालोकयन्। तानश्रुजलं मुञ्चतो निरीक्ष्य नरदेवश्रीरणजितसिंहो बहुविधं सान्त्वनामयं समुपादिशत्।

अथ महादेवी चन्द्रप्रभा योगीन्द्रं प्रणम्य कथितवती–'भगवन्! अन्याय्यमिदं भवति। किमिति नयति मदन्तिकान्महाराजं श्रीमान्? भर्त्रा सहैवोषितव्यं सहधर्मिण्या। तत्किमिति वियोज्यते निजनाथतो नारीयं भगवता? मामपि समनुगन्तुमादिशतु श्रीमान्' इति।

योगीन्द्रः। देवि! अक्षरशः सत्यं तव कथनं परमिदानीं रत्नप्रभायाः सविधावस्थानं तवोचितम्। यतो बालिकेयं सम्प्रति। न विज्ञायते बालयाऽनया किमपि सांसारिकं कृत्यमिति श्रीमत्याऽत्र स्थित्वा रत्नप्रभायै रणवीरायापि चोत्तमं तदर्हं शिक्षणं प्रदेयम्। निरन्तरं स्वान्तःकरणे निजहृदयेश्वरं चिन्तयन्ती सन्निवेश्य मद्वचं समाधत्स्व त्वमिति कल्याणं कर्ता मङ्गलमूर्तिकर्ता परमेश्वरस्ते।

इत्थं राजमातरं सम्यगुपदिश्य राजेन्द्रं सह नीत्वा वनं प्रस्थितो योगीन्द्रः। महाराजं प्रस्थितमालोक्याविरतं विललाप राजमाता। रणवीरो रत्नप्रभा चोभौ तदुपकण्ठमुपविश्य तां बहुविधमाश्वासयामासतुः। 'प्राज्यं परित्यज्य राज्यं प्रस्थितो वने महाराजः' इति वृत्तान्तः क्षणेनैव सकलराजनगरे प्रससार। महाराजवियोगेन प्रजा अतिदुःखिता बभूवुः। पौरजनानामाश्वासयितुं रणवीरो मन्त्रिवरं सहादाय पद्भ्यामेव नगरे गतवान्। अमात्यवरेण सह विपणिमार्गे प्रजामण्डलमयं सान्त्वनामयैर्मधुरविधैः सहानुभूतिदर्शितामङ्गलैः सुधा-पयोनिधिपयैरुपदिदेश। अस्य मधुरवचनैः शान्तिमापन्नाः सकला अपि जनाः स्वामिनवे राजानमभिज्ञाय प्रमुदितमनसः सन्तः प्रतिपच्चन्द्रमिवाभ्युदयमानमिव सादरं सहर्षं प्रणेमुः। इत्थं प्रकृतिमण्डलं सान्त्वयित्वा प्रासादं प्रतिनिवृत्तो रणवीरः।

१ पूते विजने वा 'विविक्तौ पूतविजनौ' इत्यमरः।

अन्येद्युः प्रातःकाले महता समारम्भेण समं यथाविधि राज्ये सनभिषिक्तो रणवीरः। नगरश्रेष्ठिजनैरन्यश्चापि साधारणमनुजैर्निजनिजयोग्यतानुसारं स्वाभिनवबालनरेन्द्राय वितीर्णान्युपायनानि बहुशः । यैर्यैरुपहारो वितीर्णस्तेभ्यस्तेभ्यस्तद्द्विगुणमूल्यवन्ति दत्तानि पारितोषिकाणि मन्त्रिसत्तमेन ।

अथ प्रतीचीं दिशमवलम्बमाने भगवति चण्डांशुमालिनि महता समारोहेण साकं महाराजश्रीरणवीरसिंहनरेन्द्रो राजमहिषी श्रीमती रत्नप्रभादेवी चोभौ रुचिरनेपथ्यशालिनौ नानाविधमणिमुक्तावलीमण्डितसकलाङ्गसुन्दरं दर्शनीयं गजेन्द्रमेकमारुह्य चतुरङ्गिण्या सेनया सह विविधमनोहरवाद्यबधिरितदिगन्तरालं प्रस्थितौ राजधान्यां पर्यटितुम् । पौरमण्डलीभिः सहर्षकिलकिलारवं सजयघोषं पुष्पवर्षैरभिनवमहीमण्डलाखण्डलोऽयं संभावितोऽवितराम् । एवं कैश्चित्सोत्सुकं निरीक्ष्यमाणः, अपरैर्जयध्वनिभिः सच्चरीक्रियमाणः, इतरैः पुष्पवृष्टिभिरवकीर्यमाणः पौराशीर्भिः संवर्द्ध्यमानः, बन्दिभिर्गीयमानश्चाखिलं प्रकृतिमण्डलमानन्दयन्, भूतपूर्वनरेन्द्रमात्मगुणगौरवेण विस्मारयन्निव, निखिलनगरमात्मानिरतिशयप्रेमपीयूषजलैः प्लावयन्निव तर्पयन्निव चायं बालनरेन्द्रः पुनः प्रासादाग्रद्वारे समुपस्थितवान् । उभावपि दम्पती दन्तावलेन्द्रादवरुह्य यथाक्रमं राजमातरं मन्त्रिपुङ्गवञ्च सादरं सस्नेहं प्रणेमतुः । ताभ्यां शुभेनाशीर्वचनेन सम्भावितौ इमौ दम्पती । एवं विपत्तिसमाकुलस्य दुःखिनो राजकुमारस्य रणवीरस्य भाग्यभानुः सम्पूर्णतेजसा जगदाकाशे प्रचण्डं प्रचकाशे ।

राजकुमारी रत्नप्रभा तु– 'कदा वा रात्रिरुपविशेत ? कदा वा निजदयितेन समं समालपेयम् ? ' इति महोत्कण्ठाकुलमानसा [1]शर्वरीं प्रतीक्षमाणाऽविष्ठत् ।

सायंकाले रणवीरः– ' कथं नु राज्यमुपलब्धमात्मना ? कथञ्च महाराजश्रीरणजितसिंहो वनं प्रस्थितः ? ' इत्यादिवृत्तनिवेदकं सविस्तरलेखं पत्रमेकं विलिख्य कस्मैचन विश्रम्भ[2]भाजनाय नायकाय समर्प्य तं स्वज्येष्ठभ्रातृचन्द्रसिंहस्य सविधे प्रेषितवान् । नायकोऽयं पत्रमादाय ततो निष्क्रान्तः ।

अथ राजमातुरन्तिकमुपगम्यायं रणवीरो नियच्य तदीयपार्श्वे मात्रे पुत्र इव तस्यै सकलमात्मदुःखमय वृत्तं श्रावितवान् । वार्तायामेव संवृत्ता रजनिरिति निजवार्तां समाप्यासौ राजमातरमापृच्छ्यात्मानं प्रतिपालयन्तीं प्रियतमां रत्नप्रभां द्रष्टुमुत्कण्ठितः स्वशयनमन्दिरं प्रपेदे ।

॥ + ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ पद्यगद्यप्रियोसहोदरे कुमुदिनीचन्द्रे नवमी कला ॥ + ॥

---

१ शर्वरी रात्रिः । २ विश्वासपात्राय । ' समौ विश्रम्भविश्वासौ ' इत्यमरः ।

# अथ दशमी कला ।

" कृतमपि महोपकारं पय इव पीत्वा निरातङ्कः ।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥ "
( पण्डितराजो जगन्नाथः )

" द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः । " ( कविराजो भवभूतिः )

" गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितनिजदेहभागभारः ॥ " ( विक्रमोर्वशीये )

" चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः । " ( भासकविः )

पुनस्विनो जना यदा पापाचरणे एवानन्दं मन्यते पुण्यशालिनो मनुजास्तदा अण्वपि दुरितकृत्यं कर्तुं संकुचन्ति । नासीदवधिः क्रूरसिंहस्य किल्बिषकर्मणाम् । नासौ विश्वसिति स्म परलोकम् । परमेश्वरमपि नामन्यताऽयम् इति कलुषकर्मणां नैव स्यादवधिरस्येति संभवनीयमेव । कुमुदिनीहरणे द्वितीयमकृतार्थोऽभवदिति हृदयमस्य भृशं क्षुभितमजायत । प्रत्युतैऽस्य प्रचण्डो वैश्वानरः प्रज्वलतिस्म । पुनरसौ विजयनगरं प्रगत्य कुमुदिनीमपहर्तुं विचिन्तितवान्—' किं नैव लप्स्यते मया कुमुदिनी ? हा कुमुदिनि ? न काऽपि शान्तिर्हृदि मे त्वदृते ? अप्सरा वा देवाङ्गना वासि त्वमिति नावगन्तुं प्रभवामि ! हन्त ! उत्तुङ्गप्रासादोच्छ्रृङ्गमधिरूढोऽहमेकेन हस्ताभिसारणेन त्वयाऽतिगहननिराशागर्तभुवि प्रपातितोऽस्मि । अभिमानिनि भामिनि बाले ? नैव कर्हिचित् सुखं स्थातुं दास्यसि त्वम् ? मानवामस्याः खलु सुतरां त्वम् ! ! परं यावदायुरहमपि नैव विजह्यामि त्वामिति दृढं जानीहि । कुमुदिनि ! अपि भवेयुः सहस्रशः प्रहरिणस्त्वदीयपरिरक्षणार्थम्; परं तानगणयन्नपहरिष्यामि त्वाम् । मानिनि बाले ! चन्द्रं परिणीय स्वमात्मानं धन्यंमन्यमत्तेव जानासि खलु ? ! किन्तु त्वदुन्मादमवतार्यैव शान्तिमेष्यति क्रूरसिंहोऽयम् ' इति विचिन्तयत एवास्य चारकोपरक्षको भटः सोच्छ्वासः समभिधावमानस्तत्रागत्य महीतलमिलन्मौलिः प्रणम्योद्भ्रान्तिरभाषतैनम्—' प्रभो ! अन्यतामयमनुचरः । कारके निरुद्धो बालः कौशलेन पलायित ' इति ।

क्रूरसिंहः । ( सोद्वेगम् । ) अहो आश्चर्यम् ? ? किम् ? पलायित किमु ममाखेटकः ! दुष्ट ! तवैव प्रमादस्य परिणामोऽयमिति भुङ्क्ष्व तत्प्रतिफलम् । '

इति व्याहृत्य निर्दोषस्य भटस्यास्य कण्ठे नृशंसोऽयं स्वचन्द्रहासेन प्राहार्षीत् । क्षणेनैवायमात्मीयमभियोगं निर्णेतुं प्रस्थितो न्यायकारिणः परमात्मनो न्यायसभायाम् ।

---

१ द्विः चारद्वयम् । २ बन्धनालयप्रहरी ।

अथापरं भटमाहूयोपरतस्य[1] तस्य शवं ततोऽपनेतुमादिश्य क्रूरोऽयं क्रुधा जल्पितुमारेभे- 'अये ! किन्तु कारणं भवेदस्य यन्मदीयविद्वेषिणः केसरिसिंहस्य तनयौ मम पाणिपञ्जराद्-द्भुतगत्या विचित्ररीत्याऽपसरतः इति ? हन्त ! कारायां निरुद्धं रणवीरमालोक्य नितरां खल्वानन्दमहम्, परमयमानन्दो मे विलीनः क्वापि वायुमण्डले । पलायितश्चायं बालकोऽपि दलितकुन्तलाग्रोऽनाथासेन । हन्त ! साम्प्रतमेकस्थाने द्वौ सञ्जातौ मम प्रतिद्वन्द्विनौ' इति व्याहरन्नतिवेलमशोचीत् क्रूरसिंहः ।

अथ चतुर्दिनानन्तरं पुनरन्यतमो भटस्तदन्तिकमुपेत्य – 'प्रभो ! अतिमात्रममङ्गलमुदन्तमुपानीतवानस्मि ' इति न्यवेदीत् ।

क्रूरसिंहः । किम्, किमस्ति ? कामसिंह ? ब्रूहि सत्वरं यन्निवेद्यं मे ? ।

कामसिंहः । संसारमिमं परिजहौ सोऽयममरकण्टकेश्वरो रणजितसिंहः ।

क्रूरः । किमुपरतोऽयम् ? सुष्ठु जातमहो ! संस्थितश्चेदसौ[2] । यतोऽयमपि बभूव मम प्रत्यर्थी । एष एव भवितुं राज्यापहारको नृपः । भद्रं जातं यदयं पञ्चत्वमितः । तत्रापि सम्प्रति फलिष्यति मम कार्यवल्लरी । तस्याप्येकाऽनुपमलावण्याङ्गयष्टिर्ललनासृष्टिरिवापरा सृष्टिकर्तुरद्वितीया विद्यते तनया । कामसिंह ! ईदृशं सुसमाचारमपि कथममङ्गलं कथयसि ? ।

कामसिंहः । श्रीमन् नाथ पञ्चत्वं प्राप्तो नृपः । किन्तु विशालं राज्यं परिहाय परमेश्वरभजनं कर्तुमरण्यं प्रस्थितः । आत्मतनयया सममखिलं राज्यमपि रणवीराय समर्पितवानयम् ।

क्रूरः । ( कराभ्यां शिरो धृत्वा । ) हा हन्त ! धूलिसाद्रापचेय धारणा मे ! उपसन्नमिदानीं मम मरणम् । इति समुदीर्य विचेतनो भूत्वा धरणितले निपपात क्रूरोऽयम् । सावधानममुं विधातुमुपचक्रमे कामसिंहः । कामसिंहस्योपचारेणान्ते सञ्ज्ञामापन्नोऽयं मनस्येव चन्द्रसिंहं रणवीरं राजानं रणजितसिंहञ्चापि शशाप भृशम् ।

अथ कामसिंहहस्तं परिगृह्य समकथयदयम्- 'वीरवर ! अल्पायुषो मम स्याद्यद्यपि तदपि केनाप्युपायेनापहरणीयैव कुमुदिनी । परं कार्यमिदमस्माभिरतिसावधानतया करणीयम्, यतः सन्नद्धोऽस्ति चक्रवर्ती महाराजो रणवीरः । अतीवचतुरोऽयमिति सोऽयमस्मान् कुतोऽपि विचित्य निगृह्य च पशुमारं मारयिष्यति । तदधुनाऽस्माकं निजानुचरैः समं पृथक् पृथगवस्थानमेवातिश्रेयस्करम् । नो चेन्महदनिष्टं सम्भविता नः । मदीयप्रियवीर ! एहि, इदानीमेवावां विजयनगरं गच्छाव ' इति निगद्य कामसिंहहस्तमाचकर्ष क्रूरसिंहः ।

कामसिंहस्तं सान्त्वयन्नब्रवीत्- 'श्रीमन् सेनापते ! धार्तिराधीयतां हृदि । यत्कार्यं दासेन कर्तुमीहते भवान् सुखेन करणीयं तत् । गुप्तविद्यामहं जानामि । मदीयविद्या नक्तमेव[3] सिध्यति । तत्सम्प्रति साधुवेषमुपोरावयो प्रस्थानं समुचितमेव विजयनगरे ' इति प्रोच्य क्षणानन्तरमेवायं काषायवसनयुगलमानिनाय । उभाभ्यामपि परिहितं तदम्बरम् ।

---

१ उपरतस्य मृतस्य । २ संस्थितः मृतः । ' संस्थाऽऽसारे स्थितो मृतो ' । ३ रात्रावेव ।

भस्मना शरीरं रुद्राक्षमालया च कण्ठमलङ्कृत्य पाखण्डिनौ साधुवेषौ लुण्ठकराजावेतौ विजयनगरवर्त्मना प्रचेलतुः । प्रदोषे प्रदोषाविमौ प्रच्छन्नं विजयनगरं प्रविश्य क्वचिदुपह्वरे निशीथसमयं प्रतीक्षमाणौ स्थितवन्तौ ।

सम्प्रति भगवान् भुवनभास्करः कमलिनीनायकः स्वकैः कमनीयकोमलकिसलयसहोदरैः किरणकन्दलैश्चरमाचलशिखरमौलिमण्डलं मण्डयामास । भगवती कमलालया स्वाश्रयभूतानि कमलान्यपहाय नैजं चाञ्चल्यं प्रकटयाञ्चक्रे । चक्रवाकललना दिनकरन्यस्तमातपं सन्तापमिषेण पिबन्ती निजदयितस्य विरहमसहमानेव समाक्रन्दितुमुपचक्रमे । न खलु सुहृदोऽपि विगलितविभवान् जनानाश्रयन्तीति प्रबोधयन्त इव चञ्चरीकगणा निःश्रीकाणि पुण्डरीकाणि परिहाय मञ्जुलमनोज्ञां पुष्पवाटिकामभितो मञ्जुमृदुलं जुगुञ्जुः । जगति क्वापि स्वनिलयतुल्यं स्थलं नास्ति इति कलरवैः कथयन्त इव हृदयङ्गमैर्विहङ्गमा दिगन्तरालादागम्यागम्य रम्यं निजनिजकुलायं भेजिरे । विदुषां सुयश इव सुमनसां सौरभं परितः प्रसारयन्नमृतसमधुरो मन्त्र इव शीतलो गन्धवहो वहन् मन्दमन्दं लोकमनांस्यमन्दमानन्दयाम्बभूव । अथ दुर्दैवलेखामिवान्धकारजवनिकामपसार्य जगदानन्ददायिन्या सुनीत्येव चन्द्रिकया नरेन्द्र इव द्विजगणमण्डितः सकलकलाभिरामश्चन्द्रमा रुचिरं गगनसिंहासनमलञ्चकार ।

समयेऽस्मिन् बन्धनमुक्तस्य रणवीरस्य सन्देशमादाय गुप्तगृहान्निर्गतो मानसिंहः, श्रीमहाराजरणवीरसिंहेन पत्रं दत्त्वा प्रहितः सन्देशहरो नायकश्चोभौ समसमेव तस्मिन्नहनि विजयनगरं प्रापतुः । रणवीरप्रेषितोऽयं नायकः क्रमेलकमधिरूढः समाययौ । आयातश्चायं पद्भ्यामेव मानसिंहः । उभावपि मिथो न पर्यचिनुतामिति पुरतो नायकस्तदनुगामी मानसिंहश्चेत्युभौ प्रासादाभिमुखं प्रयातौ ।

इदानीं कुमुदिनीचन्द्रौ सायन्तनं भोजनं विधाय सुन्दरचन्द्रप्रभाविराजितायां चन्द्रशालायामानन्दसान्द्रहृदयौ समुपविष्टौ बभूवतुः ।

तस्मिन्नेवावसरे नायकमानसिंहौ प्रासादप्रद्वारि समुपगम्य प्रतीहारम् ' भद्र ! प्रासादद्वारि कौचिद् विदेशागतौ समुपस्थितौ पुरुषौ महाराजं दिदृक्षेते ' इति निवेदय नरेन्द्रायेति ' निवेदयामासतुः । ' तावानीयेताम् ! ' इत्यभिधायायं प्रतीहारोऽभ्यन्तरं प्रविश्य प्रणम्य बद्धाञ्जलिः— ' अत्रभवन्तं साक्षात्कर्तुं कौचिद् वैदेशिकौ द्वारि स्थितौ स्तः ' इति नरेन्द्रं विज्ञापयामास । चन्द्रसिंहस्तौ प्रवेशयितुमभ्यन्तरे तमादिशत् । प्राप्तप्रभुनिदेशश्चायं दौवारिकः पुरुषाविमौ प्रावेशयदन्तः । द्वावपि चन्द्रसिंहं प्रणम्य विरचिताञ्जलिपुटावेकतः स्थितौ । तत्क्षणमेव चन्द्रसिंहो मानसिंहमभिज्ञाय समगादीत्— ' भ्रातर्मानसिंह ! कस्मीयस्येव समागमे त्वया स्वगुप्तगृहं समर्प्य मे तस्माद् भवद्ग्रहणकृत-

१ उपह्वरे-एकान्तस्थले । २ कन्दलः समूहः । ३ लक्ष्मीः । ४ कमलानि । ५ निलयं गृहम् । ६ वायुः । ७ जवनिका तिरस्करिणी । ८ विदेशादागतौ ।

गृहादपसर्तुं परमं साहाय्यं कृतमिति नाहं विस्मृतवानस्मि। कथय, बन्धो ? कुतस्त्वमागमनमिदानीम् ? कथञ्च संवृत्तमिदम् ? किं वृत्तमुपनीतवानसि ममानुजस्य ? अद्याहं सज्जी कृतवानस्मि सकलं सैन्यं गन्तुं तन्मोचनार्थम्।' इति।

मानसिंह । विजयतां महाराज । भ्राता रणवीरस्तु कस्यचन महात्मनो योगीन्द्रस्य महानुग्रहेण निर्विघ्नं बन्धनालयाद्विर्मुक्तोऽस्ति। तेनैव महानुभावेनाहमत्र तदुदन्तं भवते निवेदयितुं प्रेषितोऽस्मि।

चन्द्रसिंह । ( साश्चर्यम्। ) किं मदीयबन्धुर्मुक्तो बन्धनालयात् ? प्रभो ? कियन्तमुपकारमहं मन्ये भवताम् ?।

कथनमिदं निशम्य पार्श्वस्थायिना नायकेन तेन विस्मितमनसा पृष्टो मानसिंह— 'कस्य रणवीरस्य सम्बन्धिनीं वार्तां निवेदयसि ?' इति।

मानसिंह । महाराजानुजस्य श्रीरणवीरसिंहस्य।

श्रात्मन एव महाराजस्य वृत्तमुपश्रुत्यायं नायक प्रमुदितमना सन् श्रीचन्द्रसिंहमहाराजाय न्यवेदीत्— 'प्रभो ? अहमपि तस्यैव महाराजश्रीरणवीरसिंहस्य मुदन्तमुदन्तं निवेदयितुमायातोऽस्मीति।'

चन्द्रसिंह । एवम् ? कथय कथय किमस्ति वृत्तम् ?।

नायकः । भार्यया समं विशालं राज्यमुपलब्धं श्रीमता रणवीरसिंहनरेन्द्रेण ?

चन्द्रसिंह । [ सहर्षम्। ] अपि सत्यं कथयसि ? किं सत्यमिदं शृणोमि। उत स्वप्नोऽयम् ? ( स्वगतम्। ) नैव नैवायं स्वप्न ?। ( प्रकाशम्। ) भ्रातः ? कस्य राज्यं का च कन्या प्राप्ताऽमुना ?।

नायक । श्रमरकण्टकाधिपतिर्नरेन्द्रचक्रवर्ती महाराजश्रीरणजितसिंह स्वतनया रत्नप्रभा रणवीरेण समं विवाह्य कन्यादानेन सार्कं सकलं विशालं राज्यमस्मै वितीर्य निजमवशेषं वय परमेश्वराराधने न्यत्यापयितु वानप्रस्थाश्रममङ्गीचकार। महाराजश्रीरणवीरसिंहो भवन्तमभिवाद्य कुशलं पृष्टवान् समर्पितवांश्चेदं पत्रमपि श्रीमते दातुं मे। ( इति पत्रमर्पितवान्। )

चन्द्रसिंह । अहो धन्योऽसि विभो ? धन्योऽसि ?। अगम्या तव लीला ? नायक ? निजानुजस्य भाग्योदयबन्धनालयनिर्मुक्तस्वयो स्मारकरूपेण तुभ्य रत्नहारमिमं मानसिंहाय चेमां मणिमालामर्पयामि। इत्यभिधाय चन्द्रो निजकण्ठादवतार्य हारयुगलं मानसिंहाय नायकाय चेदं पारितोषिकरूपेण प्रदाय निजानुजलिखितं पत्रमवाचयत्। पत्रेऽस्मिन् कथं कारागृहान्मुक्त स्वयं कथञ्च राजकन्यया समं राज्यमुपलब्धमात्मनेति सविस्तरं वृत्तं लिखित्वा विलिख्य च— 'भ्रातृजायायै कुमुदिन्यै प्रणामं निवेद्याल्पीयसैवानेहसा[1] श्रीमतो दर्शनार्थमागमिष्यामि' इति लिखितं रणवीरेण। नरेन्द्रचक्रवर्ती संवृत्तो निजानुजमेति

---

1 अनेहसा कालेन।

विज्ञायास्य चन्द्रसिंहस्यात्मनि न ममौ गुरुः प्रहर्षः । दलमनुवाच्यायं निजवक्षसा समास्वजत् । अथैकं वीरमन्यागताविमौ यथोचितं परिचरितुमादिश्य स्वयमानन्दसागरतरङ्गे रिङ्गदन्तरङ्गोऽभूत् ।

तस्मिन् क्षणे कुमुदिनी ( याऽस्यागतं पुरुषद्वयमायातं निशम्य निकटवर्तिनि रङ्गमहालये गवाऽऽसीत् सेदानीं) वीरेण समं तत्पुरुषयुगलं गतमवलोक्य चन्द्रसिंहसमीपमुपस्थितवती । विचारतरङ्गैः प्रेङ्खोल्यमानमानसं चन्द्रं विभाव्य जगाद कुमुदिनी–' प्राणेश्वर ! किं विचिन्तयति भवान् ? अद्यौपसद्मखिलमानन्दमयमुदन्तजातमत्रभवता समुमालपतोस्तयोरस्यागतयोः । भ्राता श्रीरणवीरसिंहो बन्धनागाराद् विमुच्य चक्रवर्ती राजराजो बभूवेति मङ्गलमयेऽस्मिन् समये भृशमानन्दनीयमस्माभिः । तदपि न वेद्मि किमेवं विचारोर्मिमालानिमग्नो भवान् ? ' इति ।

कुमुदिनीनिगदितमाकर्ण्य विचारामन्दतन्द्राया उद्बुध्य चन्द्रः समभाषत ' प्रिये ? आनन्दसिन्धुतरङ्गेष्वेव निलीनोऽस्मि । सकललोकशङ्करस्य श्रीशङ्करस्याद्भुतलीलाविचिन्तने निर्लीनमभून्मे मनः । देवि ? अद्य मदीयहृदयमतिहर्षेण प्रफुल्लं विद्यते । ' इति ।

कुमुदिनी । प्राणवल्लभ ? भ्राता रणवीरसिंहेनाऽपि स्वानुरूपैव राजकन्योपलब्धा । अभिजानाम्यहं रत्नप्रभाम् । अतीवचतुरा रूपवती चेयं वर्तते । यथा श्रीरणवीरसिंहो बुद्धिमान् सुधनुर्धश्चास्ति तथैव राजकन्या रत्नप्रभाऽपि चतुरा बुद्धिमती चेयं विद्यते खलु ।

चन्द्रसिंहस्तु–' देवि ? अमन्दमानन्दमयं दिनमद्यतनं विद्यते ह्यमित्येहि चञ्चच्चारुचन्द्रिकाञ्चितचन्द्रमरीचिवीचिसम्पर्कशीतलायां चन्द्रशालामणिकुट्टिमभुवि समुपविशाव आवां चन्द्रमकाशे ' । इत्युदीर्य कुमुदिन्या सह प्रासादाग्रवर्तिनीं सर्वतोभद्राख्यसुन्दरचन्द्रशालामुपेत्य रम्ये रत्नजटितकाञ्चनपर्यङ्के पयोधिपयःफेननिभायां राजहंसपर्णनिर्जितवरायां रुचिरायां तूलशय्यायामुपविश्य सहर्षं सस्मितं सानुरागं वार्ताविनोदं वितेने ।

कुमुदिनी । प्राणेश्वर ? यथेयं चन्द्रमसश्चन्दनचन्द्रसंज्ञमहोदरशीतलतरकिरणसम्पर्केण हर्षनिकरस्वरान्वरा सती प्रणयमूर्छेव जायते कुमुदिनी तथैवाहमप्यद्य स्वनयनचकोरद्वन्द्वानन्दनस्य हृदयेश्वरस्य चन्द्रस्य वदनेन्दीवरनिर्गतं मधुरप्रियरसामृतं स्वादं स्वादं प्रणयमुग्धाऽस्मि खलु जाता । यथाहि सुधांशुकरस्पर्शेण द्रवति चन्द्रकान्तरत्नं तद्वदेव भवदीयकोमलकरसंसर्गेण रागातिरेकेण द्रवीभवति मे हृदयम् । यथा तु मृगाङ्कमालोकमानोऽपि न तृप्यति चकोराङ्गना तथैव खलु भवद्वदनेन्दुबिम्बं दर्शं दर्शं न तृप्याम्यहमपि । प्राणनाथ ? न खलु कोऽपि भवानेन्द्रजालिको यदेवं मायया मोहयतितरामिमामात्मप्रियाम् ? ।

चन्द्रसिंहः । अहमैन्द्रजालिकश्चेत् प्रतीये त्वया तदहमपि त्वां रूपतो मायाविनीं मोहिनीं मन्ये । कुमुदिनि ? नूनं काऽपि देवाङ्गनाऽसि त्वम् ! त्वयैवाहं सौभाग्यशाली कृतोऽस्मि खलु ? ।

१ वीचिस्तरङ्गः । २ चन्द्रसंज्ञः कर्पूरः । ३ सुधांशुश्चन्द्रमाः । ४ प्रेमातिशयेन ।

कुमुदिनी । धन्योऽसि नाथ ?? सम्यगुदीरित भवताषि ?? । प्राणप्रिय ? पत्यैव शोभते नारी । स्वामिन पीडयित्रीं धिगस्तु जायाम् ?? या हि सीमन्तिनी मनोवाक्काये परमभक्त्या पतिदेवमर्चयति सतत सएव सुचरित्रा भार्या परलोकेऽपि स्वप्राणनाथेन सहैव स्वर्गसुखमुप भुङ्क्ते ।

चन्द्रसिंह । धन्याऽसि, आर्यबाले ? धन्यासि ? दुर्लभा खलु त्वादृशी ससारे सुचरित्रा धर्मपत्नी । यदा त्वादृश्य सुचरित्रा योषा सकलेऽप्यार्यमण्डले समुदपत्स्येरन्, तदानीमेवास्या पुण्यार्यभूमेरभ्युदयो भविष्यति । देवि ? अतिक्रान्तेयमिदानीं बहुला रजनी । तदेहि, शयावहै साम्प्रतमावाम् ।

कुमुदिनी । नाथ ? नाथ समायाति मे निद्रा । न जाने किमिति मानसं मे चिन्ताकुल मिव जायते । मदीय हृदयमद्य कम्पत इव भयेन । किमप्यमङ्गल वृत्त घटितेति कोऽपि कथयतीव कर्णे ।

चन्द्रसिंह । प्रिये ? अनिमित्तमुपनत ते भयमिदम् । मा भैषीः ?? अस्य चन्द्रसिंहस्य-च्छत्रच्छायाया वर्तमाना त्वा कस्याऽपि मानवस्य वा, दानवस्य वा, देवस्यापि वा नास्ति शक्तिर्धर्षयितुमुद्वेजयितु वा ?? शेष्व सुखेन त्व मदुत्सङ्गे निजमुत्तमाङ्गं निधाय । जागरिष्यामि त्वदर्थमहमखिला रात्रिमपि । उपवेक्ष्यामि चाहमत्रैव त्वा पालयन् ? ।

कुमुदिनी । अस्या दास्या कृते निखिला रजनीं प्रजागरिष्यति किमु भवान् ? नैव ? न करणीयमिथ मदर्थम् ।

चन्द्रेण तु- ' प्रिये ? शपामि त्वामात्मना । सुख निद्राहि त्वम् ? ' इति निगद्य कुमुदिनी शायिता पर्यङ्के । तदङ्के मस्तक निधाय पल्यङ्के लुण्ठन्त्या एव कुमुदिन्या क्षणेनाभिमुखी-बभूव निद्रादेवी । निद्राणामवलोक्य कुमुदिनीं चन्द्र शनैस्तस्या मस्तकं तूलिकान्तर्वर्तिनि मृदुलोपधाने विन्यस्य स्वय पर्य्यङ्कान्तरे प्रबुध्यन्नेव निषण्णो निष्कृपकृपाणपाणि । अथ सपाते निशीथसमये निषण्णस्यास्य चन्द्रसिंहस्य समाक्रान्तमिव बलात् नयनयुगलं तन्द्रया । तस्मिन्नेव क्षणे स्वसहचरेण कामसिंहेन साकं क्रूरसिंहो नि शब्दपाद शनैः प्रासादस्य पृष्ठवर्तिना महालयकुड्येनाभ्यन्तरं प्रविवेश । चन्द्रसिंहस्तु तन्द्राक्रान्ततया घूर्ण्यमानशीर्षोऽन्ततो बलात्कृत्य पर्यङ्के निपातितो निद्रादेव्या । अमुमवसरमुपलभ्योभावपि दैत्यिनौ दुरात्मानौ प्रसुप्तां कुमुदिनीं तत्पर्यङ्कसहितामेव समुत्क्षिप्य • यथागतवर्त्मना प्रस्थितौ । प्रासादे प्रादीप्यत प्रबलप्रकाश प्रदीपक । आसीदवितरा मूर्च्छित स्वप्नावस्थायामेव चन्द्रसिंह । अद्राक्षीच्चायौ स्वप्ने-' यदयं कुमुदिन्या सह सुन्दरायामेकस्या नौकायाम धिरुह्य चन्द्रवतीतरङ्गिण्या पर्यटति । तनुते चानया सममनेकविध वार्ताविनोदम् । तत्रान्तरे कुतोऽपि कश्चित् कालभन्दक इव कृष्णवर्ण पुरुष समुपेत्य तरणिन कुमुदिनीं सहसा समुद्धायापसृत । ' इतीदृशं भयङ्करं दृश्यं स्वप्नदशायामेव पश्यतोऽस्य चन्द्रस्य निद्राभङ्गो

१ शय्या । २ पातु मेहनी । ३ तरणिर्नौका ।

जातः । 'तिष्ठ रे दुष्टहतक ? तिष्ठ ।' इत्यभिधाय स्वचन्द्रहासमेव गृहीत्वा समुपविश्य चाभितो निरीक्षितुमारेभे । यत्र पर्यङ्के प्रसुप्ताऽभवत् कुमुदिनी तत्पर्यङ्कमहितामनवलोक्यैव तामकस्मादयं व्याकुलीभूय– 'हा हन्त ? किं सत्योऽयं संजातः स्वप्नो मे ? किं कोऽपि दुरात्माऽपहृतवान् मम कुमुदिनीम् ? कुमुदिनि ? क गतासि ननु त्वम् ?' इत्युच्चैः प्रोच्य तारमाचुक्रोश । तदाक्रोशश्रवणकालमेव प्रहरिदौवारिका भिया कम्पमानशरीराः सहसा शयन-मन्दिरमभिद्रुत्य प्रविष्टाः । तानवलोक्यैव चन्द्रोऽवदत्– 'अये ? गत्वा कोऽपि झटिति मन्त्रिवर्यमाकारयतु । राजपुत्रीं कश्चिन् नृशंसोऽपहृतवान् । किमिदमापतितमकस्मात् ? हा प्रिये कुमुदिनि ? कृतमेव संवृत्तं तवोदितम् । प्रसुप्तोऽभूदयं मन्दभाग्यः । नाभूवं शक्तस्त्वां संरक्षितुम् । हन्त ? कुत्रेदानीं त्वां गवेषयामि ?' इतीरयित्वा मूर्छितोऽभवत् ।

क्षणेनैव तत्रोपस्थितो मन्त्रिपुङ्गवः । 'कथमियं भयङ्करी घटना घटिते'ति सानुसन्धा-नमयं परीक्षितुं प्रावर्तत । सर्वतो दिक्षु कुमुदिनीशोधनार्थं चाराः प्रधाविताश्च तेन । स्यापि-श्रयाय स्वल्पकमलानं जलमतुलं चन्द्रसिंहशिरसि । तत्प्रभावेण सद्य एवोत्थायोपविश्य तारस्वरमभाषिष्ट– 'अये ? किमिति प्राणेवं पीडयति भवान् ? भस्मीभवति शरीरमिदं मे संज्वर्य । हा हन्त ? क गता मे कुमुदिनी ? प्रिये ? ममानवधानतायाः फलमिदमुपपन्नम् । हा ? कदाधुना त्वा द्रक्ष्यामि ?' इति ।

पर्यायमन्त्रिवरेण धीप्रतापसिंहेन चन्द्रसिंहवपुषि हस्तं विन्यस्य समगादि– 'महाराज ? प्रेषिताः परितो दिक्षु वीरवराः । सद्य एव परावर्तिष्यन्ते कुमुदिनीमादायामी । समाश्व-सिहि राजन् ? समाश्वसिहि । मैवं [1]व्याकुलीभव ?' इति ।

'किमुपलप्स्यते मा प्रिया कुमुदिनी ?' इत्युक्त्वा चन्द्रः समुत्थाय प्रधानहस्तं गृहीत्वा व्याजहार– "मन्त्रिवर्य ? क्वास्ति मे कुमुदिनी ? इदानीमेव कुतोऽपि विचित्य तामानयतु भवान् । येनासहलेयमिति जानाम्यहम् । अद्राक्षमहमसुं दुरात्मानं क्रूरमिदम् । अचिरादेवैनोऽयं भवेन्नृशंसः । निगृह्यतामेतादृशो मत्तः । मन्त्रिवर्य ? स्वयं गत्वा भवाननुसंधाय संरक्ष्य चानयतु सत्वरं राजनन्दिनीम् । हा प्राणप्रिये ? क गतासि ननु ?' इत्याख्याय पुनरपि विचेतनो भूत्वाऽयं निपपात भूतले । पश्चात् धीरान् परिचर्यायामस्य नियुज्य कतिभिश्चन वीरभटैरनुगम्यमानो निर्जगाम स्वयं कुमुदिनीमार्गणाय मन्त्रिपुङ्गवः ।

इदानीमरुणरागरञ्जिता जातेयं पुरन्दरदिक्सुन्दरी । भगवान् प्रभाकरो नितान्तं कुरुविन्दकुड्-मलकान्तिस्तरैः काञ्चनवर्णविनिर्मितैः किरणकन्दलैः सकलं दिगन्तरालं प्रभासयितुमुद्यतः । तथापि नोपलब्धा मार्गणापि कुमुदिन्याः । किञ्चित्कालानन्तरं शून्यप्रायेऽस्मिन् प्रासादे शोकम्लानवदनाम्बुजः प्रविवेश प्रधानवर्यः श्रीप्रतापसिंहः । प्रतापसिंहं समालोक्यैव विक्षिप्त

---

१ भाषया 'गुलाबजल' इति ख्यातम् । २ 'कुरविन्दो' भाषया 'लालमणि' इति ख्यातः । ३ कुङ्कुमः केसर. ।

इवायं चन्द्रः समुत्थाय पृष्टवान्–' मन्त्रिवर्य ? उपानीता किमु विचित्य राजपुत्री ? किम् ? किमपि नोदीर्यते धीमता ? वदतु वदतु सत्वरं भवान् ? ' इति।

**प्रतापसिंहः**। राजन् ? धनिमात्र गवेषितापि नोपलभ्यते राजपुत्री।

चन्द्रसिंहस्तु–' धिग् मा विमूढम्॥ किं तदा त्यक्तवतीयं हतभाग्यमेनं कुमुदिनी ? व्यर्थं मम जीवनमिदानीं तया विना। अयि सुबुद्धिशालिन् मन्त्रिमणे ? पालनीयमिदं राज्यं धीमता। गच्छाम्यहमात्मप्रियामन्वेष्टुम् ? ' इति व्याहृत्य चलितुमारभत। गच्छन्तममुं निरुध्य प्रोवाच प्रतापसिंहः–' देव ? न क्रियतां साहसम्। किमिति त्याज्यं राज्यं भवता ? निश्चितमेव प्राप्स्यते कुमुदिनी। प्राहिणवमहं निजचीरवरान् दुरात्मनोऽस्य गुप्तगृहाभिमुखं मार्गयितुमिमाम्। अधुनैव निवर्तिष्यन्ते कुमुदिनीमन्विष्यानीयामी वीराः। तदाकलय्य शान्तिं राज्यकर्मणि समवधीयतां भवतेति।'

**चन्द्रः**। ( साक्रोशम् ) मन्त्रिवर्य ? कुमुदिनीं विना राज्येऽस्मिन्निवासो मे निरर्थक। तदर्थमहं वनाद् वनान्तरं भ्रमिष्यामि, आनेष्यामि च तां विचित्यैव। तां विचेतुमहमम्बिहेति-तैतिष्वपि समुत्पतेयम्, पातालमपि प्रविशेयम्, सागरमपि सन्तरेयम्; परमन्ते समानेष्याम्येव कुतोऽपि निजप्राणप्रियामिमाम्!

अत्रान्तरे कुमुदिनीमार्गणाय गुप्तगृहाभिमुखं प्रेषिता वीरवरा अपि निराशमनसो मलिन-मुखास्तत्रोपेत्य प्रधानं व्यजिज्ञपन्–' श्रीमन् ? भवन्निर्देशानुसारं वयं गुप्तगृहमार्गं मार्गयित्वा तदभ्यन्तरं प्रविश्य स्थूलदीपिका प्रज्वाल्य सर्वतस्तदन्तर्भागे सानुसंधानं परिभ्रान्तवन्तः किन्तु नादृश्यत कोऽपि जनोऽपि तत्र। ' इति तदीयमुखादाकर्ण्य प्रवृत्तिं.ततो गन्तुं तानादिश्यन्मन्त्रिसत्तमः। गुप्तगृहेऽपि नास्ति कुमुदिनीति निशम्याधिकमाकुलीभूय चन्द्रसिंहः पृष्टवान् प्रधानम्–' मन्त्रिवर्य ? किं गुप्तगृहेऽपि न वर्तते मम कुमुदिनी ? ' इति।

**प्रतापसिंहः**। नास्ति तत्रापि राजेन्द्र ?।

चन्द्रसिंहः। ( सोन्मादविक्षेपम्। ) किमिति नास्ति ? पश्य पश्य प्रधानवर्य ? पश्यैत। आह्वयतीव मा कुमुदिनी मे। किमिति निरर्थं मामत्र निरुणद्धि भवान् ? आर्यप्रतापसिंह? पश्य पश्य समुत्पतति वियति कुमुदिनीयं मे। अये ? इदानीमेव पतिष्यतीति विभावयामि। प्रिये ? मा भैषीः। एषोऽहं समायातस्त्वा गगनान्तराल एवावलम्बितुम्। ' इति निगद्य विक्षिप्तो भूत्वाऽयं हेलया साभिनयं हस्तमुद्यम्यान्तरिक्षाभिमुखं निरीक्षमाणः पुनरपि निजगाद मन्त्रि-वरम् ' आर्य ? नमस्ते। गच्छाम्यहमिदानीम् ? ' इति प्रोच्य प्रतिवचनमनपेक्षमाण एव तूर्णं समुच्चलितः। राजकुमारस्येदृशीं दशामवलोक्य संभ्रान्तमना प्रतापसिंहश्चन्द्रमनुधाव्य कथं कथंचिदभिगृह्य समवरुध्य धावरीश्वरस्वरेण ' राजन् ? न शोभते कृत्यमिदं श्रीमतः। परिहसिष्यति जनो मोदिष्यते रिपुगण। किं दारार्थं समुचितो राज्यत्यागः ? अननुगुणमिदं कृत्यं भवादृशो बुद्धिशालिनो नरेन्द्रस्य। कुतोऽपि विचित्य समानेष्यामः कुमुदिनीम्। न

१ हेतिरञ्जिषु ज्वालामालाषु। " हेतिर्ज्वालेऽनुरायुधम्। " इति वैजयन्ती।

यश्चैवं भवतु यत्रैव लभ्येत सा ॥ अन्यथा ततोऽप्यधिकसुन्दरीं राजेन्द्रनन्दिनीमानीय समर्पयिष्यामो वयम्। तन्मनसि शान्तिराधीयतां भवतेति।'

प्रतापसिंहस्यैतदीं कथितमाकर्ण्य मनाक् संज्ञामाप चन्द्रः किन्तु दुःखातिरेकतया चित्तस्य कन्यान्तरनामाकर्णनेन चाप्यतिवृद्धमन्युरगादीदृयम् 'आर्यप्रतापसिंह ? न शोभते भाषणमिदं भवन्मुखत.। नाद्यापि खलु भवान् सम्यगभिजानाति चन्द्रमिमम् ? एकपत्नीव्रतधारी पुरुषोऽस्म्यहं खलु ? मन्त्रिवर ? किं मामपि निजप्राणप्रियां पत्नीं परिहायापरां ललनां कुदृशा निरीक्षयतो दुर्भागिनो जनानिव मन्यते भवान् ? नैव नैव नास्म्यहं तादृशो नराधमः ? ? मन्त्रिपुङ्गव ? नैवाहं नितान्तमपि कामये कन्यामन्याम्। बहिश्चराः प्राणा मे कुमुदिनीयम्। जीवितमियं मे। हन्त ? तां विना क्षणमपि निजजीवितं न शक्नोमि धारयितुम्। हृदयदयिताया मां किमिति विश्लेषयति भवान् ? ' इति ब्रुवन्नेव पुनरपि विक्षिप्तोऽभवदसौ। अकस्मादाचुक्रोश ततोऽयम्- 'रूपोऽहमायातो देवि ! तव एव दुरात्मानममुं विदार्य त्वां रक्षामि ! ( विमृश्य ) प्रिये कुमुदिनि ! पश्य मन्दधीयोऽयं स्थविरो मन्त्रिवरो हि त्वां विस्मर्तुमुपदिशति माम्( विहस्य ) परं नैव नैव। अपदेशेनामुना प्रत्युत हृदयं मे शमनातिरिक्तं त्वदन्तिकमागन्तुमधिकमाकुलीभवति। ( प्रधानाभिमुखीभूय ) मन्त्रिवर ! अप्यभिजानासि प्रेमागमम् ! नूनम्, नाभिजानास्येव भवान् 'किमिदं प्रेमतत्त्वमिति ! ' शृणु कथयामि ते प्रेम दाम्पत्यस्य। इति विविधाभिनयं हस्तेनाभिव्यञ्जयन्नुवाच श्लोकममुम्—

" अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्-
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ "

[ उत्तररामचरिते ]

किं युद्धमिदानीं बुद्धिमता भवता ? अनुजानीहि मामधुना। विप्रकृष्टान्तरा संवृत्ता मे कुमुदिनी।' इति। 'राजेन्द्र ? किं यदा गच्छन्नेवान्ते ?' इति संकल्प्य वृद्धो मन्त्री रोदितुमुपाक्रमत। प्रधानेनैवमन्यो नवइन्त्वमयुक्तौघमालोक्य प्रणयमूढोऽयं चन्द्रसिंहस्तदीयं वाग्वज्रं निजवसनाञ्चलेन परिमृज्य व्याजहार 'किमिति विलप्यते भवता ! मन्त्रिसत्तम ! न विधीयतामन्तरायो मम कार्येषु। अनुमन्यस्व। साधयाम्यहमिदानीम्।' इत्यभिधाय कमप्यसंभाव्यमभिज्ञगद्धृत्येन सत्वरमश्वरः प्रासादादविष्कान्तः। निर्गतमनुमालोक्य मुमूर्छ मन्त्रिवरः। पश्यतामेव सर्वेषां नयनान्तरितो बभूवायं प्रणयमुग्धश्चन्द्रः। वयस्याः सेवकाः प्रधानं शोकशोच्यौत्सराचरन्। मुहूर्तानन्तरमुपगतचेतनो मन्त्रिवरो राजकुमारं गजमस्त्रेणैव मुक्तकण्ठं विललाप। अथ कथं कथमपि शान्तं विधायामो स्वान्तं

१ विक्षोभयति। २ हत्या। ३ दृश्य वध्य। ४ 'शान्तं हन्तानेन मनः।

नक्तमागतौ तौ नायकमानसिंहौ तत्राकारयत्। क्षणेनैवैतौ प्रासादं प्रविश्य चन्द्रसिंहनिर्गमन वृत्तान्तमुपश्रुत्य तु व्याकुलौ जातौ।

अथैतदुदन्तनिवेदकं पत्रमेकं विलिख्य मन्त्रिवरो रणवीरसकाशे नेतुमादिशन्मानसिंह- मर्पयित्वा तत् ।मानसिंहो नायकेन समं शोकातुरहृदय पत्रमादायामरकण्टकवर्त्मना प्रतस्थे।

इतस्तु पर्यङ्कसहितामुत्क्षिप्य कुमुदिनीमिमौ नृशंसौ प्रच्छन्नमार्गेण विजयनगराद् बहिर्निर्गम्य तदीयसीमाप्रदेशमुल्लङ्घ्य तिर्यग्वर्त्मना भयानकमेकं महारण्यमासेदतु। आसीदधुना चरमप्रहरोऽस्य रजन्या। समयेऽस्मिन् नक्तञ्चराविमौ कस्यचिन्महीरुहस्य तले कुमुदिनीपर्यङ्कं निधाय गुप्तं मन्त्रयितु प्रारभेताम्। दुरात्मा क्रूरसिंह कुमुदिनीमालोक्य हर्षेण पुलकितगात्र सवृत्य–'कदाऽधुना प्रबुध्येदियं कुमुदिनी?' इति प्रतीक्षाञ्चक्रे। चर मरजनीकालवाहिना शीतलेन गन्धवहेन वायुना प्रबुध्य कुमुदिनी सहसा च चमत्कृत्य परितो निभालयन्ती–'आत्मानं कुहचिन्निर्जने वने सम्मुखस्थितेन परिचितपुरुषयुगलेनाधिष्ठि तम्' विलोकितवती। पुरुषद्वयमदो विलोक्य भिया वेपितुमारभत कुमुदिनी। परमन्ते साहसमाधाय तौ पृष्टवती–'अये? कौ युवां कथञ्च मामिहानीतवन्तौ भवन्तौ' इति।

तस्या वचनं निशम्य तत्क्षणमेव तदन्तिकमुपेत्य सस्मितं समभाषत क्रूरः–'कुमुदिनि! मा स्म व्याकुलीभू। त्वां सुखयितुमेव सरणिरियमुररीकृता मया। अहमेव त्वामत्र समा नयम्।' इति। नृशंसस्य क्रूरसिंहस्य शब्दमाकर्ण्य–'को नु समाहृतवानात्मानम्'– इति विदितवतीयम्। विचिन्तितवती चेयम् 'कथमस्य पापिनः पाणिपञ्जराद् विमुच्ये येति।' चिन्तैकतानमानसामिमामालोक्य प्रोवाच क्रूर–'सुन्दरि? किन्नु चिन्तयसि? स्वच्छन्दापेक्षयाप्यधिकं त्वामहं सुखीकरिष्यामि। तदखिलां चिन्तामपहायागच्छ मदीयं निवासस्थानम्।' इति।

कुमुदिनी। (सावेशम्।) चण्डाल? दह्यतामयं तव निवासः?? नाहमेष्यामि त्वया सह कोटिशोऽप्युपायैः। पापिष्ठ? नाहमभिलषामि त्वत् सुखम्। सृष्टाऽस्म्यहं त्वया णेश्वरार्थमेव केवलमीश्वरेण। तदीये सुखे सुखं दुःखे च दुःखमहं मन्ये।

क्रूरः। कुमुदिनि! यदोपतिष्ठते लक्ष्मीस्तिलकं विधातुं तदा वदनप्रक्षालनाय गच्छन्नरो विगीयते मूढ इति। तदवगच्छ सैमासेन। परिणमय निजपरामर्शम्। नोचेदन्ते त्वयाऽङ्गी- करणीयमेव स्यान्मे वचनम्??।

कुमुदिनी। नराधम? मनोरथो मम देवाधिदेवेनापि न शक्येत परिवर्तयितुं तव कियती मात्रा क्षोदीयसस्ते?? त्वत्प्राणेश्वरचरणपरिचर्यामेवाहं स्वर्गसुखमुपभुञ्जे। प्राणा त्ययेऽपि न विस्मरिष्यामि स्वहृदयेशम्? नैव फलिष्यति तवेष्टम्।

क्रूरः। सुन्दरि? किमिति तिरस्करोषि माम्? विमूढोऽस्म्यहं तव प्रेम्णा? अनुगृहाण। अङ्गीकुरु माम्?।

---

१ अन्त्ययाम। २ स्तोतुम्। ३ मुत्पादयिष्यामि। ४ निन्द्यते। ५ संक्षेपेन। ६ अतिशुद्रस्य।

कुमुदिनी। दुरापसद ? किमिति प्रवृत्तोऽसि पापाचरणे ? अवेहि मूढ ? अवेहि। अपसारय निजमनसोऽमूमीदृशीं कलुषभावनाम्।

क्रूरः। अयि मोदिनि ? नाहं शृणोमि तवोपदिष्टम्। केवलं तव प्रेमागमेव याचे। इन्दुमुखि ? अन्धोऽहं जातस्त्वामवलोक्य ? ?।

कुमुदिनी। चण्डाल ? किं विमुग्धोऽसि खलु स्वमेषु मदङ्गेषु ?

क्रूरः। आम् ? तदेव सर्वाङ्गसुन्दरं तव वपुरवलोक्यान्धोऽभवमहम्।

कुमुदिनी। (विमृश्य) आम् ? भवतु ? नृशंस ? अपि विद्यते किमपि शस्त्रं त्वदन्तिके ?।

क्रूरः–। आम्। केवलमसिधेनुकैव वर्तते मदुपकण्ठमिदानीम्।

कुमुदिनी। तदर्पय मह्यमिमां छुरिकाम्।

क्रूरः। किम् ? किं प्रयोजनमनया ते ?।

कुमुदिनी। यस्मिन्मम सुन्दरवपुषि मुग्धोऽसि तदखिलं मत्कलेवरं त्वदायत्तं करोमि।

क्रूरः। विदितं सुन्दरि ? विदितं खलु मया॥ आत्महत्यां चिकीर्षसि मदसिपुत्रिकया।

कुमुदिनी। हा हन्त ? शस्त्रमपि नास्ति किमपि सम्प्रति मदन्तिके। अन्यथा त्वामहं प्रादर्शयिष्यम्– 'वीराङ्गनां संत्रास्य किन्तु फलं लभ्यत इति ?।' क्रूरसिंहस्तु– 'किं तदा नैवाङ्गीकरोषि त्वं माम् ?' इति समुदीर्य सहसा कुमुदिनीमभिगृह्य तन्नासायां मूर्च्छावहमौषधं निक्षिप्य मूर्च्छितामकार्षीदिमाम्। अथोभावपि दुरापसदौ कुमुदिनीपर्यङ्कं शकलीकृत्य प्रक्षिप्य चामुं क्वापि तृणाच्छन्नकूपे विचेतनां कुमुदिनीमादाय ततः प्रस्थितौ मध्यन्दिने निजशिबिरमाजग्मतुः। परं शिबिरे नाधिकं विरेमतुरिमौ। शिबिरात् पवनवेगगामि हययुगलमादाय समारोप्य चैतत्पृष्ठे कुमुदिनीं प्रचलितौ तौ। विकटेनाटवीवर्त्मना पञ्चदशगव्यूतिमितमध्वानमतीत्य सायंसमये कस्यचिद् भग्नप्रायस्य महादुर्गस्यान्तः समायातौ। आसीदतिसमृद्धिशालि पुरा दुर्गमिदम्; परमिदानीं भुजङ्गप्रयातवदतिक्राम्यतः कालचक्रस्य प्रभावेण जीर्णतामापद्यतामिदमदृश्यत।

श्रीगर्भकल्पस्यास्य दुर्गस्य दक्षिणमेकं खण्डं कामसिंहेन समं प्रविश्य क्रूरसिंहो निःसंज्ञां कुमुदिनीं चारके निरुद्धवान्। तस्मिंश्चिरपरिचितं काञ्चन नवयौवनां ललनां तदुपकण्ठमस्थापयदसौ। कुमुदिनीसेवायां नियुक्ता यनितेयमत्र दुर्गे चिरन्तनकालाद्विवसति। अथ प्रत्यागतचेतनां विधातुं कुमुदिनीं मूर्च्छापहारकं द्रव्यं आघ्रापयित्वा प्रबोधयदयं क्रूरः। तदनु बहिरागत्यायं तत्क्षणमेव कामसिंहं स्वान् कतिपयाननुचराननेतुं शिबिरं प्राहिणोत्।

अदर्शनयामेव त्रियामायां कामसिंहोऽयं शिबिरादनुचरान् समानीयोपतस्थे। आयातानिमान् सेवकानयं क्रूरसिंहो दुर्गद्वारविदीर्णान् परिम्लानप्रियगम्भीरां कर्तुमाज्ञप्तवान्। अनन्तरमेते सेवकजनकर्मणि परिधायाश्वां मदान्धा शाटानि निक्षिप्य प्रक्षालितानि जरठेन। निरन्तरमरण्ये परिसरे भ्राम्यन्तमानं कृतानुं कर्तुं यथाकारनिर्देशं दासेरकाः कतिपये

काष्ठानि निक्षेप्तुं नियुक्तास्तेन । आदिष्टाश्चानवरतं दुर्गमिदं निपुणमुपरक्षितुममी । इत्थमनिशं परिखायामस्यां प्रादीप्यततरां धूमध्वानुः । कोऽपि चेद्वरो दुर्गान्तः प्रवेष्टुमवधारयेत्तदाऽमुष्य देदीप्यमानानलज्वालाजटालपरिखोल्लङ्घनादृते दुःशकमभ्यन्तरे गमनम् । दुर्गान्तः प्रवेशमार्गं केवलं क्रूरसिंहः कामसिंहादयश्च कतिपये वीरा एव समवागच्छन् । नान्यः कोऽपि व्यजानादिमं पन्थानम् । इत्थमखिलं परिखाप्रबंधं विधाय सुरङ्गया[1] दुर्गं प्रविश्य क्रूरसिंहः कुमुदिनीमतिशोकदशायामासीनामपश्यत् ।

बहुविधमसौ कुमुदिनीं समबूबुधत् परं न किमपि तदीयकथनमूरीचकार कुमुदिनी । भृतितरामपमानितोऽयं नृशंसोऽनया राजतनयया । अकृतकार्यो भूत्वा स्वचातुर्ये क्रूरोऽयं कुमुदिन्यै पाण्मासिकमवधिं दत्वा– ' तदवधौ यदि न परिवर्तयसि निजविचारं तर्हि विवशेन मया निर्घृणमन्ते कृत्यमाचरिष्यते ' इति तामभिधाय तत्सेवायां नियुक्तां प्रमदां बहुविधं विशेषं सूचयित्वा कामसिंहेन समं शिबिरमभिप्रतस्थे ।

प्रस्थिते तस्मिन् सेवायां नियुक्ता वनिताऽसौ कुमुदिनीं समाश्वासयत् । कारायां निरुद्धा कुमुदिनी क्षणे क्षणे स्मारं स्मारं चन्द्रसिंहं विलपति रौति तदन्तिकवर्तिन्या रमण्या हृदयं द्रवीभूतम् । सा ह्यनलं सान्त्वनामयं वचनं कथितवती–'सखि ? किमिति रोरुद्यते ? निरन्तरं चक्रारपङ्क्तिरिव परिभ्रमति भाग्यचक्रमाला । अन्ते सत्यमेव विजयते नानृतम् । पाप्मनां फलमवश्यमेव समर्पयति प्रभुः पापिने तत्समाश्वसिहि' इति ।

इत्थं युवतिरियं कुमुदिनीमाश्वासयति स्म । मल्पीयोभिरहोभिरेव तरुण्या सहानया द्रढीयान् स्नेहोऽजायत कुमुदिन्याः । मुहुर्मुहुरस्याः प्रमदाया आश्वासनैर्मनाक् कुमुदिनी शान्तिमाकरय्य समयं गमयति स्म । अथैकदा प्रसङ्गतः पृष्टवती प्रमदामेनां कुमुदिनी– ' प्रियसखि ? का त्वम् ? किमर्थंचेह निदिष्टाऽसि ? क. सम्बन्धस्तवामुना नृशंसेन ? भाषणसौजन्येनामुना तव ' काऽपि त्वं महोच्चकुलजाता रत्नमसीति ' प्रत्येमि । विज्ञापय मामखिलं निजरहस्यम् । येन त्वदीयसुखदुःखभागिनी भवेयमहम् । ' इति ।

कुमुदिनीवचनमुपश्रुत्य वनिताया अस्या वदनेन्दुमण्डलं शोककलङ्कलेखयाऽङ्कितमिव जातम् । परमियमात्मभावं संवृण्वाना समभाषत कुमुदिनीम्– ' सखि ? अतीवकरुणाजनकं मम जीवनवृत्तम् । हला कुमुदिनि ? अवजितमेरसि चेन्मदीयं जीवनवृत्तं श्रावयामि त्वामखिलम् ' इति समाख्याय निजवृत्तान्तमाख्यातुमुपक्रान्तवती ।

' अस्ति सूर्यपुरं नाम राजनगरम् । यदध्यक्षस्य क्रूरसिंहस्य पिता महाराजश्रीसूर्यसिंहो भूपतिः । मदीयजनकोऽपि सूर्यपुरे न्यवात्सीत् । आसमहं तस्यैकमात्रं पुत्रीति परमप्रेमपात्रमहमासमपित्रोः । महाराजश्रीसूर्यसिंहो धर्मात्मा पुण्यशाली चाभून्नृपः । तदीयराज्ये सर्वथा सुखीबभूव प्रजामण्डलम् । पञ्चदशवर्षदेश्याऽभवमहम् । ' विमलेति ' गुरुभिः कृतनामधेया । परमानन्देन न्यवसमहं निजपित्रोः सविधे । अथैकदा राजकुमारश्रीक्रूरसिंहस्तुरङ्ग-

[1] सुरङ्गा–भूम्यन्तर्गतखनितमार्गविशेषः । २ अवगन्तुमिच्छसि ।

मारूढो मम वेश्मवर्त्मना प्रयाति स्म। तदानीमहं स्वगृहावग्रहणीनिकटमतिष्ठमिति परस्परमावयोश्चाक्षुषं[3] समभवत्। तद्रूपेणाहं मम रूपेण चायमपि विमुग्धः। अतः प्रत्यहमयं मम गृहमार्गेण गच्छति स्म। शनैः शनैरसौ ममावसथे[4]ऽपि यातायातमकरोत्। स्वल्पेनैव कालेनोभावप्यावां मिथोऽचीकमावहि[5]।

इत्थं शनैरावयोश्चाक्षुषी प्रीतिः समवर्धत। गच्छता कालेन वृत्तान्तोऽयं मदीयपितृभ्यां विदितोऽभूदिति स त्वरमेव पिता मे महाराजश्रीसूर्यसिंहस्य प्रधानमचिवमाहूय निजगाद—'मन्त्रिवर्य! राजकुमारः श्रीकूरसिंहो मदीयतनयां विमलां कामयते। तद् भद्रं स्याद्यदि द्वयोरेतयोः परिणयसम्बन्धो भवेदिति।' अथ प्रधानः प्रासादमुपगम्य रहसि कूरसिंहं विषयेऽस्मिन्नन्वयुङ्क्त। तेन चाङ्गीकृतमिदं विवाहमङ्गलं मया सह। वृत्तान्तमिमं न्यवेदयन्महाराजाय मन्त्रिवरः। कन्या याचिता मज्जनकान्तिके महाराजेन। अथाङ्गीकृत्य तद् याचनं मम जनयिता[6] पुष्कलद्रव्यव्ययेनामुना कूरसिंहेन समं मामुदवाहयत्। विवाहानन्तरमावां परस्परमतिप्रेम्णाऽकामयावहि। कूरसिंहस्तु मामवलोक्य विक्षिप्त इव सदा मदन्तिकमेव समतिष्ठत। अनिशमसौ मम कथनानुकूलमाचरति स्म। किन्तु-हन्त! अन्ते तेनैव कूरसिंहेनेदृशी विहिताऽस्ति मे दुर्दशा!' इति समुदीर्य दीर्घमुष्णञ्च निरश्वसद् विमला। अथ पुनरपि प्रोक्तवतीयम्—

इत्थं संसरति समये पूर्वजननकृतकर्मविपाकवशेनामरकण्टकाधिपतिर्वीरणजितसिंहनरेन्द्रो राज्यमस्माकमाक्रम्य मदीयश्वशुरं निर्जित्य तद्राज्यं स्वहस्तगतं विदधौ। युद्धसमये समभवमहं निजपितृगृहे। तत्र स्थिताऽहमहर्निशं स्वहृदयेश्वरस्य श्वशुरस्य च विजयो भूयादिति परमेश्वरं श्रीशङ्करदेवमभ्यर्थयाञ्चक्रे। अथ समाप्तं युद्धम्। मदीयप्राणेश्वर-श्वशुरश्चोभौ युधि पराजितौ भूत्वा निजप्राणरक्षणार्थं रणाङ्गनादपसृतौ। स्वप्राणनाथस्यापसरणेन विलपितुमतिमात्रमहं प्राक्रमे। तदीयविरहेण क्षणमपि शान्तिर्मे हृदये नाजायतेति भृशमहं क्षामशरीरा[7]ऽभवं दिने दिने। कथं कथमपि दिनान्यनैषम्। अत्रान्तरे पुनरापतितं ममोपरि दुःखमेकम्। कालवशं गतौ मदीयमातापितरावकस्मादिति निराश्रिताऽस्मि जाता। आसीत्तदानीमष्टादशवर्षकल्पं ममायुः। संजाताहमेकाकिनी। कोऽपि नावशिष्टो मदन्तिके सान्त्वयिता मे इति मविर्वाप्सरमहं स्मारं स्मारं कूरसिंहं व्यलपम्। 'अहह? अन्तिमसमये साक्षात्कर्तुमपि न शक्तो माममयम्। हा हन्त? कथमधुना दिनानि गमयानि?' इति चिन्तापरवशाऽहं सर्वदा शोकाकुलचित्ता स्थितवती। इत्यमतीताः पञ्च संवत्सराः।

अथैकदा सायंसमये स्वगृहवातायने स्थित्वा विचिन्तयन्ती यावदहं नगरवीथिकायां दृग्वलं प्राहिणवं तावदेव मदीयनयनातिथिर्बभूवैकोऽश्वारोहः। यद्यपि सादी समाच्छन्नवेषोऽप्यासीत्तदपि तत्क्षणमेवाहं तं कूरसिंह एवासाविति पर्यचैषम्। तमभिज्ञायाहं तत्काल-

१ गृहमार्गेण। २ गृहावग्रहणी देहली। ३ दृग्गोचरत्वम् ४ आवसथे गृहे। ५ अन्योन्यं कामयावहि। ६ पिता। ७ कृशदेहा। ८ प्रति दिनम्।

मेवाधस्तादवातरम् । क्रूरसिंहोऽपि मदन्वेषणमागमत् । तमहं कण्ठग्राहमालिङ्ग्य प्रारुदम् । ततः सान्त्वयन् मामवददसौ– ' प्रिये ? किमिति रुद्यते ? त्वा नेतुमेवाहं समायातोऽस्मि सम्प्रति प्रच्छन्नवेषेण । तदेहि, सज्जीभव सत्वरं मया सहागन्तुम् । ' इतीत्थं तदीयवचनमुपश्रुत्याहमनितरां प्रमुदितान्तरङ्गा निजनिवेतनादनर्घाणि वस्तूनि समादाय गृहं सम्मुच्य तेन समं निर्गता । मामादायासौ महारण्यवर्त्मना प्रतस्थे । गच्छन्तावावां चतुर्थेऽहनि भयानकमेकमरण्यमुपागच्छाव यत्रासीत्क्रूरसिंहस्य निवासस्थलम् । तत्रैकस्मिन् भग्नप्रायस्य महालयस्याधोवर्तिनि गुप्तगृहे स्थापिताऽहम् । निजवीरमटभार्या मदीयदासीत्वेन नियुक्तास्तेन । वन्यपुलिन्दम्लेच्छादयो बभूवुरस्यानुचराः । मामनिशं प्रसादयितुं प्रायतत क्रूरसिंहः । स्वश्वशुरस्य किं वृत्तमिति मया पृष्टोऽयम्– ' देवलोके सनाथितवन्तस्तच्चरणाः इति मां न्यवेदीत् । तदीयमरणोदन्तं निशम्याहमनितरां दुःखिताऽभवम् । परमन्ते शान्तं विधाय स्वान्तं तत्राहमानन्देन दिनानि समगमयम् । गुप्तगृहेऽत्र दारुणं कर्म कुरुते स्म क्रूरसिंहः । निजहस्तगतान् वैरिजनानयमतीव निर्दयतया गुप्तगृहे समानीय निपीडं निपीडं निहत्य देव्यै– उपहारीकरोति स्म । देवीभक्तो भूत्वा देवीव्यपदेशेनायं वन्यान् म्लेच्छपुलिन्दानात्मसात्कृत्य तेषु स्वाधिपत्यमस्थापयत् । तदीयमीदृशं घोरं कृत्यमवलोक्य तस्मादुद्विग्ना सती तमहं सन्मार्गमुपादिशम् । परं प्रत्युतामुना तदीय प्रेमापाचीयत मयि शनैः शनैः । न स्थितः सोऽधुना प्रथमः क्रूरसिंह । असौ मदुपदिष्टमाकर्ण्य मा तिरस्कृतवान् । इत्यमावयोर्मध्ये मनोमालिन्य प्रवृत्तम् । एकदा क्रूरसिंहो मा स्वनिकटमाहूय समगादीत्–' विमले ? दुष्करमिदानीमावयोर्दाम्पत्यम् । नाह शक्नोमि सम्प्रति त्वा प्रीणयितुम् । अहन्तु कश्चन भोगी भ्रमरोऽस्मि । प्रतिदिनमहं नवनवं पुष्पसुगन्धमाघ्रातुमीहे । तदधुना मत्तश्चिरन्तनकालाय वियुक्ताऽसि त्वम्, अहमपि त्वत्तो विश्लिष्टोऽस्मि । गच्छ यत्र सुखं ते । ' इति । भारगप्रकारममुमाकर्ण्यातितरा प्रवृद्धमन्युरह क्रुधा तमवादम्– ' ईदृशमेव त्वदीयं प्रेम किमु ? इत्थं करणीयञ्चेत्तया कथं मार्गुपयम्य दूषिते मे जनुः ? ' इतीदृशं मम वचो निशम्य दुरात्माऽयं नितरा निर्लज्जो भूत्वा मामवोचत्— ' विमले ? नाहमत्रागमं खलु यत्त्वमनिशं मम मनोऽनुकूलं न वर्त्स्यसीति ? माधिक प्रजल्पाधुना ? ? अपसरेतः क्वापि ? इति । अतो निशितवज्राहतमर्मस्थलाऽहमवोचम्– ' क्रूरसिंह ? यत्त्व मां त्यजसि तदहमपि त्वा यद्यपि भ्रामीनि दृढमवेहि । त्वन्निवासस्थलमिदमहममरकण्टकाधीश्वराय निवेद्य तमत्रानीय निग्राहयिष्यामि त्वाम् ? ' इति । मम वचो निशम्य नृशंसोऽयमतीवरोपानलदग्धहृदयोऽकस्मादभिपत्य मां न्यग्रहीत् । तद्भ्यादपसर्तुमहमतितरा प्रायतिषि । परं क्वाऽयं पुरुष क्व चाहमबला ? ।

अथाय दुरात्मा निजकिङ्करैरत्थाय मामिह भाग्रावे दुर्गे समानीय कारके न्यरुणद् । मणि ? दुर्भेद्य निरतस्या ममातिक्रान्ताः सप्त संवत्सरा । चिरकालादद्यैव देहधारिणा

१ म्यादेशेन मिषेण। २ अपाचीयत–अक्षीयत। ३ तोषयितुम्। ४ परिणीय। ५ बन्धनागारे।

साकं प्रथममेव सममाधि मया । जीर्णकन्येऽस्मिन् दुर्गे विविधा फलोमद्दुपस्तरुवरा विराजन्ते । निर्झरोऽप्येको निर्मलजलवाही प्रवहति निरन्तरमिह । फलाहारैः शरीरवृत्तिं कुर्वाणाऽहं गमयामि दिनानि कथं कथमपि । सखि ? अद्यैव चण्डालस्यास्य दर्शनमपि जातम् । प्रियसखि ? अतीवदु:खिताऽस्म्यहम् । प्राणसङ्कटमपि सोढ्वाऽहं नृशसमिमं हित समुपदिश्य रक्षिष्यामि त्वाम् । सखि ? पूर्णोऽधुनाऽऽसुखमस्य पापकलश इति कियत्काला-नन्तरमेवाय विदलिष्यते, तेन सम तदायुर्दीपोऽपि निर्वाणमेष्यति । सखि ? एतावदेव वृत्तमस्या दु:खिन्या हतभागिन्याः ? ? लघूभूतमद्य हृदयमिदं मे त्वया सम समालप्य सुखदु:खमयम् । त्वामालोक्य विस्मृतवती निजदु:खमहम् । हला ? मा भैषीः । साहाय्य नौ विधाताऽयं सकललोकशङ्करः शङ्करदेव । स एव निराधाराधारो रक्षिष्यति नौ । ' इति वृत्तमाख्याय मौनमाकलितवती विमला । अतिक्रान्ताधिकरात्रिवशा द्वे अपि समदु:खभागिन्यौ निद्रावशं जग्मतु ॥

॥ १० ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ नारायणस्वामिचरितमये कुमुदिनीचन्द्रे दशमी कला ॥ १० ॥

---

# अथैकादशी कला

" सुरमधिपतिबालावस्थोऽप्ययं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो गुणः ॥ " ( विक्रमोर्वशीये )

' बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ " ( पञ्चतन्त्रे )

" अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका हतहिमैरिव चैत्रविभावरी ॥ "

( मालविकाग्निमित्रे )

" मधुकर ? मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथवासौ नैव दृष्टा त्वया मे ॥ ' ( विक्रमोर्वशीये )

इतस्तु प्रासादस्यान्यतमस्मिन् विशाले चतु:शालाङ्गने सुन्दराया कस्याञ्चन विरामासन्दि-कायामुपविष्ट एकाग्रमनसा जगदेकनियन्तुर्भगवतोऽनन्तस्य विभोरलौकिकलीला विचिन्तयामास

---

१ यथाकालरसशालिनः । ' अवन्ध्य फलेग्रहि ' इत्यमरः । २ प्रशामम् । ३ नक्षत्रसमूहैः । ४ चैत्ररात्रिः ।

श्रीरणवीरसिंहः—' प्रभो ? न कोऽपि प्रभुरतयाऽगम्यलीलामवगन्तुम् ? अहो ? अल्पीयस्येव काले कियत्यो घटना घटिताः ? क्व मम कारागृहवासः ? क्वात्र नगरे समागमनम् ? क्व च चायं चक्रवर्तिराज्यलाभः ? धन्योऽसि प्रभो ? धन्योऽसि ॥ नमो नमस्तेऽस्तु सहस्रकृत्वः । जगदीश्वर ? स्वार्थिनो वयं सांसारिकजनाः किमिव शक्ता भवन्तमवगन्तुम् ? दयालो ? यदास्मासु पतति विपत्परम्परा तदानीमेव त्वां स्मरामो वयम् । स्वार्थलोलुपाः स्म वयमीदृशाः पामरजनाः । देव ? दयालुरसि । तत्तत्कर्मानुरूपं फलं वितीर्य दयसेऽनवरतममीषां बालकानाम् । तदपि दयाम्बुधे[1] ? एषोऽहं त्वां प्रणमामि मनसा । ' इति—प्रभुगुणगणगानं मनस्येव कर्तुं प्रारभत रणवीरः ।

अथ रत्नप्रभां स्मृत्वा व्यचिन्तयदसौ—' अयि देवि रत्नप्रभे ? त्वमपि रत्नमसि नूनमिह रमणीनाम् । स्वर्गसुखं निर्दिशामि त्वामुपलभ्य सम्प्रति । प्रिये ? सर्वस्वमसि त्वं मे । त्वमेव ममानन्दामृतनिर्झरस्य सरोवरमसि । अहो ? यदा त्वदाननचन्द्रान्मधुरवचोऽमृतरसप्रवाहो निर्गत्य प्रविशति मम कर्णकुहरं तदा कियदानन्दसुधारसं रसयामि ? ' इत्येवं यावद् बहुविधं विचारयति तावदेव बहिः कस्यचित् पादक्षेपध्वानिमिवाश्रौषीत् ।

रणवीरस्तदभिमुखं यावदवलोकयति तावदेव स्वसमीपमायान्तं प्रतीहारमपश्यत् । रणवीरसविधमुपगम्यैव प्रतीहारो निटिलतट[2]चुम्बदञ्जलिपुटः प्रणिपत्य राजानं व्यजिज्ञपत्—' देव ? देवेन महाराजश्रीचन्द्रसिंहसनीडे पत्रं दत्वा प्रेषितो नायकः सम्प्रति द्वारि समुपस्थितोऽस्ति; तेन सममपरोऽपि कश्चनापरिचितपुरुषस्तिष्ठति । उभावपि तौ श्रीमच्चरणकमलदर्शनाभिलाषिणौ प्रभुनिदेशमपेक्षेते ' इति ।

' अतिसमीचीनम् ? अन्तः प्रवेशयोभावपि ॥ ' इत्याज्ञप्तो महाराजेनायं द्वारपालः प्रणम्य निसृत्य बहिर्निर्गत्य क्षणादेव तौ सहादाय समुपतस्थे । तौ निरीक्ष्य मानसिंहमभिज्ञौ रणवीरः। तस्मादभ्युत्थायायं सहसा मानसिंहमाश्लिक्षत्[3] । प्रावर्तत बाष्पजलधारा हर्षेण मानसिंहनेत्राभ्याम् । ददौ चाशीर्वादमसौ रणवीराय । अथ पृष्टवान् कुशलोदन्तमेनं रणवीरः ।

अतोऽयं रणवीराय तदन्तिकात् पृथग्भूय यद् यद् वृत्तं संवृत्तमासीत् तत्तदाखिलं निवेद्य—भार्यायाः श्रीकुमुदिन्या हरणं प्रियाविरहोन्मादविक्षिप्तस्य भ्रातुः श्रीचन्द्रसिंहस्य च तस्या अन्वेषणाय राज्यं परित्यज्य वने गमनमपि निवेदयामास । अथ मन्त्रिवरश्रीप्रतापसिंहप्रदत्तं पत्रं रणवीराय वितीर्णवान् नायकः । पत्रेऽमुष्मिन् मानसिंहनिवेदितस्य वृत्तान्तस्यैव सारांशो विन्यस्तोऽभूत् । विशिष्य च—' धैर्यमाकलनीयं भवता, परिणामे सर्वं भद्रमेव भविष्यति नः ।' इत्यादि सान्त्वनादायकं वचनमपि विलिखितं मन्त्रिणाऽस्मिन् । पत्रवाचनानन्तरं क्षणं तूष्णीं स्थित्वा मानसिंहमुवाच रणवीरः—' मानसिंह ? क्रमशः परापतन्तीमीदृशीं घटनापरम्परामालोच्य किंकर्तव्यताविमूढ इवास्मि । यदवधि प्राणिति नृशंसोऽयं शूरसिंहस्तदवधि कस्याप्यस्माकं नैवोपरमेत् व्यसनम् ? तदधुनाऽविलम्बितमेवामुं यमनगराध्वनीनं विधास्यामहे वयम् ।

१ दयाम्बुधे । २ निटिलपटम्—ललाटपटम् । ३ आलिङ्गितवान्।

नूनममुनैव चण्डाळदुष्टकेनापहृता स्यादियमार्या कुमुदिनी । तद्यथासम्भवं तूर्णमेवेदानीं समुचितं प्रतिविधेयम्। तन्मेव सम्प्रति श्वः प्रात:काले निजसेनानायकं शतत्रयं वीराग्रगण्यान् योधान् सज्जीकारयितुमादिशामि। दुरात्मनाऽमुना गुप्तगृह एव निरुद्धा कुमुदिनीति शङ्के। असावपि तत्रैव भवेत् । श्व:कल्ये वयमात्मबलेन सह गुप्तगृहाभिमुखं प्रस्थातास्महे । तत्रोपगम्य निजानर्धवीरान् बहि संस्थाप्य शेषानात्मना समं गुप्तगृहाभ्यन्तरे नेष्याम्यहम् । स्वाधिपत्ये निर्दृष्यास्त्वं बहि: स्थितान् वीरान् । तेषां साहाय्येन त्वं बहिरभितस्तथा संरक्षिष्यासि यथा कोऽप्यभ्यन्तराद् बहिर्निर्गन्तुं बाह्यादन्तर्वा प्रवेष्टुं न पारयिष्यति । अपीयं हृदि पदं करोति ते ममायोजना ? ' इति ।

' अत्युत्तमेयं श्रीमतामायोजना ॥ ' इत्युदतीतरन्मानसिंह ।

रणवीरः । मानसिंह ! उपस्थितेय रजनी । त्वं नायकश्चोभौ मार्गश्रमेण परिश्रान्तौ स्त इति गत्वाऽधुना भोजनं विधाय सुखं विश्राम्यतां भवन्तौ । म`कथितेनामुनाऽऽयोजनेनाभिज्ञातं करोतु भवान् सेनापतिम् । प्रत्यूषसि प्रस्थातव्यमितोऽस्माभि: ।

नायकमानसिंहौ सादरमादाय रणवीरनिर्देशं ततो निष्क्रान्तौ । निर्गतयोस्तयो –'कोऽत्र भो ? प्रतीहारभुवि ? ' इत्याह्वयद् रणवीरः प्रहरिणम् । तत्क्षणमेवान्त प्रविश्य रामसिंहः प्रणम्य प्राञ्जलिरेकत: स्थितवान् । रामसिंहमवलोक्य–' आकारय मन्त्रिवरम् ?? ' इत्याज्ञप्तवान् रणवीरः । अथासौ मन्त्रिवरमहालयमुपगम्य मन्त्रिवर्यम्–' स्मरति श्रीमन्तमत्रभवान् प्रभुः । ' इत्यावेद्य तस्थौ । मन्त्रिपुङ्गवस्तु–' अकस्मादिदानीं किन्नु प्रयोजनं भवेदात्मना ? ' इति मनसि विमृशन् दामासिं परिधाय रामसिंहेन समं प्रासाद प्रविश्य महाराजश्रीरणवीरसिंह प्रणम्य निजार्हमासनं भेजे ।

अथ पृष्टवानमात्यवर्यं –' किमिति स्मृतोऽहं देवेनेति ? । '

तदनु रणवीरो विजयनगरे घटितमखिलमुदन्तं संश्राव्य स्वकृतामायोजनामपि तं समश्रावयद् । निजबालमहीमहेन्द्रस्य बुद्धिचातुर्यमालोच्य विस्मयस्मेराननाम्बुजो मनस्येव– ' देवेन सदसायैव नरेन्द्रकुमाराय समर्पितं राज्यम् । बुद्धिशालिनमिमं बालनरेन्द्रं चिरायुषं करोतु जगदीश्वर । इति परमकृपालु परमेश्वरमहमभ्यर्थये । ' इति बहु प्रशस्य रणवीरं व्याजहार मन्त्रिवर: ' देव ! अतीवोत्तमेयं श्रीमदायोजना ! विशेषतश्चाहम्– " अयमप्यनुगन्तुमाज्ञापनीयः प्रभुणे " ति श्रीमन्तमभ्यर्थये । ' इति ।

रणवीरः । मन्त्रिधुरीण ! भवानेव राज्यस्यास्य स्तम्भरूपोऽस्ति । भवति मामनुगते मदनुपस्थितौ को नु धारयिष्यति राज्यतन्त्रमिदम् ? तदिहैवास्ता श्रीमान् । अचिरेणैवाहं नृशंसममुं क्रूरसिंहमायसनिगडबद्धकरचरणं विधाय श्रीमतीं भ्रातृजायाञ्च विमोच्य पुना राजधानीमिमां निवर्तिष्ये । ततो भ्रातरमपि विचेष्यामो वयम् ।

मन्त्रिवर । यदाज्ञापयति प्रभु । परमत्रभवानधुना बालवया इति निवेद्यते मया

---

१ निर्दयं मारणम् । २ प्रभाते । ' प्रत्यूषोऽहर्मुखं कल्यमुषः । ' इत्यमरः ।

शत्रुणा सावधानेन व्यवहरणीयमिति । विश्रम्भघातिनि जने विश्वासकरणात् प्रागनिशं विमृशतु देव । साहाय्यं तनोतु श्रीमतां विभु ।

रणवीर । शिरसा गृह्णामि भवदुपदिष्टमहम् । ममतो गमनानन्तरं भवान् प्रतिमाण्डलिकराज्यं ज्येष्ठबन्धो श्रीचन्द्रसिंहस्य प्रतिकृती प्रणिधिभ्यो दत्वा तत्सहचरितानि पत्राण्यपि प्रेषयतु । इत्थं विज्ञापनीयं पत्रद्वारा ' यथाऽस्माकं प्रणिधिर्भवदीयराज्ये समायातो ऽस्ति । तेन सम विजयनगराधिपतेर्महाराजश्रीचन्द्रसिंहस्य प्रतिकृतिरपि प्रहिताऽस्ति । चेदसौ नरेन्द्रो भवद्राज्ये उताहो भवदीयराज्यपरिसीमनि दृश्येत तदायं नृपतिः सम्यक् संरक्षणेन सादरं समुचितं सत्कृत्यास्मदीयराज्ये शीघ्रं प्रस्थापनीयः । प्रत्येकं पत्रं स्वमुद्राङ्कितं विधेयम् । तत्पत्रमादाय गन्तारं चरं सूचयतु भवान्– ' पत्रमिदं परमण्डले नीत्वा मण्डलेश्वरो यदवधि तुभ्यं तत्पत्रोत्तरं न वितरति तदवधि तदीयद्रव्यव्ययेन तस्यैव राज्ये स्थातव्यं त्वयेति ? यो यः प्रणिधिर्यत्र यत्र गमिष्यति ततस्ततो राज्यात्तदधिपतिना– ' किं कृतमस्मिन् विषये तेन ? ' इत्याद्यस्य सविस्तरवृत्तस्योत्तरं लेखयित्वा समादाय निवर्तनीयं तेन तेन । इत्थं प्रतिप्रणिधिं विज्ञापयतु भवान् । मन्त्रिवर ? ईदृशायमपराऽऽयोजना निरधारि मया । अपि रोचते न वेयं श्रीमते ? ।

मन्त्रिवर । ( साश्चर्यम् । ) देव ? नावशिष्यते किमपि भवदायोजनायामूनत्वम् । स्वप्नेऽपि नाहं व्यचारयम्– ' यदियद् दूरं स्वदृशा प्रधाव्येदृशीमुत्तमामायोजना विधास्यति प्रभुः । प्रशस्यं भवदीयबुद्धिचातुर्यम् ? ? । प्रभो ? सुतरां समाचीनेयं भवदायोजिता योजनेति प्रसीदामितमामहम् । श्रीमन्निर्देशानुसारमहमखिलं प्रबन्धं सत्वरं विधातास्मि ।

रणवीर । अतिसमीचीनम् ॥ बहुलेयं व्यतीता रजनी सम्प्रतीति प्रस्थीयतां भवता । इव प्रातः प्रस्थातास्महे वयम् । सततत्वामवृत्तं प्रेषयिष्याम ।

मन्त्रिवर । विजयतां महाराज । अनुजानातु मामिदानीं देव ।

रणवीर । आम् । निःशङ्कं प्रतिष्ठतां भवान् ।

अमरकण्टकस्य स्थविरो मन्त्रिवरो वाग्नरेन्द्रस्य चातुर्यं स्वमनस्येव प्रशंसन् निजमहालयं ययौ । गतवति मन्त्रिणि रणवीरोऽपि निजशयनमन्दिरे रत्नप्रभान्तिकं गन्तुमुदस्थात् ।

प्रासादरत्नमहालयसमीपवर्तिन्यां च द्युमणिप्रभाभासितायां चन्द्रशालायां वातायनसन्निहितां विरामासन्दीमेकामलङ्कुर्वाणा परिहितमुन्दरकृष्णाम्बरशालिनी राजनन्दिनी रत्नप्रभा समुपविष्टाऽभवत् । प्रकृत्या गौरमप्यङ्गमस्या मृगाङ्कधवलप्रकाशेनाधिकं शुशुभे । आरम्कोमलनवकिसलयसहोदरकरपल्लववल्लभकलितेन ललितेन मायूरपिच्छच्छविनाच्छेन व्यजनेन मन्दमन्दमात्मानं वीजयन्ती समतिष्ठत राजदुहिता । राजकुमार्या कोमलकरपल्लवस

१ प्रतिम । २ दूतेभ्य । ' यथार्हवर्णं प्रणिधिरपसर्पश्चरः स्पशः । ' इत्यमर ।

भाजितमिवात्मानं निरीक्ष्य मयूरपिच्छमयं व्यजनमिदं स्वं सौभाग्यशालि मन्वानं सानन्दमान्दोलति स्म। रत्नप्रभायाः शिरीषकुसुमसुकुमारे करकमलयुगले विविधरत्नजटितानि रुचिराणि वलयानि विरेजिरे। अभीक्ष्णमान्दोल्यमानपाणिपङ्कजतया मणिमयवलयजालमिदं मनोहारिण्या चन्द्रप्रभया विद्युतेतराम्। राजकन्यायाः कर्णयुगलं महार्हमणिमौक्तिकमयेन कमनीयेन कुण्डलयुगेन कामपि कान्तिं कलयाञ्चकार। कण्ठे हारयष्टिः सुन्दरी देवच्छन्दहारो ललाटे चातिरुचिरः सूक्ष्मकुङ्कुमतिलकः शोभते स्म। साम्प्रतमियं रत्नप्रभा स्वानुरूपं रत्नप्रभेव सौन्दर्यशालिनी विलोक्यते स्म।

राजकन्या रत्नप्रभा स्वहृदयेश्वरं प्रतिपालयन्ती स्थिताऽभूत्। तस्मिन्नवसरे रणवीरोऽपि रङ्गमहालयं प्रविष्टः। चतुरेयं राजकुमारी रणवीरं निरीक्ष्य- 'चिरायितं प्राणवल्लभेन' विक्षणं विनोदं कर्तुकामा समनवलोकितमिवाभिनीय सखि निभालयन्ती समभाषत-- 'अयि प्रणयिनि कमलिनि ! समाश्वसिहि मुहूर्तम्। इदानीमेव सन्निधास्यते तव मधुकरः। किमिति निजं मनोहरं वदनकमलं मुकुलयसि ?' इति सम्भाष्य स्वयं क्षणं तूष्णीं स्थिता।

रणवीरः। (स्वगतम्।) अये ! किमियं ब्रवीति ? कोऽयं मधुकरः ? का चेयं कमलिनी ? भवतु ? । केन सममियं संभाषते-- इति सावधानं शृणोमि। अद्यापि मामियं नावलोकितवतीति सुष्ठु जातम्। [इत्युदीर्य रणवीर एकस्मिन् कोणे शनैर्निलीय स्थितवान्।] निलीयमानमिममवलोक्य रत्नप्रभा पुनरमुं श्रावयितुमनसा वक्तुमारभत-- '(हस्तमुद्यम्य।) नूनमयं दम्भोलिघटितहृदयो भवेन्मधुकरः ? तदर्थं कियदात्मानं कदर्थयति वराकीयं कमलिनी। तदीयं लोहसारमयं हृदयं मनागपि न द्रवति दयया। अये ! पश्य-पुनरयं प्रस्थितो नु ! कियान् वज्रहृदयोऽयम् ? पश्य- कमलिनि ! पश्य। गच्छत्येव तव मधुकरः। उत्तिष्ठ, गृहाणामुम्। प्रभवसि खलु वारयितुमेनं गमनात् ? इति निगद्य रत्नप्रभा समुत्थाय कमपि किमपि कथयन्तीव सहावभावं हस्ताभ्यामभिनयमिव कर्तुं प्रावर्तत।]

प्रकारमीदृशमवलोक्य व्याकुलीभूय रणवीरो मनसा समालपत्-- 'अये ! न खलु विक्षिप्तेयं जाता ? भवतु, परीक्षे।' इति विमृश्य रत्नप्रभासमीपं गत्वा पृष्टवानसौ-- 'प्रियरत्न ! किमिदमिदानीं प्रलपसि ? अपि भ्रान्तं तव हृदयम् ?' इति।

रत्नप्रभा। (पराङ्मुखमालोक्य सगम्भीराकारम्।) मधुकरान्तिकं विद्यते मम हृदयम्।

रणवीरः। सुशीले ? कस्य हृदयं मधुकरान्तिकं विद्यते ?

---

१ सम्मानितम्। २ देवच्छन्दः शतयष्टिका मुक्तावली। "हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका।" इत्यमरः। ३ विलम्बितम्। ४ तिर्यक्। ५ सन्निहितो भविष्यति। ६ संकोचयसि। ७ वज्रहृदयः। 'दम्भोलिरशनिर्द्वयोः' इत्यमरः। ८ नाटकमिव।

रत्नप्रभा। प्रणयमूढाया कमलिन्या।

रणवीर॰। अये ? कमलिन्या ? ? किमिदम् प्रियप्रभे ? किमिदं नु जल्पसि ? अपि सुसज्ञानाऽसि ? मनोरमे ? शृणु-मयाऽवश्यकार्यार्थं श्वो राजधानीं परिहाय गन्तव्यमिति तत्सम्बन्धिनी वार्ता विधेयाऽस्ति त्वया सहाधुना।

रत्नप्रभा। तत्तु जानाम्यहम्। गमिष्य येव भवान् ? नवरां मम नकारवचनेन न गमिष्यतीति ? ( पुनरपि वक्तुमग्रे प्रावर्तत। ) अये ? प्रणयमुग्धे कमलिनि ? सवद्धोऽस्ति गन्तुमय ते मधुकर। त्यजाधुना मधुकराशाम्। पश्य-कियान् वज्रकोऽय तव प्रियतमो यत्वा विप्रलब्धुंगन्तुमवसर प्रतिपालयति ? अये ? कथमयमीदृशो भवेदिति मधुकर इति नावगच्छति खलु वराकीयं कमलिनी ? ? अरेरे मिथ्याप्रणयाभिनायक मधुकर ? कुतस्त्वमीदृक् कठोर ?।

रणवीरः। ( तदभ्यर्णमुपसृत्य। ) प्रिये ? किमपि जातं ते इति शङ्के। किमिदं ब्रवीषि ? कन्नु प्रेमशून्य कथयसि ? रत्नप्रभे ? न खलु विक्षिप्ताऽसि जाता त्वम् ?।

रत्नप्रभा। कठोरहृदयस्य मधुकरस्य कृते प्रणयिनी कमलिनीयं सोन्मादेव जाता।

रणवीर। ( स्वगतम्। ) नूनमित्थमेव ? ? मया गमनवार्ता कथितेति सैव वदति, उपक्रान्तमिदं नाटकमभिनेतुमिवानया ? ध्रुवमेवमेव। ( विमृश्य। ) किमपि नावगम्यतेऽत्र मया। ( प्रकाशम्। ) अरविन्दलोचने ? किमिदं कथयसि ? कुत्रास्ति तवात्र मधुकर कमलिनी चापि ? दर्शय मे। [ इति प्रोच्य रत्नप्रभायाः पाणिपङ्कज जग्राह रणवीरः। ]

रत्नप्रभा। ( विहस्य ) प्राणेश्वर ? किं तदा द्रष्टुमभिलषति भवान् मम मधुकरम् ? पश्य-साम्प्रतमयं स्वप्रियान्तिके बहिर्गमनानुज्ञामादातुमायातोऽस्ति।

रणवीर। ( समन्ततो विलोक्य। ) क्वाऽस्ति ? अत्र तु न दृश्यते कोऽपि ? अनृतं वदसि सर्वम्। भवतु, कथयाधुना-कुत्रास्ति कमलिनी ?।

रत्नप्रभा। ( कोणाभिमुखमङ्गुल्या दर्शयन्ती। ) पश्य सेयं तिष्ठति।

रणवीर। ( कोणाभिमुखमालोक्य। ) अये ? न किमपि दृग्गोचरं भवति मे ! क्वास्ति ?।

रत्नप्रभा। ( हस्तमुद्यम्य। ) पश्य पश्य। सेयं स्वस्थानादपसृत्य सोपानमार्गेणावतरति। अपि दृष्टाऽसौ ?।

रणवीर। ( परितो विलोक्य ) नैव नैव। नाहं शक्नोमि किमपि द्रष्टुम्। न किमपि विज्ञायते मया ?।

रत्नप्रभा। पश्य पश्य-पुनरियमुपरि समुपेत्य त्वदन्तिकमागन्तुं प्रयतते।

रणवीरः। ( सचकितम्। ) अये ? क्वाऽस्मि ? त्वदन्तिके स्थितोऽस्म्यहमत्र। मदभ्यर्णे तु कोऽप्येव न विद्यते ?।

रत्नप्रभा। किं तदामौ गतवती? (रणवीराभिमुखमालोक्य।) अये? क्व नु गच्छेदियम्?।

रणवीरः। तत्तु त्वमेव जानासि? कथं नु विज्ञायेत मया?।

रत्नप्रभा। (हसन्ती।) आम्, आम्? अवलोकितोऽधुना। हुं? भवतु। अपि दृष्टस्तस्याः स्वामी मधुकरो भवता?।

रणवीरः। न दृष्टः प्रिये? कुत्रास्ति तदीयनाथो मधुकरः?

रत्नप्रभा। तमपि न जानीते भवान्? कियत्कालपूर्वन्तु मम हृदये समवर्तत्तासौ; सम्प्रति त्वेष तिष्ठति मम नेदिष्ठे[१]। चित्रं चित्रमहो॥ तमपि नावलोकयितुं प्रभवति भवान्?।

रणवीरः। अयि पिशिप्ते? कोऽपि न तिष्ठति तव नेदिष्ठे। पुनरेवं कथयसि किञ्चित्कालपूर्वं समभूदयं मम हृदये इति? मधुकरोऽयं तिष्ठेद् किमु हृदयस्थले? चित्रीयितरामहम्[२] किमेवमद्य प्रलपसीति?।

रत्नप्रभा। एवं किमु? अपि न शक्नुयात् स्थातुं हृदि मधुकरः? अये? इममहन्तु निजलोचनैकदेशेऽपि निवेशयितुं प्रभवामि?।

रणवीरः (सोद्वेगम्।) प्रिये? ऋतं वदामि कमपि नालोकितुं शक्नोमीति।

रत्नप्रभा। अहो महदाश्चर्यम्?। अस्तु। किमपि शाठ्यन्तु न विद्यते भवति?।

रणवीरः। प्रिये? किमेवं व्याहरसि? अपि त्वं मां शठमवधारयसि? देवि? निर्मलं मम हृदयम्। तदुभयमपि द्रष्टुमिच्छाम्यहं खलु??।

रत्नप्रभा। एवम्? दिदृक्षत एव तौ भवान्?।

रणवीरः। आम्, आम्। तौ द्रष्टुमतीवोत्कण्ठितं मम हृदयम्।

रत्नप्रभा। भद्रम्? तन्मनागत्र मदन्तिकमुपसर्पतु भवान्। (इति रणवीरहस्तं गृहीत्वा स्वोपकण्ठमाकर्षति।) पश्य-शृणु-स्वयमेव भवान् मधुकरो नु मे वर्तते, अहञ्च भवतः कमलिनीवास्मि। किम्? दृष्टमिदानीं भवता तदुभयम्? किं सन्निहितावेवावां नवेति ब्रूहि मदीयसरलहृदय हृदयेश्वर? [इत्युदीर्य रत्नप्रभा रणवीरं कण्ठग्राहमालिङ्ग्याविरतं विजहास।]

रणवीरः। (साश्चर्यम्।) धन्याऽसि चतुरे रत्नप्रभे? धन्यं तव चातुर्यम्? अतिमात्रमहं त्वयाद्य वञ्चितः खलु॥ योऽयं तव रणवीरोऽद्यावधि केनाप्यवञ्चितचरः; सोऽपि भद्रो विप्रलब्धोऽद्य त्वया॥ रत्नप्रभे? अपूर्वमद्य त्वया नाटकमभिनीतम्? सुन्दरि? सफलितोऽयं तव परिश्रमः। नूनमसि त्वं देवी मे।

रत्नप्रभा। प्राणनाथ? नार्हामि खलु बहुमानमीदृशमहम्? अहं तु चरणपरिचारिकाऽस्मि भवताम्। प्रियतम? यदहमिदानीं स्वर्गसुखमनुभवामि, तदखिलं भवच्चरणपरिचर्याया एव फलमस्ति।

---

१ 'नेदिष्ठमन्तिकतमम्।' इत्यमरः। २ अत्यन्तमाश्चर्यितोऽस्मि।

रणवीरः । अयि मदीयजीवनसङ्गिनि ? रत्नमसि त्वमेकं नारीणाम् ।

रत्नप्रभा । नाथ ? अलमीदृशेन स्वयंप्रशंसनेन । कुत्र गन्तव्यं भवताऽवश्यकार्यमिति निवेद्यताम् । आदिश्यतामेव दासी नि शङ्कं यदेवाज्ञापनीयं श्रीमता ।

रणवीरः । सुभद्रे ? अतीवामङ्गलमयो वृत्तान्तोऽस्ति । विजयनगरराजमन्त्रीश्वरस्य श्रीप्रतापसिंहस्य सकाशादागतमस्ति पत्रमेकम् ।

रत्नप्रभा । किंविषयकम् ? ।

रणवीरः । तत्रामुना विज्ञाप्यते यथा- श्रीमतीं कुमुदिनीं नृशंसः क्रूरसिंहोऽपहृतवान्, तामनु महाराजश्रीचन्द्रसिंहोऽपि विक्षिप्तो भूत्वा वनं प्रस्थितोऽस्ति । अन्वेषणं क्रियमाणोऽपि नाथ लभ्यते ।

रत्नप्रभा । अये कोऽयं बलात्कारः ? किमिदमकस्मादापतितम् ? प्रियतम ! किमिदानीं करणीयम् ? श्रीभ्रातृभ्रातृजाययोः शिरसि संकटमापतितं सहसा ? अहह ! कुत्राधुना तौ विचेष्यामो वयम् ? कया रीत्या सङ्कटान्मोचयिष्यामो वयमिमौ ! [ इत्युक्त्वा रोदितुमारब्ध रत्नप्रभा । ]

रणवीर । प्राणेश्वरि ! किमिति रुद्यते त्वया ? कियन्मात्रमिदं कष्टम् ? नेदं कष्टमपितु निरूपोऽयं परमेश्वरकृतः । ततोऽस्माभिः सत्पुरुष बहिर्निर्गन्तव्यम् । तस्मान्न भयं कुरु । सत्वाय रणवीरो न बिभेति दुःखेभ्यः । अपि पततु ममोपरि दुःखगिरिपरम्परा परं कदाप्यहं नैव परित्यजेयं धैर्यमात्मनः । प्रिये ? यदेव कुरुते कारुणिकेश्वरस्तदात्मकल्याणायैव कल्पते ।

रत्नप्रभा । प्राणनाथ ? भ्रातृजाया मोचयितुं भ्रातरञ्चान्वेष्टुमुपायः कोनु विचिन्तितः श्रीमता ? ।

रणवीर । सकलमहं कृतवानस्मि प्रबन्धम् । निजमन्त्रिवराय समुचिता सूचनापि प्रदत्ताऽस्ति । प्रथममहं जिगमिषामि भ्रातृजायां मोचयितुं यतो जानाम्यहं कुत्रैव स्थापितेति । [ इत्यभिधाय रणवीरः स्वकृतामायोजनां रत्नप्रभायै विज्ञापितवान् । ]

रत्नप्रभा । आयोजनेयमतीवसमीचीनाऽस्ति । किन्तु मदीयमेकं कथनमङ्गीकरिष्यति किमु श्रीमान् ? ।

रणवीर. । अहो ? कुत इयं भाषणशैली शिक्षिता पुनस्त्वया ? ।

रत्नप्रभा । यत प्रभृति जातोऽयमावयोः प्रेमबन्धप्रयोग । [ इत्युदीर्य रणवीराभिमुखमवलोक्य हसितवती रत्नप्रभा । ]

रणवीरः । अयि मनोमोदिनि ! सर्वस्वमसि त्वं मे । ब्रूहि किं कथयसि ?

रत्नप्रभा । एतावदेव कथयाम्यहम्-यद्यर्हति श्रीमत्कुमुदिनीमोचनगमनपरिश्रमस्तस्मात् परमुक्तेतु श्रीमान् । किन्तु भवदीयस्थाने श्रीमदनुज्ञया दासीयं श्रेयसी श्रीमतीमार्यां कुमुदिनीं विमोच्य दुरात्मानं क्रूरसिंहं निगडसंयतं विधाय श्रीमत्समक्षमुपस्थापयिष्यति ।

रणवीरः । ( साश्चर्यम् । ) रत्नप्रभे ? विस्मितोऽस्मि सुतरामहम् ?? इयत्तव साहसं भवदिति नाहमतर्कयं स्वप्नेऽपि । नेदं कुमुदिनीमोचनं कस्यापि बालकस्य क्रीडनकं खलु ? ? यत्र तु घोरं युद्धमपि विधेयं स्यात् ? कथय किं करिष्यसि तदा ? ।

रत्नप्रभा । एवं किमु ? भवानेव केवलं योद्धुं जानाति ननु ? ? भवदीयेयं रत्नप्रभाऽपि कुशला युद्धकर्मणीति न विदितं खलु धीमता ? बाल्य एवाहमशिक्षे सुगुरोः शस्त्रास्त्रप्रयोगविद्याम् । तदुपयोगमपि स्वतातेन सममहं मृगयार्थं गत्वा बहुशः कृतवती । अपि विदितमद्य वीराग्रगण्य वरवरेण्य ? ।

वृत्तमिदमाकर्ण्य रणवीरस्तु स्तब्ध एवाभूत् । क्षणं विमृश्य तामवभाषे– ' धन्यासि प्रिये, ? इदानीन्तु त्वाहमनेनानस्थानमुचितमवधारयामि । अचिरेणैव कालेनाहं भ्रातृजायां पापस्य करपञ्जराद् विमोच्य समुपस्थास्ये ' इति ।

रत्नप्रभा । यद्यभिलषति हृदयेश । अप्यहमादिश्ये ज्येष्ठबन्धुगवेषणार्थं गन्तुं भवता ?, ।

रणवीरः । ( सप्रसादम् । ) देवि ? कुत्राप्यहं नादिशामि त्वां गन्तुम् ।

रत्नप्रभा । उभयमपि नाङ्गीक्रियते भवता ? [2] तदधुनापरमेकं कथनं मे स्वीकरिष्यति भवान् ? ।

रणवीरः । कथय ।

रत्नप्रभा । ' तव कथनमहं प्रतिपत्स्ये ' इति प्रतिज्ञायतां धीमता ? ?

रणवीरः । एषोऽहं प्रतिशृणोमि[1]–तव वचनमभ्युपगन्तुम् । ब्रूहि सम्प्रति ? ।

रत्नप्रभा । आत्मना सह नयतु मां श्रीमान् ।

रणवीरः । ( विहस्य । ) रत्नप्रभे ? निबद्धोऽस्म्यहमग्रत एव तव प्रतिज्ञयेत्यहं नेष्यामि त्वामात्मना सह । अपि प्रसन्नेदानीमसि ? ।

रत्नप्रभा । आम् । अधुनाऽहमतिप्रसन्नाऽस्मि खलु ? ? ।

रणवीरस्तु– ' एहि प्रिये ? सम्प्रति व्यतीतेयं बहुला रात्रिः । श्वः प्रातरेव प्रस्थातव्यमितोऽस्माभिरिति शयावहै सुखमावाम् । ' इत्यभिधाय रत्नप्रभायाः पाणिपङ्कजमादाय तां शयनमन्दिरं निनाय । सुन्दरं शयनमन्दिरमुपेत्यैकस्मिन् विशाले सुपरिष्कृते मणिमयहेमपर्यङ्के मृदूपबर्हैरुल्लसितायां तूलिकायां निपत्योभावपि दम्पती निद्रासुखं निर्विविशतुः ।

+ ऋतुरेष निराकृतदिवाकरत्विषि समेधितभेककुलहर्षे प्रशमितचातककदम्बकतृषि सपतदम्बुधरोदरनिर्मलनीरविप्रुषि प्रावृषि । उच्चतुङ्गशैलमालाकारविडम्बिभिर्नीलनीडेर्गजेन्द्रमञ्जुलैरभिनवजलगम्भीरगर्भनिर्घोषैर्निरन्तरैश्चञ्चच्चामीकररुचिरकान्तिभिरेव चञ्चलाच–

---

१ प्रतिजाने । २ स्वीकर्तुम् । ३ उपबर्ह उपधानम् । ४ त्विट् कान्तिः । ५ वर्धितमण्डूकसमूहहर्षायाः । ६ तृट् वाञ्छा । ७ विप्रुषो जलबिन्दवः । ८ नि हतनपूर्ण । ९ चामीकरं सुवर्णम् । १० चञ्चला विद्युत् ।

मत्कृतिमनोहरैः प्रकटितपुरन्दरकार्मुकसुन्दरैरधोगामिबलाकपङ्क्तिचन्दिरैर्मनोरमेन्दिरामन्दिरै-रम्भोधराडम्बरैराच्छादितमखिलमम्बरतलम् । निजगम्भीरगर्जितैर्मदयन्ती मयूरवृन्दममन्दं क्वचिदन्तरान्तरा वर्षति बहुधारासारं सान्द्रनीला मेघमाला । दिनेऽपि कादम्बिनी काले समुल्ल-सिततरां सचमत्कारं तडिल्लता दिगन्तरालेषु । इदानीमेव वृष्टिर्भवित्रीति समतर्कयत जनैः । क्षणानन्तरमेव क्रमुकफलविशालैर्बिन्दुजालैरभिवर्षितुमारम्भि समूसलधारमभितोऽरण्ये कादम्बिनीकदम्बकैः । जलमयमिव भासते स्म सकलं महीतलम् । अस्मिन्नृतौ वनानि महारमणीयानि समवालोक्यन्त । स्थले स्थले हरिततृणाङ्कुरमयी पुरन्दरगोपरमणीया धरणिरालोक्यते स्म । जगन्नियामकेन प्रजापतिना वसुन्धरायां नैसर्गिकं निसर्गसुन्दरं विविध-वर्णमनोहरं चित्राम्बरमास्तीर्णमिवेति कल्पनाऽऽविर्भवति सर्वेषामपि सचेतसां हृदि । कानने-ऽस्मिन् कोकिलकीरकपोतसारिकानीलकण्ठमयूरचातकचक्रवाककारण्डवजलहंसप्रमुखाः पतङ्ग-चरा निजमञ्जुलकलरवैर्मनोहरन्तितरां मनस्विनामपि ।

अथ प्रत्यूषसि स्वसेनया समं रत्नप्रभासहितो रणवीरोऽमरकण्टकराजनगरान्निर्गत्यास्मिन्ने-वारण्ये स्वशिबिरं निवेशयामास । समयेऽस्मिन् रत्नप्रभया पुरुषवेषो धारितोऽभूदिति सेयं वीरभट इवालोक्यत । स्वस्वामिना सममियं चालयन्ती निजमाजानेयं प्रयाति स्म । तयोः पृष्ठतो व्रजति स्म मानसिंहसेनानायकाभ्यामधिष्ठितमखिलं बलम् । मध्यन्दिने सम्प्रापुरिमेऽ-रण्यमिदम् । एतैरध विंशतिक्रोशमितोऽध्वा विलङ्घित इति सुतरामिमे परिश्रान्ता बभूवुः । इतोऽधुना द्वादशक्रोशविप्रकृष्टमवर्तत गुप्तगृहम् । अतिक्रान्ततया मूसलपातघोरवृष्टितया चासौ रणवीरः ' अत्रैव निवेशय सेनाम् । ' इति सेनापतिमादिदेश ।

प्रभुनिदेशसमकालमेव सैनिकाः स्वस्वतुरङ्गमादवतीर्य श्रमतरलान्निजानिजतुरङ्गान्नवनवतृण-कन्दलं कवलयितुं कानने व्यसृजन् । काननाभ्यन्तरेऽनुक्रमं शारदाम्भोधरधवलखण्डखण्ड-नपटुपटमण्डपमण्डलानि समुत्तम्भितानि रुचिराणि । स्वनिवासार्थं सैनिकैरायोजितानि श्वेतपटकुटीरकदम्बकानि । क्षणेनैवास्यां रुचिरारण्यवसुन्धरायां मनोहरं नगरमिवादृश्यत रणवीरशिबिरमिदम् । मानसिंहसेनानायकयोः कृते समुच्छ्रितं विशालं धवलांशुकपटमण्ड-पयुगलम् । सर्वेषाममीषां मध्यभागे महानेकोऽतिरमणीयो रजताद्रिखण्डसुन्दरः प्रोन्नमितो महाराजार्थं सौवर्णलताकुसुमचित्रितकौशेयपटमण्डपः ।

अवसितेऽस्मिन्नखिलसेनासन्निवेशकर्मणि स्वस्वपटकुटीरेषु सर्वेऽपि सैनिकवीरा अन्नपाकं कर्तुमारेभिरे । नग्नकृपाणपाणयः प्रहरिवीरवराश्च सज्जैर्न विदधिरे । साम्प्रतं प्रशान्ततया वृष्टे-र्जलं सहर्षहर्षं प्रवहति स्म । समयेऽस्मिन् भोजनान्निवृत्य मानसिंहं सहादाय दूरमरण्ये विचरितुं निर्गतो रणवीरः । पटमण्डपे केवलमेकाकिनी रत्नप्रभा स्थितवती । ईदृशे मनोहरे

१ पुरन्दरकार्मुकं सुरेन्द्रचापम् । २ चन्दिरम्—आल्हादकम् । ३ विद्युन्माला । ४ पूगफलस्थूलैः । ५ मेघमालावल्लीभिः । ६ पक्षिश्रेष्ठा । " पतङ्ग —पक्षिसूर्ययोः । " ७ भक्षयितुम् । ८ धवललघु-पटगृहवृन्दानि । ९ प्रोन्नमितम् । १० कैलासगिरितटरुचिरः । ११ उपरक्षणम् ।

कान्तारे रणवीरशिबिरादाराद्देव वृष्टिप्रारम्भसमयादारभ्य कस्यचिन्महीरुहस्य तले निषण्णोऽमूच्छितो युवा कोऽपि । अभीक्ष्णमसौ समन्ततो विलोकयति स्म । आर्द्राण्यस्य वृष्टिना संजातानि वासांसि । केवलमङ्गेषु सूक्ष्ममेकं कौशेयाम्बरमेव परिधारितममुना । नग्नशिरस्कतयाऽमुष्य नीलनीलाः कुटिलकुटिला कुन्तलास्तदुत्तमाङ्गमभितो रोलम्बमाला[1] इवोड्डीयन्ते स्मानिलेन । वृष्टिभिरार्द्रशरीरो जाड्येन च जडीभूतः प्रवासियुवाऽसौ कम्पते स्म समासीनः। क्षणे क्षणे विविधभावपरिवर्तंतरङ्गाकुलमिवाज्ञायत वदनमण्डलमस्य । ', अतिदुःखाकुलः संसारोद्विग्नमानसश्चायम् । ' इत्यन्वमीयत मुखाकृत्यासौ ।

प्रशान्तां वृष्टिमवलोक्य युवकोऽयं दीर्घमुष्णञ्च निःश्वस्य समुदस्थात् । अभिज्ञातोऽयं भवेदेव प्रियपाठकमहोदयेन-' असावेव निजोपन्यासस्य नायकः कुमुदिनीवल्लभश्चन्द्रोऽस्ति । योऽयं स्वप्रियाविरहजनितोन्मादविक्षिप्तः स्वराज्यं परित्यज्य वनं निर्गतोऽभवदिति।' समुत्थाय चन्द्रोऽयं समन्तान्निरीक्ष्य वक्तुमारभत-' गता, गता, गतैवान्ततः ? मदीयनयनामृतवर्तिर्मामन्धं विधाय प्रोड्डीना । कुमुदिनि ? क्व तिष्ठसि त्वमिदानीम् ? अये ? दर्शयतु मत्प्रियां कोपि। कुमुदिनि ? त्वदर्थमयं चन्द्रः कियत्कष्टं सहते इति जानासि किमु ? एहि-हृदयवल्लभे ? एहि । सकृद् देहि दर्शनमस्मै विरहिणे तव चन्द्राय ॥ क्षमस्वास्यापराधम् । हा प्रिये ? कथं न संभाषसे त्वम् ? न खलु कुप्यसि मह्यम् ? अये ? तत्किमिति नालपसि ? न खलु प्रस्थितासि संसृतेरितस्त्वमनन्तकालाय ? ( विमृश्य । ) नैव नैव नैव गमिष्यतीयं मदीयकुमुदिनी मामेकाकिनमिह विहाय ? कदापि गता भवेद्यदि ? ( इति विमृश्यान्तरिक्षाभिमुखं निरीक्ष्य । ) अयि यमराज ? अपहृतवान् यदि भवान् कुमुदिनीं मे तर्हि तामेकवारं मदभ्यर्णं प्रहिणोतु; नोचेन्मामपि तस्याः समीपं नयतु श्रीमान् ।' इत्यहमभ्यर्थये भवन्तम् । ( क्षणं मौनमाकलय्य ) अये ? कथं कोऽपि मे न प्रयच्छति किमपि प्रतिवचनम् ? किं निर्दयो भवेदयं धर्मराजः । आम् । तथैव प्रतिभाति मे । स्वयमसौ निर्दयश्चेत्कमहं निवेदयेयम् ? सकृद्यदि दृशां पथि वर्तेत मत्प्रिया; नायं तदा प्रभवति खलु तां स्वान्तिके स्थापयितुम् ?' इति व्याहृत्य निबद्धमुष्टिकः क्षणमाकाशाभिमुखमवलोक्य पुनरपि सहसा तारस्वरमालपीत्-' सेयं तिष्ठति । दृष्टेयं मया स्वप्रिया । मदन्तिकमागन्तुमियमभिलषति किन्तु चण्डालोऽयं क्रूरसिंहस्तामवरुणद्धि । ( सामर्षम् । ) अद्यापि नृशंसोऽयं न जहाति मे कुमुदिनीम् । तिष्ठ रे दुष्टहतक ? तिष्ठ । सद्य एवापहरामि तवासून् ॥ प्रिये कुमुदिनि ? मा भैषीः । एषोऽहं सम्प्राप्तस्तव साहाय्यार्थम् । सद्य एवाहं यमनगरातिथिं करोमि चण्डालमेनम् ।' इति निगद्य दन्तावलीं संपिष्य सहसा धावितुं प्रावर्तत । धावन्नेवासौ चन्द्रो रणवीरशिबिरनिकटभुवमाजगाम । नासीदिदानीमात्मपटमण्डपे रणवीरः । एष तु कमनीयकाननकान्तिमनुशीलयितुं निष्क्रान्तोऽभवत् । अभूदेकाकिनी पटभवने रत्नप्रभा । बहिर्विद्यमाने रिक्तभूतले प्रहरिभटा विकोशकरवालकरा उपरक्षणं कुर्वन्ति स्म । '

---

१ भ्रमरमाला ।

अवसरेऽस्मिन्नुपगतवानमीषां नयनसरणिमयं धावमानश्चन्द्रसिंह । अतस्तेषां प्रहरिद्वयेन चन्द्रसमीपमुपगम्य निरुध्य चैनं तत्रैव-पृष्टम् ' अये ? कोऽसि ? किमित्येवं व्याकुलतया धावसि ? न खलु कोऽप्यनुपतति शत्रुस्त्वां निहन्तुम् ? ' इति ।

चन्द्रसिंह । अये ? के यूयम् ? किं पृच्छयते-इति नाधिगन्तुं शक्नोमि किंचित् । पुनरहमेकस्यापि भवत्प्रश्नस्योत्तरं न दातुमिच्छामि ।

चन्द्रस्य कोपपूर्णं वचनमाकर्णयतोरनयोः प्रहरिणोर्हृदि न ममौ विस्मय । उभावपि तौ परस्पराभिमुखमालोक्याञ्चक्रतु । अन्ते तयोरन्यतर प्रहरी चन्द्रनिकटतममुपगत्य ससाहसं समपृच्छत्-किमये ? अस्मदीयप्रश्नस्योत्तरं न ददासि किम् ? ' इति ।

चन्द्रसिंह । नेति सकृदवोचि नु मया ? तत्किमिति मुधा पृच्छसि ।

प्रहरी । अपि किमपि कारणमनुत्तरयितुम् ? ।

चन्द्रसिंह । छन्दो मे खलु ?? ।

प्रहरी । न श्रोष्यते तवेद छन्द ।

चन्द्रसिंह । किं करिष्यसि त्वमन्यथा ? ।

प्रहरी । त्वामहं प्रगृह्य निजमहाराजनिकटं नेष्यामि ।

चन्द्रसिंहस्तु- ' धूर्त तस्कर कृतघातिन् ? इत्यभिधाय प्रबलया चपेटिकया त प्रहरिणं प्रहृतवान् । वराकोऽयं प्रहरी तु स्तब्ध एव भूत्वा कपोलतलं परामृशन् दूरमपसृत्य स्थितवान् । अथ चन्द्र पटमण्डपाभिमुखं प्रचलित । अत्रान्तरे पुन प्रहरिणामन्यतम समागत्यामुमुपरुध्य पृष्टवान्- भ्रात ? कन सम प्रयोजनमस्ति ते ? ' इति ।

चन्द्र० । स्वप्राणप्रियया कुमुदिन्या सहास्ति मम प्रयोजनम् ।

प्रहरी । क्व वर्तते कुमुदिनी ? ।

चन्द्र । रत्नमियमेकम् ।

प्रहरी । प्रनष्टं किमु तदा तद् रत्नं तवान्तिकात् ? ।

चन्द्र । ( सोद्वेगम् । ) आम् । किन्तु प्रयोजनममुना ते ? अरेरे दुष्टा ? सर्वेऽपि यूयं तस्करसहोदरा इव दृश्यध्वे ? मन्ये, युष्माभिरेव मुषितमिदं मे रत्नम् ? ।

प्रहरी । धन्योऽसि रे ॥ त्वन्तु कश्चन बलाद् गलेग्रहिल इवावगम्यसे । अस्माभिरपहृतं किमु तव रत्नम् ? ।

चन्द्र । आम्, आम् । युष्माभिरेवापहृतम् । नापहृतं चेद् युष्माभिस्तर्हि युष्मदधिपतिना तु नियतमेवापहृतं स्यात् ?? ।

प्रहरी । ( आत्मगतम् । ) नूनम् कोऽप्ययं विक्षिप्त इति विभावयामि । नायमीदृशं व्याहरेदन्यथा । यद्वि, मनागमुना विनोदं वितनोमि । ( प्रकाशम् । ) परम् ॥ अस्मदधिपतिना मुषितं यदि ते रत्नं किं करिष्यसि तर्हि त्वम् ? ।

---

१ अभिप्राय । ' छन्द पशुभिप्राय पारवश्य ।' २ कण्ठग्राहक ।

चन्द्रः । (सामर्षम् ।) किं करिष्यामि ? तीव्रं दण्डयिष्याम्यहं त्वत्प्रभुम् । आहरिष्यामि चामरत्नमहं तदुपकण्ठात् ।

प्रहरी । एवं किमु ? तद् भवनितो गमनं तथाधुना ।

चन्द्रः । नैवाहमितोऽपसरामि ? ।

प्रहरी । किमिति ? ।

चन्द्रः । प्रभुरहमात्मनः ? । किमिति भ्रमयसि मम मस्तकम् ? ।

प्रहरी । अयि भ्रान्तशिरस्क ? नात्र प्रभविष्यसि त्वमात्मनः ? ।

कोऽसि त्वम् ? ।

चन्द्रः । अधीश्वरोऽस्मि जगताम् । मदीयराज्यसीमनि समायातोऽसि त्वत्प्रभुः ।

प्रहरी । एवं किमु ? अपि विद्यते न वेति त्वया सह सैन्यम् ? एकैकाक्येव करमादातुमायातोऽसि ? ।

चन्द्रः । (पदौ प्रदर्शयन् ।[1]) इदं मम सैन्यं वर्तते ।

प्रहरी । हंहो ? । विलक्षणोऽयं कोऽपि मानुषः प्रतिभाति मे ! (स्वसहचरानाकार्य ।) भ्रातरः ? इतस्तु समुपेत्य पश्यत खलु ! कोऽप्ययं विक्षिप्तो जनोऽस्मदीयमहाराजसकाशात् करं ग्रहीतुमागतः ? ।

प्रहरिणोऽस्य वचनमिदमाकर्ण्य सर्वेऽपि प्रहरिवीरा विहसन्तस्तत्रोपेत्य विक्षिप्तस्य चन्द्रस्य परिहासं वितेनिरे । कश्चिदेनं पृष्ठतो हस्तेनापसारयति, इतरोऽग्रतस्ताडयति, परः पार्श्वत आहन्ति, अन्यश्चाम्बरं तदीयमाकर्षति इत्येवं तेन सार्कं चिक्रीडुरमी । तेषामीदृशमाचरणमालोक्य भ्रान्तमस्य मस्तकं सहसा । अतोऽयमकस्मादेकस्मात् प्रहरिणो हस्तादसिधेनुकामाच्छिद्य तरसा तं लत्ताप्रहारेण भूतले न्यपातयत् ।

समधोनिपतितमवलोक्य सक्ष्वेडमभाषत चन्द्रः 'ईदृशमर्हति दण्डं निपथजनपरिहासशीलः !' इति निगद्य पुनरयं भूतलपतितं प्रहरिणमाश्वासयामास । स्वसहचरस्य दुर्गतिमीदृशीं निरीक्ष्य कोपानलदन्दह्यमानमानसा इतरे प्रहरिवीराः सन्निपत्य युगपदेव तदुपरि निजनिजकरवालमुद्दतुलक्षमुं निहन्तुमनसः ।

केवलमेकेनैव पलेन चिरन्तनकालाय चन्द्रस्य प्राणा देहादुदक्रमिष्यन् यदि तस्मिन् क्षणे— 'न हन्तव्यो न हन्तव्योऽयम् ? ' इति नाश्रूयत मृदुलमञ्जुलो ध्वनिरेकः ? ध्वनिमिममाकर्ण्य चकिता इव प्रहरिणो यावच्छब्दाभिमुखं पश्यन्ति तावत्तत्र ददृशुरमी स्वसमीपमागच्छन्तीं पुरुषवेषां राजमहिषीं रत्नप्रभाम् । तत्क्षणमेव निजप्रहरणान्यवनमय्य सादरं प्राञ्जलयः समवातिष्ठन्त प्रहरिणः । देवी रत्नप्रभा तु यत्रावाङ्मुखं विधाय स्थितवांश्चन्द्रस्तत्स्थानमुपगम्य मञ्जुलगिरा—'को नु खलु श्रीमान् ? ' इत्यन्वयुङ्क्त । परं कः प्रयच्छतु प्रतिवचनम् ? चन्द्रस्तु पाषाणपुत्तलिकावत् स्थितो रत्नप्रभामनिमेषचक्षुषा पपौ । तूष्णीं स्थितमेनमालोक्य

---

१ 'पनचङर' इति भाषा । २ चपेटौ । ३ पदताडनेन । ४ सखिंहनादम् । ५ ददतु ।

पुनरपि पृष्टवती रत्नप्रभा—' पथिको नु भवान् कोऽपि ? ' इति । अथ सावधानः सन्नासौ दृष्टिं तदभिमुखीं विधाय—' किमभिधीयते भवते'ति प्रोक्तवानसौ ।

रत्नप्रभा । को नु श्रीमान् ? इति पृच्छ्यते मया ।

चन्द्रः । अनीशोऽस्मि सम्प्रति भवदीयप्रश्नस्योत्तरं दातुमिति खिद्येतरामहम् । परमादौ को नु भवानिति निवेदयतु माम् ? ।

रत्नप्रभा । इहागतस्य महाराजस्य प्राणप्रियं मित्रमहम् ।

चन्द्र । किमभिधानं भवताम् ?

रत्नप्रभा । ' रत्नसिंह ' इति नामाहं राजकुमार' ।

चन्द्रः । ( सहर्षम् । ) अहो अहो । अतीवसुन्दरमिदमभिधानम् ? भवतु ? अपि तिष्ठति पटमण्डपे भवदधिष्ठाता ? ।

रत्नप्रभा । आं तिष्ठति । अपि प्रयोजनं किमपि तेन समं ते ? ।

चन्द्रः । आमस्ति । मनागय दण्डनीयो मया ?

रत्नप्रभा । किमर्थम् ? ।

चन्द्रः । न प्रभवामि खलु तन्निवेदयितुं भवते ?

चन्द्रसिंहस्येदृशं विचित्रमुत्तरमुपश्रुत्य विचिन्तितवतीयं रत्नप्रभा—, अहह ? दु खापन्नोऽयं कोऽपि नरः । ओजस्विनी कान्तिरमुष्य । मुखमण्डलमस्य चन्द्रसिंहप्रतिकृतिसंवादि-वदनमिव प्रतीयते । न खलु सदा स एवायं भवेत् ? (विमृश्य ।) कथं नु वेद्मि ? यदि तावत् पृच्छाम्येनं बोधयित्वा ? ' इति विचिन्त्य समपृच्छच्चन्द्रसिंहम्—' भ्रातः ? कोऽपि गुणशाली पुरुषो विभाव्यते भवान् ? । ' इति ।

चन्द्र. । सत्यम् । परं मादृशो गुणिजनस्य न विद्यते सम्प्रति सत्परीक्षकः ।

रत्नप्रभा । किमहो ? कथमेवमुदीर्यते भवता ? ।

चन्द्रः । अलमेवाभिधीयते मया । सन्ति सम्प्रति गुणा अवगुणा इव मे ।

रत्नप्रभा । भवतु । त्यजतु विचारमिममधुना । अपि मया सह मैत्रीबन्धं विधास्यति भवान् ? भविताऽस्म्यहं तव सुखदु खभागी ।

चन्द्रः । किम् ? मम मित्रं भवितुमिच्छति किमु भवान् ? अये । अतितरां प्रसन्नोऽस्मि त्वया सह सौहार्दं विधातुमहम् ।

रत्नप्रभा । अपि किमपि कारणं मदुपर्येतावता प्रसादेनाद्यभवत ? ।

चन्द्रः । कारणम् ? अहह ? ( इति हसति । ) सत्पुरुषो भवानिति प्रत्येमि । यतो मदीयहृदयवल्लभायाः संवादिनी भवदाकृतिः ।

रत्नप्रभा । किंनामधेया भवत्प्रियतमा ? ।

चन्द्रः । अस्ति कुमुदिनी नाम्नी मे प्राणवल्लभा ।

---

१ ष्टरम् । २ अनुहारिणी ।

रत्नप्रभा । (स्वगतम्) श्रुतमिदमेव ? सत्या मम धारणा खलु जाता । (प्रकाशम्) वरम् । किमभिधेयो भवान् ? ।

चन्द्रः । 'चन्द्रसिंह' इति ख्यातोऽस्मि ।

रत्नप्रभा । आ एवं किमु ? वरम् ' क्वाऽस्ति सम्प्रति भवदीयकुमुदिनी ? । चन्द्रसिंह ? पश्य, सुहृदपि संवृत्तो ममेदानीमिति न गोपनीयं किमपि वृत्तं भवतः । अन्यथा मित्रद्रोही गण्यसे ? ? ।

चन्द्रः । (सशोकम् ।) रत्नसिंह ? स्मारितोऽस्मि खलु क्षणं विस्मृतं वृत्तमहं त्वया । रोमाञ्चितं कृतं मे वपुः । प्रियसखे ? मदीयभाग्यवल्लभा कुत्रिताऽस्ति मत्त. । दुरात्मा नृशंसो नराधमः क्रूरसिंहनामपदस्थवानस्ति । नृशंसेनामुना कुत्रान्तर्धापिता मत्प्राणप्रियेति न विज्ञायते मया । स्वप्राणेश्वरीगवेषणार्थमेवाहं निर्गतोऽस्मि । किन्तु हन्त ? चिराद्नोपलभ्यते मदीयहृदयेश्वरीयम् । रत्नसिंह ? अतीवदुःखितोऽस्म्यहम् । अनवधिर्मम कष्टानाम् । (इत्यभिधाय अगण्यमूढश्चन्द्रः कुमुदिनीं स्मृत्वाऽब्रवीत) कुमुदिनि ? क्वासि त्वम् ? एहि सकृदेहि । शान्तं विधेहि विरहानलदन्दह्यमानमिदं मे हृदयम् । इत्युदीर्य विलपितुं प्राक्रमतासौ ) ।

तमाश्वासयन्ती निजगाद रत्नप्रभा– 'चन्द्रसिंह ? किमित्याक्रन्दति भवान् ? समाश्वसिहि । भवन्तमहमिदानीमात्मन्येष्टबन्धुसदृशं मन्ये । माकुलीभव, धैर्यमाकलय मनागिति ' ।

चन्द्रः । (तदीयहस्तपङ्कजं गृहीत्वा ।) प्रियवयस्य ? कुतोऽपि विचित्यानय मे कुमुदिनीम् । क्वासौ निलीनेति न वेद्मि । मां विहाय गतवतीयमिति जानाम्यहं केवलम् । अपि मदीयदुःखविश्राममन्दिर सुहृन्मणे ? मदीयकुमुदिनीमन्विष्यानेष्यसि चेत्त्वामहं महोच्चपदभाजं स्वसेनाया अन्यतमं नायकं विधाय वितरिष्यामि बहुलभूभागं ते भूमिभुक्त्वेन वंशपरम्परायै ।

रत्नप्रभा । भवतो नायकपदवी भूमिरपि च नापेक्ष्यते मया । परमहं सन्मित्रकर्तव्यपालनधिया कुमुदिनीमन्विष्यानेष्यामि नियतम् ।

चन्द्रः । तद्वितरामहमानन्दितोऽस्मि ।

इत्थं साश्वासनमसान्त्वयदियं रत्नप्रभा चन्द्रसिंहम् । स्वस्थानस्थिताः महर्षिवीरास्तु चन्द्रसिंहमभिज्ञाय स्वकृतदुराचरणकृते पश्चात्तापमकार्षुः । अनन्तरं रत्नप्रभा चन्द्रसिंहं समाश्वास्य सान्त्वयित्वा चामुं पार्श्ववर्तिनोऽन्यतमस्य महीरुहस्य तृणकन्दलसुन्दरे तले महर्षिवीरेण तदाऽऽदेशकाङ्क्षमास्तीर्णे रुचिरकौशेयास्तरणे समुपवेश्य स्वयमुपविश्य च तत्सम्मुखं तेन समं समालपत् । स्वदुःखपूर्णां कथामाख्यातुमारभत रत्नप्रभां चन्द्रः ॥

॥ × ॥ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ शिष्यसंगीतामृतमनाम्नी कुमुदिनीचन्द्रे एकादशी कला ॥ * ॥

---

१ 'जहागीर' इति लोके प्रसिद्धा । भूमिभुक्- 'जहागीरदार' इति प्रसिद्धः ।

# अथ द्वादशी कला।

" सजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया।" (शाकुन्तले)

" प्राणाः परित्यजत काममदक्षिणं मां रे दक्षिणा भवत मद्वचनं शृणुध्वम्।
शाघ्रं न याति यदि तन्मुषिता स्थ मूढा याता सुदूरमधुना गजगामिनी सा॥"

" किं करोत्येव पाण्डित्यमस्थाने विनियोजितम्। (रत्नावल्याम्)
अन्धकारप्रतिच्छन्ने घटे दीप इवाऽऽहितः॥" (पञ्चतन्त्रके)

' शीलं वा पालयेयं देहं वा पातयेयम्॥ ' (स्फुटम्)

❀ इतस्तु धवलमेकं तरलतुरङ्गमधिरूढः कलितकनककुसुमवल्लरिललितसूक्ष्मकौशेयाम्बर-परिहितहरिद्युतिनिर्मितमहार्हपरिधानः कपोलतलप्रतिबिम्बितमणिमुक्तावलीरुचिरमुकुट-मौलिः परितो विलुलितचूर्णकुन्तलजालचोचुम्ब्यमानकन्धरः कुरङ्गमिव तुरङ्गं नर्तय-न्नयं मालसिंहेनानुगम्यमानो रणवीरः काननशोभामवलोकमानो निववृते निजशिबिरम्। थोरदिवायमात्मदयितां केनचिदपरिचितपुरुषेण सम समालपन्तीं समालोक्य विस्मयसान्द्र-मना मनाङ् निकटमुपगम्य तुरङ्गमादवतीर्य स्नेहमयेन दग्म्बुजेन रत्नप्रभामालुलोके। सा च स्वामिनमुपतस्थिवांस समवलोक्य समभ्युत्थाय प्रणम्य चामुं संक्षेपेण- ' आर्यचन्द्र-सिंहोऽयम्? ' इति तत्क्षणमेव विज्ञापितवती। स्वप्रियाचातुर्येण परमप्रसन्नो बभूव रण-वीरः। इयत्कालमनया ' श्रीमानार्यचन्द्रसिंहः समाश्वास्यानुरुद्ध ' इति भृशं प्राशंसीदसौ रत्नप्रभाम्।

समयेऽस्मिन्भ्रान्तिमीलितलोचनोऽवाङ्मुखः स्थितोऽभवच्चन्द्रः। सोऽधुनोन्मील्य विलो-चनयुगलं यावदवलोकयति तावदात्मसुहृदमपरेण समं समालपन्तमालोकयत्। तस्मादु-त्थायामौ रणवीरमानिमेषदृशा विलोकितवान्। अथ पृष्टवानयं रत्नप्रभाम्-' सखे? कोऽय-मागन्तुको नरः? ' इति।

रत्नप्रभा। अयमस्मन्महाराजो वर्तते योऽसौ दण्डयितुं निर्दिष्टो भवता।

चन्द्रः। (रणवीराभिमुखमालोक्य) नैव, नैवायमसौ?।

रत्नप्रभा। तत् कोऽयमिति परिचीयते भवता?।

चन्द्रः। (रणवीरमुखमालोक्य।) अयमपरिचितकुमारो ममानुजमनुकरोति वयसा वर्णेन वपुषा चापि।

रत्नप्रभा। (दृढनिश्चयं कर्तुकामा) किमाख्योऽसौ श्रीमदनुजः?।

चन्द्रः। (सगद्गदस्वरम्।) रणवीरनामासौ ममानुजः।

---

१ परिधानम्-अधोवसनम्। ' परिधानान्यधोंऽशुके ' इत्यमरः।

रणवीरस्तु निजाग्रजन्मन ईदृशीं दशां निरीक्षितुमक्षमोऽधिककालमिति सद्य एव चन्द्रसिंहाभिमुखमभिद्रुत्य–' अये ? आर्य ? इंहावस्थान्तरं प्रपन्नोऽसि । ' इत्यभिधाय चन्द्रमालिङ्ग्य मुक्तगलं विललाप । समयेऽस्मिन् रत्नप्रभाया लोचनयुगली प्रेमाश्रुजलपूर्णा बभूव । यदैव रणवीरो निजबन्धुमाश्लिष्टस्तथैवासौ चन्द्रेणाऽपि दृढं वक्षसा परिषस्वजे । ' कोऽयम् ? रणवीर किमु ? ' इत्युदीर्य साट्टहासमट्टहसदयं चन्द्रः । क्षणानन्तरमेव पुनरस्य मनो भ्रान्तमिति सहसा रणवीरं स्ववक्षःस्थलादपसार्य दूरं निपात्य तीक्ष्णदृष्ट्या च तदभिमुखमवलोक्य पृष्टवानमुम्– ' कोऽसि त्वम् ? इति ।

एष समुत्तिष्ठन्–' रणवीरोऽस्म्यहं भवदनुजः ? ' इति समुदतारीत् । ' किम् ? ममानुजो रणवीरः किमु ? ' इति समालप्य विचिन्तयामास चन्द्रः । परमनुन्मिषितविचारान्तरतया रणवीराभिमुखमालोक्य क्रुधा प्रोक्तवानसौ–' नैव नैव ? नासि ममानुजस्त्वम् ? मदीयरणवीरस्तु मत्प्राणप्रियामन्वेष्टुं गतवानस्ति । दुष्ट ? धूर्तोऽसि त्वं कोऽपि । ममानुजरूपं धृत्वा वञ्चयितुमायातोऽसि त्वम् । तिष्ठ तिष्ठ । तत्फलमहं त्वामास्वादयामि ' इति प्रोच्य प्रहरिसकाशादाच्छिन्नामसिधेनुकां रणवीराभिमुखं समुत्तोल्य प्रोवाच–' कुतघ्न ? त्वम् ? त्वमेव । ब्रूहि ? दर्शय ? काऽस्ति मम कुमुदिनी ? नो चेदहं त्वां निहन्मि । ' इति निगद्य रणवीरं हन्तुमभिद्रुतवान् ।

सद्य एव चतुरा रत्नप्रभा मध्ये समभिपत्य तदीयहस्तं गृहीत्वा पुरोगच्छन्तमेनं निरुद्धवती । मध्ये निपत्य समयसूचकतां चेन्न प्रायोक्ष्यदेयं रत्नप्रभा, तदा तु ध्रुवमेव रणवीरस्य प्राणास्समुदक्रमिष्यन् ।

रणवीरो निजभ्रातुरीदृशीं विक्षिप्तावस्थां निर्ध्याय परमदुःखतया मूर्च्छितो भूत्वा निपपात भूतले । तत्क्षणमेव प्रहरिणो रणवीरमुत्थाप्य पटमण्डपं नीत्वा शय्यायामधिशाय्य[3] तदीयां संज्ञां प्रत्यानेतुं प्रायतन्त । पटमण्डपं नीते रणवीरे चन्द्रो निजाभ्यर्णस्थितां रत्नप्रभामालोक्य विहसन्नप्राक्षीत् ' रत्नसिंह ? उपरतः किमु भवदीयमहाराजः ? ' इति ।

रत्नप्रभा । नायं संस्थितः[4] । मूर्च्छामापन्नोऽस्ति । चन्द्रसिंह ? अननुगुणमिदमाचरितं[5] भवता ?

चन्द्र. । प्रियवयस्य ? किं करोमि ? दुःखाकुलोऽहं जात. । नास्ति मे किमपि संज्ञानम् । रक्षितोऽयमात्मभ्रातुरिति सम्यग् व्यधायि भवता, अन्यथा न्यपतिष्यदयं वराको मदसिधेनुकाधारातीर्थे नियतम् ।

रत्नप्रभा । अपि सनाथयिष्यति पटमण्डपं भवानधुना ? ।

चन्द्रः । नैव । परं कदा त्वं मेलयिष्यसि मां कुमुदिन्या सहेति ब्रूहि ।

रत्नप्रभा । एहि । इदानीमेव मेलयामि तया सह भवन्तम् ।

चन्द्र. । ( सप्रसादम् । ) किं वदसि ? रत्नसिंह ? त्वमतिवञ्चकोऽसीति तर्कयामि

१ अनुन्मिषितम्–अस्फुरितम् । २ विलोक्य । ३ शायित्वा । ४ मृतः । ५ अनुचितम् ।

खलु ? अस्तु । कथय, काऽस्ति मे कुमुदिनी ? ।

रत्नप्रभा । अत्रैव वर्तते ।

चन्द्र । अये ? किमत्रैव वर्तते प्रिया मे ? तद् दर्शय दर्शय, प्रियमित्र ? दर्शय मे त्वरितमिमाम् ।

रत्नप्रभा । शान्तिमाकलयतु भवान् । अधिकमधीरो भवसि चेन्नोपलप्स्येत ते कुमुदिनी कदापि ? तदाधेहि शान्तिं हृदये ।

चन्द्र. । ( सप्रश्रयम् ) सखे ? शान्तिमाकलयामि । तद् गन्तव्यमधुनाऽऽवाभ्याम् । रत्नप्रभा तु– ' आम् । मामनुगच्छतु श्रीमान् । ' इति निगद्य च द्रसिंहमेकस्मिँल्लतायामि पट मण्डपे नीत्वा सुन्दरायामेकस्यां शय्यायामुपवेश्य समगादीत्– ' आर्यचन्द्रसिंह ? अत्रैवोप विशतु भवानधुना । गत्वाऽद्य कुमुदिनीं सत्वरमिह समानयामि ' ' इति ।

' सुख गन्तव्यं भवता ? ' इति सातुरमुदतीतरच्चन्द्रसिंह ।

अथ पटमण्डपाद् बहिरागत्य रत्नप्रभा प्रहरिद्वय सम्बोध्य जगाद ' युवायुभौ चन्द्र सिंहाधिष्ठितपटमण्डपमुपगम्याविदितास्मचेष्टितौ तत किञ्चिद्दूरे पर्यटतम् । नासौ ततो ऽपसरेदिति सावधानौ समुपरक्षतम् । अल्पसमयानन्तरमेवाह पुनरायामि । पर पश्यत युवा ' स्वोपरक्षणाय नियुक्तौ भटाविमाविति ' नामुना मनागप्याशङ्क्येत ? ' इत्थ तौ सूचयित्वा स्वस्वामिनो दशामवलोकयितु तदीयपटमण्डप गतवती । सम्प्रति पूर्णसज्ञावस्थायामासीनोऽभूद् रणवीर । रत्नप्रभामालोक्यातिप्रमग्र सत्कृत्य स्वभ्रातु' कुशलवृत्त पृष्टवानसौ । ततो रत्नप्रभया-कथमय सान्त्वयित्वा समुपवेशित पटमण्डपे–इति सकल वृत्त रणवीराय न्य वेदि । परस्तात् कैरुपायैरधुनाऽऽपद्येत स्वस्थतां चन्द्रसिंहस्य चित्तमित्युभौ परामृशताम् ।

पटमण्डपोपविष्टश्चन्द्रो गतायां रत्नप्रभायामेना प्रशशास बहुश । अत्रा तरे तत्र पर्य टतो प्रहरिणोरुपरि परिपतिता दृष्टिरमुष्य–इति समुत्थाय तयोरान्तिकमुपेत्य पृष्टवानयम् अये ? यमरान्किङ्करौ किमु युवाम् ? ' इति । तयोरेक. प्रहरी । ( प्राञ्जलि । ) नैव प्रभो ? नावा यमदूतौ ।

चन्द्र. । तर्कौ युवाम् ? ।

प्रहरी । श्रीमच्चरणसेवकौ ।

चन्द्र' । न खलु युवां कौचिद् वधकौ ? ।

प्रहरी । आ शान्त पापम् ? ? नेदमाशङ्कनीय प्रभुणा ।

चन्द्र । तत्कथमत्र युवां पर्यटथः ?

प्रहरी । श्रीमतां सरक्षणार्थं प्रभो ? ।

चन्द्र । ( सचकितम् । ) मद्रक्षणार्थम् ? कथय किं जातं मे ? यन्मम रक्षणाय समागतौ युवाम् ? ।

प्रहरी । दयालो ? न वर्तते सम्प्रति स्वस्थं भवदीयं मनः । विक्षिप्तावस्थामनुभवति श्रीमानिदानीम् ।

चन्द्रः । विक्षिप्तोऽस्म्यहं किमु ? ।

प्रहरी । आम्, प्रभो ? ।

चन्द्रः । ( विहस्य । ) किं तदा सम्यङ् मां रक्षितुं प्रभवेतं युवाम् ? ।

प्रहरी । क्षामविसम्यक्तया श्रीमन् ? ।

चन्द्रः । एवम् ? तदायातु युवयोरन्यतरो मदन्वर्गम् ।

तदादेशसमकालमेव तयोरेकः प्रहरी तदुपकण्ठं गतवान् । सद्य एव चन्द्रः प्रहरिणमेनं स्वकराभ्यां दृढमाभिगृह्य समुत्क्षिप्य भूमौ प्राक्षिपत् । भुवि पतनेनायं प्रहरी तीव्राघात-तया मूर्च्छितो बभूव । अथ योऽसौ प्रहरी सकलमिमं प्रकारमवलोकयन् स्थितोऽभवत्त-द्भ्यशासं समभिद्रुतवानयं चन्द्रः सहसा । स्वाभिमुखमभिद्रवन्तं निरीक्ष्य चन्द्रं वराकोऽयं प्रहरी चकम्पेतराम् । भयातिष्ठत चासौ विरचिताञ्जलिरमतश्चन्द्रसिंहस्य । -भयभीतमिममव-लोक्य प्रोवाच चन्द्रः ' किमिति बिभेषि त्वं मत्तः ? त्वं तु मित्रमपि मदीयम् । ' इति ।

प्रहरी । ( सकम्पमानस्वरम् । ) प्रभो ? किमितोऽप्यपरं चिचिन्तयति श्रीमान् ।

चन्द्रसिंहस्तु- ' किं ते प्रयोजनममुना ? मूढ ? न पश्यसि किमु- चिरान्ममाह्वयतीयं मे कुमुदिनीति ? न गच्छेयमहं यदि तदन्तिके तर्हीदमनर्हमिव दृश्येत ? ' इति व्याहरन्ना-कस्मात्ततः पलायितः । क्षणादेवायं नयनपथमपि समतिक्रान्तः । वराकोऽयं प्रहरी तम-पश्यन्नवलोक्य सम्भ्रान्तचित्तः संवृत्य मूर्च्छितं प्रहरिणमपरं सावधानं विधाय तस्मै सकलं वृत्तं न्यवेदीत् । ' बलीयसी भगवदिच्छा । ' इति कथयित्वा तौ यामिकौ स्वनरेन्द्रपट-मण्डपमुपगम्य- ' महाराजमावां दिदृक्षू स्वः । ' इति प्रतीहारं निवेदितवन्तौ । सोऽभ्यन्तरं प्रविश्य महाराजाय विज्ञापितवानिति नरेन्द्रो नरेन्द्रमहिषी चोभौ बहिरागतौ प्रहरिणोरन-योरभ्यर्णम् । महाराजमवलोक्यैवेमौ यामिकौ बद्धकरसम्पुटौ- ' कथमयं विद्रुतश्चन्द्रः ! ' इत्यखिलमुदन्तं न्यवेदयतां नरेन्द्राय । वृत्तमिदमाकर्ण्य सुतरां दुःखितौ रत्नप्रभारणवीरौ । प्रधाविताः परितः सादिनस्तदन्वेषणार्थम्; परं नोपलब्धोऽयं चन्द्र. कुत्रापीति निवृत्ता इमे निराशमनसः !

अथ रणवीरोऽयमीश्वरेच्छापरतन्त्रमात्मानं मन्यमानस्तूष्णीमेव निजसेनामादिदेश ततः प्रस्थातुमग्रे । क्षणेनैव स्वकर्मणो निवृत्य सैनिकाः ' विजयतां महाराजश्रीरणवीरसिंहः । चिरं जीवतु महादेवी रत्नप्रभा । ' इति जयघोषमुदीरयन्तो गुहगृहाभिमुखं प्रतस्थिरे ॥

अभिविलोकनिखिलाशावल्लरीकः संतापमानपितृवनकल्पसकलभुवनवलयः परिहीय-माणविपलमायासितमनोरथकुसुमगुच्छको भग्नमनस्को मलिनवदनः क्षामशरीरो राजकुमार-श्रीचन्द्रसिंहोऽयं कर्हिचित् क्वचिद्विपतन्, क्वचित् प्रस्खलद् कस्यचित्पुरःसहस्रसोरहनि-

१ पितृवन श्मशानम् ।

काविराजिनः संप्लवमानविविधजलहंसकारण्डवशालिनः शीतलनिर्मलनीरमालिनः सरोवरस्य तीरभुवमुपाजगाम। परिमुक्ताहारोऽयं चिरकालात्। केवल जीवनरक्षणार्थमभ्यवहरति फलानि कानिचित् कदाचिदसौ। क्षुधया शोकेन चास्य शरीरं दुर्बलमजनिष्ट। परिम्लानमेतस्य रुचिरं तेन शालि वदनारविन्दमपि। असौ सरोवरतीरमुपेत्य क्षणं तूष्णीं स्थित्वा स्वमनसा प्रालपत्-'अहह ? कुत्रेदानीं गच्छामि ? स्वमनोहारिणीं कुमुदिनीं पुनरुपलब्धुं नैव शक्ष्यामि किमु ? निबिडान्धकारपूर्णा इव प्रतिभान्ति मे सकला आशा । इमे निष्कृपाः पादपा, अमी निर्घृणाः पतत्रिणः, एते निर्दया. पशवोऽपि निखिला आपन्नातस्य मम परिहासमिव कुर्वाणा विहसन्तो दृश्यन्ते खलु !! अयि सकललोकलोचन लोकबन्धो ? क्वाऽस्ति मम प्राणप्रिया कुमुदिनीति दर्शय मे॥ अनया विना निष्फलं भाति मे सकलं जगदिदम्। सा एव मम लोचनचन्द्रिका, एषा एव मे हृदयाम्भोजिनीविहरणशीला कलहंसी, इयमेव मम जीवनसर्वस्वञ्च वरीवर्ति । यतो मदीयं सर्वस्वमेव वियुक्तं मत्तस्तास्थिरं ममाधिकजीवनमिह । मृत्युरेवायं सन्मित्रं मे सम्प्रति । मरणं शरणं प्रपद्यैवाहं कुमुदिनीविरहवेदनानलज्वालां शमयिष्यामि । एहि, एहि; अयि मदीयसर्वकालसङ्गिनि सखि शस्त्रिके ? एहि । त्वं मदीयहृदयरुधिरं निपीयान्तर्ज्वलितामिमां प्रचण्डविरहानलहेतितर्तिं शमय शीघ्रम् । परत्रैवात्मप्रियतमां कुमुदिनीं प्राप्स्यामीति दृढं विश्वसिमि । ' इति प्रोच्य निजावलग्नपरिकरपट्टिकाबन्धादसिपुत्रिकां बहिर्निःसारयामास ।

अथ यथैवायं स्वहृदि शस्त्रिकां निखातुं प्रावर्तत तथैव पृष्ठतः केनाप्यकस्मात्करपल्लवोऽस्य जगृहे । स्तब्धीभूयासौ परिवर्त्य पृष्ठतो यावदवलोकयति तावदस्य नयनसरणिमुपेयिवानेक काषायाम्बरशाली तेजोमालीव योगीन्द्रः । छुरिकां प्रक्षिप्यासौ कुब्जीभूय योगीन्द्रमभितो निपुणं निरीक्ष्य सहसा दन्तान् निष्पिष्य सकण्ठीरवरवं योगीन्द्रहस्तमभिगृह्य च क्रुधा प्राब्रूत- ' दुरात्मन् ? त्वम् ? त्वमेव कुमुदिनीं ममापहृतवानसि । चिरादद्य निपतितोऽसि त्वं मद्भुजपञ्जरान्तरे । तथाहमिदानीं विमुञ्चामि जीवन्तं त्वाम् ? ' इति ।

योगीन्द्रः । ( विहस्य । ) कुमार ? कोऽहम् ? इति जानासि किमु ? ।

चन्द्रः । ( सामर्षम् । ) त्वामखिल जगदिदमभिजानाति । पापं परिचिनोति सकलोऽपि लोकः ।

योगीन्द्रः । तद् ब्रूहि-कोऽहमिति ? ।

चन्द्रः । दुरात्मा शूरसिंहस्त्वमसि ।

योगीन्द्रः । कुमार ? त्वं मां किं करिष्यसि ? ।

चन्द्रः । अरेरे अतुन्दु न्यवायक कुमुदिनीलुण्टकनायक ? भूर ? व्यापादयिष्यामि त्वामहम् ?? [ इति भुवि प्रक्षिप्तां शस्त्रिकामादाय योगीन्द्राभिमुखमुत्तोलितपानसौ ]

---

१ गुहले । २ पक्षिणः । ३ दिवाकर । ४ शिरःपरिष्कृत् । ५ शरम शत्यमग् । ' कमर ' इति भाषा । ६ गर्जितनादम् ।

योगीन्द्रः। ( हस्तमुद्यम्य। ) कुमार ? शान्तो भव।

[ इति स्वहस्तेन चन्द्रमस्तकं परामृशद् योगीन्द्रः ] करस्पर्शसमकालमेव चन्द्रस्य मस्तकं स्वस्थतां प्रतिपेदे। पूर्णसंज्ञामुपपन्नोऽयं क्रूरसिंहभ्रान्त्या योगीन्द्रं तिरस्कृतवानहमिस्यात्मन्येव हृणीयमानो योगीन्द्रं क्षमां ययाचे–' प्रभो ? क्षन्तव्योऽयं बाल । अविदुःखावेगवया जातोऽयमपराधो मे। ' इति।

योगीन्द्रः। कुमार ? न किमपि प्रयोजनमत्र क्षमायाचनस्य। न भवति किमपि संज्ञानं प्रणयमूढस्य। चन्द्र ? स्वर्गीयोऽयं तव प्रेमा ? ? नूनं निर्मलप्रेमामृतसरोवरमसि। सन्तुष्यामितरामहं त्वयि। ब्रूहि किमिच्छसि त्वमिदानीम् ?।

चन्द्रः। दयालो ? किं मत्साहाय्यं कर्तुमत्र प्रस्थितो भगवान् ? इत्थमेव यदि ? तदानुगृह्य कुमुदिन्या सह योजयतु मां प्रभुः।

योगीन्द्रः। अपि दिदृक्षसे तामिदानीम् ?।

चन्द्रः। ( प्राञ्जलिः ) आं दिदृक्षे तां प्रभो ?

योगीन्द्रः। ( हस्तमुत्थाप्य। ) तत्पश्य निजाभिमुखम्।

अथ स्वसम्मुखे निरीक्षमाणो ददर्श चन्द्रो यद् " विशालयोर्गिरीन्द्रयोर्मध्यवर्तिनि महति भयानके भस्मप्राये दुर्गे क्रूरसिंहः कुमुदिनीमनुनयति बहुविधं निजाधीनां विधातुम्; परमियं मनागपि नाङ्गीकुरुते तदीयमभ्यर्थनमिति नृशंसः क्रूरसिंहोऽसौ तस्याः करचरणं निगडयित्वा तां कस्यचिन्महीरुहस्य शाखायामवलम्बयति। " इति विलोक्यातिवेलं जज्वाल रोषानलेनासौ। एवं निजशक्तिकां निर्विघ्नमेनसीभूय निबद्धमुष्टिकः कुमुदिनीमोचनाय क्रूरं निहन्तुमभ्यद्रवत्। तावदेव तदीयनेत्रपदवीं प्राप्तजानन्तरिक्षचुम्बिनीभिर्द्वितितिभिरनिभयङ्करो दुर्गपरिखाभ्यन्तरे जाज्वल्यमानः प्रचण्डः कृशानुः।

दृश्यमिदमवलोक्य पश्चादपसृत्य चन्द्रो योगीन्द्रचरणयोः प्रणिपत्य प्रार्थयाञ्चक्रे– ' प्रभो ? परित्रायस्व मे कुमुदिनीम्। ' इति। इदमाकर्ण्य योगीन्द्रो निजमुत्तम्भितं हस्तं पुनराचकर्षेति सकलमिदं दृश्यमन्तर्हितं बभूव। अतो विस्मयस्तिमितमना अपृच्छच्चन्द्रो योगीन्द्रम्–' भगवन् ? यदिदमखिलमवालोकि मया तदामुत्त स्वप्नः किमु ? ' इति।

योगीन्द्र.। चन्द्र ? सत्यमिदमखिलम् ? किन्तु यत्स्थलमालोकि त्वया तदितोऽतिविप्रकृष्टं वर्तते। त्वामतिदुःखाकुलमालोक्य कुमुदिनीदर्शनप्रबललालसाञ्चालोच्य ते निजयोगबलेनाहमतिदूरवर्ति दृश्यमिदं नैदिष्ठीभेवंद् त्वामदर्शयम्।

चन्द्र.। भगवन् ? किं तत्स्थलमितोऽतिदूरं वर्तते ? अधुना प्राणिति किमु मे प्राणप्रिया कुमुदिनी ? ?

योगीन्द्र.। आम्। सुचरित्रेयं वरवर्णिनी स्मारं स्मारं त्वामवधारमवधारं रोदं रोदं कथं कथमपि दिनानि क्षपयति तत्र वसन्ती। यत्रेयं निवसति साध्वी तस्मात्स्थानमितो विंशतिगव्यूतिमितदूरे वर्तते।

चन्द्र. । तत् किमुपलप्स्यते मदीयकुमुदिनी ? ।

योगीन्द्र. । आमुपलप्स्यते किन्तु धैर्यमाधेहि स्वहृदये । सरसं स्वादुमधुरञ्च भवति फलं धीरतालतायाः ।

चन्द्र. । ( प्रणम्य । ) प्रभो ? किमिदानीमनुष्ठेयं मया ? ।

योगीन्द्र । तत्सूचयिष्यति ते मतिस्त्वाम् । परमधुना गच्छामुना सरलमध्वना । सम्भाषायां ज्वलज्ज्वालाजालजटालपरिखायां निरमेस्त्वम् । गच्छ, साधयामि साम्प्रतमहम् ।

चन्द्रः । दयानिधे ? कदा पुनरस्मद्दर्शनानुग्रहेण बालकमिमं पारयिष्यति प्रभुः ? ।

योगीन्द्रस्तु– ' आशङ्कालं कर्ताऽसि साहाय्यं ते । मङ्गलं तनोतु तव मङ्गलनिधि परमेश्वर. ?? ' इत्याशीः प्रथित. क्षणेनैवान्तर्दधे । अन्तर्हिते योगीन्द्रे चन्द्र.– ' किं साक्षात्परमेश्वरस्तु नैजागतो भवेन्मम साहाय्यं विरचयितुम् ? अथवा महात्मद्वारैव साहाय्यं रचयति सदा परमेश्वर ? ? कोनु प्रभुरधिगन्तुं प्रभोरगम्यलीलाम् ? ' इति विमृशन्नेव योगीन्द्रनिर्दिष्टवर्त्मना प्रतस्थे ॥

इतस्तु गिरिदुर्गे– ' अवसितोऽद्य षाण्मासिकोऽवधिरिति नियतमेव समेष्यति नृशंस क्रूरसिंह ! ' इति सम्प्रधार्य कुमुदिनी विमला चोभौ महाचिन्ताकुले समवर्तेताम् । ' कथं निजशीलं रक्षणीयमिति विचारो मुहुर्मुहुराकुलयति स्म कुमुदिनीहृदयम् । परं न शशाक किमपि निर्णेतुमियम् । अतिदुःखाकुलमानसाऽन्ते परमेश्वरं प्रार्थितवती कुमुदिनी–'जगदीश्वर ? कीदृशं क्रियचास्ति तव विलसितमितीच्छया तदियत्तया वा नाकलयितुमलमयं स्वल्पज्ञजीव. । इति कृतैवायमपारे संसारसागरे दुःखतरङ्गाकुले निमज्जनोन्मज्जनमाचरति । यदासौ प्राणी दुःखेनाभिकारो भवति तदानीमेवैष भगवन्त संस्मरति । तदपि तदपराधं क्षममाणः प्रभुस्त्वदीयमखिलं दुःखजालमपाकरोति । ' इतीत्थं चिरकालं निमग्नमनसा प्रभुगुणगणगानं कृत्वा स्तुत्वा चान्ते रुरोद । रुदतीमिमां सुन्दरीमवलोक्य विमला समाश्वासयन्ती तामायभाषे–' सखि ? किमिति रुद्यते त्वया ? मा भैषीरियदपि ? यद्यपि तिष्ठन्ति प्राणा ममास्मिन् वपुषि तद्यपि नु नृशंसोऽयं नैव धर्षयितुं भविष्यति निजगर्हितकर्मणि ?? प्राणान्तकरेणापि तव शीलमहं रक्षिष्यामि ? ' इति ।

विमलायाः शान्तिदायकेन वचोनायकेन मनागाकर्ण्य शान्तिं प्रोवाधना कुमुदिनी– ' सखि ? कदाचित् नूनं मनागनुमिह तिष्ठतो भवेदिति साम्प्रतमेवायमिह समेष्यति ? ' इति । ( स्मृत्वा । ) 'हा ? प्राणप्रिय चन्द्र ? क गतोऽसि ? त्वदीयं भयदीपा क्रियते, म्लायति, रोदिति, ताम्यति, मुह्यति, वेपते, विलपति, मूर्च्छति बालवरतनुः । तदागच्छ त्वद्दर्शनदिदृक्षामिमां पारयस्व शान्तिप्रदानेनोपपत्तुं भवान् । प्राणप्रिय ? त्वदीया कुमुदिनीयं प्रतिदिनं त्वामेव विलपति, ध्यायति, गायति च । तदेहि सत्वरमेहि, सुखं विधेहि मानिनी दुःखम् । ' इति ।

१ [illegible]

विमला। सखि ? समाश्वसिहि। आर्यचन्द्रसिंहस्त्वदन्वेषणार्थं निर्गतो भवेदिति प्रत्येमि।

कुमुदिनी। सखि ? मम प्राणेश्वरो देवरो रणवीरसिंहश्चोभौ सकलां ससुमेरुकैलासमिलामपि भ्रान्त्वा मां विचेष्यत इति विभावयामि। निश्चितमेव मदन्वेषणाय निष्क्रान्तौ भविष्यत इमौ। केनाप्युपायेनोपलभ्य स्थलमिदमुपागमिष्यत एताविति कथयतीव मे मनो निकामम्। परतः प्रभुः प्रमाणम्।

अस्मिन्नेवावसरे नृशंसं क्रूरसिंहं स्वसमीपमायान्तं दृष्ट्वातुरिमे ललने। तदभ्यर्णमुपेत्य स्मिताननः कुमुदिनीसम्मुखमालोक्याचचक्षे राक्षसः–‘ प्रिये कुमुदिनि ? विचिन्तितं त्वया पूर्वापरमधिरमिति तर्कयामि। तत्कथयाधुना–‘ किं प्रयच्छसि मे प्रतिवचनम् ? ’ इति।

कुमुदिनी। मदनान्ध ? श्रुतं किमु कदापि– ‘ भ्रष्टा सतीति ’ त्वया ? तत्किमसकृन्मां पृच्छसि ?।

क्रूरः। ( सविनयम्। ) कुमुदिनि ? किमिति मामवमन्यसे ? किं नैव कामयिष्यसे माम् ?।

कुमुदिनी। कामयिष्ये ? क्रूरसिंह ? त्वामहं हन्ता स्वसहोदरसदृशं कामयिष्ये। नय मां निजनाथसन्निधौ। भद्रं करवाणि ते प्रभुः, प्रणिपतामि ते चरणयो. ? [ इत्यभिधाय पर्यश्रुमुखी चन्द्रमुखीयं निपतिता क्रूरसिंहचरणयोः। ]

क्रूरः। ( विहस्य। ) किं पुनरहं त्वां चन्द्राय प्रत्यर्पयामि ? स्वहस्तगतं त्यजेयमहममृतफलं किमु ? नैव नैव ? नेदं संभाव्यते कदापि ? कुमुदिनि ? मदीयच्छन्दोऽनुवर्तिन्या भवितव्यमेव त्वया खलु ?? जातोऽहमन्धस्तव प्रेम्णा तदपि सुन्दरि ? अङ्गीकुरु मामनुगृह्य। सततं सुखयिष्यामि त्वामहम्।

कुमुदिनी। स्वप्राणेश्वरे–एवाहं तु सर्वविधं सुखं समाविष्टमुपलभे।

क्रूर। दुराग्रहमहिले ? मन्यस्वाधुनाऽपि मन्यस्व। नोचेदन्ततः पश्चात्तप्स्यते त्वया। सुन्दरि ? विक्षिप्तोऽस्मि जातस्त्वदर्थमहम्। न कुरु मां निराशम्।

कुमुदिनी। नराधम ? किमिति स्वहस्तेन रोपयसि विनाशबीजम् ? विमूढ पापिष्ठ ? किमिति क्षणभङ्गुरमिमं देहमभिमन्यसे ? अरेरेऽनङ्गगर्वबर्बर ? बहिः सुन्दरं दृश्यमानमिदं शरीरं रुधिरमांसमेदोमज्जामलमूत्रपरिपूर्णं हि वर्तते तत्किमर्थमेवंविधं पूतिगन्धिकायं ध्यायसि ? विमृश रे कामान्ध ! विमृश पश्य, न विद्यते किमपि बाह्याकाररमणीयेऽस्मिन् वपुषि त्वङ्मांसास्थिरक्तादृते। अतिदुर्गन्धपूर्णमभ्यन्तरमस्य ?

क्रूरः। इन्दुमुखि ? सत्यं त्वयोदितम् ? परमभ्यन्तरे तिष्ठति तदखिलम् ?? किन्तु मुह्यति मम मनो बाह्यमिदं सौन्दर्यमवलोक्य। तदिदानीं त्वमधमा मामालिङ्ग्य क्षमयान्वर्ज्वलितमिदं मम मर्मस्थलम्।

कुमुदिनी। ( स्वगतम्। ) पराकाष्ठा खलु ??? नान्या सरणिरेव मरणं विना ??

---

१ मेखला रशना काञ्चीति यावत्। २ इला=पृथिवी। ३ दुर्गन्धमयदेहम्।

( प्रकाशम् । ) नराधम ? नृशंस ? एहि, त्वदायत्तेयं विधीयते तनु । ब्रूहि रे मदनान्ध ? ब्रूहि । कतमदङ्गं कामयसे मे ? इमे नयने निरीक्ष्य विक्षिप्तोऽसि यदि ? तर्हि नेत्रे समुत्पाट्य तुभ्यमर्पयामि ? आभ्यां स्तनाभ्यां विमोहितोऽसि चेत्तरौ निकृत्य वितरामि ते ? बहिराकाररुचिरां रुधिरामिषपुरीषदूषिकापिञ्जूषादिमलमूत्रालिप्तावयवां दुर्गन्धसम्पुरच्छादिकां त्वचं विलोक्योन्मत्तोऽसि चेत् त्वम्; तदेमामसृग्धैरा विदार्य ददामि खलु ?? कुचावलोकनमुग्धोऽसि, यदि तदा स्तनाविमौ छित्त्वा निर्वपामि ननु ते ? ब्रूहि ब्रूहि, पापिष्ठ ? कस्मिन्नवयवे संलग्नं ते मनः ? मदीयाशिरोरुहाः कुन्तलाश्चेदभिलष्यन्ते तानपि तर्हि व्यपरोप्य चिकुरान् विश्राणयितुं सन्नद्धाऽस्मि । तन्मा कुरु विलम्बम् ?? पूरय निजकलुषकलशमविलम्बितमेव ? यदिदं कलेवरं कदाचन पञ्चत्वमाप्स्यति तद् गगनमध्येवाहं मृत्तिकाधीनं विधातुं सज्जाऽस्मि । शीलरत्नसंरक्षणाय मरणादपि न बिभेमि । सतीत्वपालनकृते परः सहस्राभी राजपुत्रदेशीयवीररमणीभिर्हृदद्भानौ हुत्वाऽऽत्मान भारताभिजनयोषिदभिमानमद्यापि प्रथयन्तीरावनिमण्डले लब्धवर्णानि सुवर्णरञ्जिताक्षरैर्मुद्रापितानि नामाक्षराणि देदीप्यन्ते जगदितिहासपत्रावलीषु । अहमपि स्वपातिव्रत्यपालनार्थं विकरालात् कुटिलकालादपि न त्रसामि मनागपि ! । तद् ब्रूहि ब्रूहि-कलेवरस्यास्य कतमदङ्गं मम कामयसे निकामम् ! ।

क्रूरसिंहः । कोमलाङ्गि ? नाहमभिलषामि त्वदीयं निर्जीवमङ्गम् ? ननु यदिदमुदीर्यते त्वया मृदायत्ता तनुरियमग्ने भवितेति तथ्यमेव ? ? परमिदानीन्तु तदमन्दानन्दप्रदं प्रतिभाति मे सुन्दरं कलेवरम् । हृदयङ्गमे ? विमूढोऽहं जातोऽस्मि त्वामवलोक्य ! ? तदन्दौय सम्प्रति समनुकम्प्य विरहानलसंतप्तं प्रणयिनोऽस्य हृदयं तर्पय निजाधररसामृतदानेन । प्रिये ? तवाधररसामृतमाधुर्यमधरीकरोति सुधामाधुरीमपि ??

कुमुदिनी । ( सक्षोभम् । ) रे गर्ह्यकर्मकारिन् क्रूरतर ? अप्यहं दृश्येव रतिरिव दर्शनीया, परं हालाहलपूरितं ममोदरम् ?? अपि मन्येथाः कोमलाङ्गी मा किन्तु वज्रमयोगाहमस्मि खलु ? ! अस्मि तीव्रविषधराहं सर्पिणी ?? मदीयस्पर्शसमकालमेवालेक्ष्यामि तव प्राणानहम् ?? ।

क्रूरः । चण्डि ? अपि परिचिनोषि माम् ? अयमपि क्रूरसिंहो विषचूषकः कृष्णः काकोदरो वर्तते । तत्प्रसन्नतया भव मदधीना । न खलु प्रभवसि प्रभारयितुं मामसुना स्वमात्मप्रशानमयवचसा मनागपि ?? ।

कुमुदिनी । आत्महतक ? मृगतृष्णिकामिव पुष्णासि तृष्णाम् ? यद्बद्धौन्दोलिकाशायितो

---

१ आमिषं मांसम् । २ पुरीषं विष्ठा । ३ 'दूषिका नेत्रयोर्मलम् ।' ४ 'पिञ्जूषं कर्णयोर्मलम् ।' ५ असृग्धरा=त्वक् । ६ ददामि । ७ अङ्गे । ८ आदृष्य । ९ 'चिकुरः कुन्तलो बालः' । १० प्राप्तप्रतिष्ठानि । ११ शीघ्रम् । १२ अधरीकरोति निरस्करोति । १३ आन्दोलिका दोला बालशय्या वा ।

बालको मृगाङ्कमुपलब्धुं कामयतेतरां तद्वदेव तवापीयं कामना खलु ? । प्राणान्तेऽपि कुमुदिनीयं नैवाधीना भविष्यति तव दुष्प्रवृत्तेः।

क्रूरः। कुमुदिनि ? न खलु संजानासि क्रूरमेनं विषधरम् ! । अन्यथा विप-स्यसे त्वम्।

कुमुदिनी। पापिष्ठ ? नाहमुद्विजे त्वत्तः। परमेश्वरोऽस्ति मां रक्षितुं परमेश्वर।

क्रूर.। बलादहं त्वां वशयिष्यामि।

कुमुदिनी। नास्ति शक्तिः कस्यापि धर्षयितुमपि मां किंपुनर्वशयितुम् !।

क्रूर.। दुराग्रहिले बाले ? तदधुना पश्यामि-कथं रक्ष्यते तव शीलमिति ? इदानीमेवाहं त्वां धर्षयामि। ( इति व्याहृत्य नृशंसोऽयं कुमुदिनीमभ्यद्रवत्। )

तत्क्षणमेव याऽपौ सकलमियत्कालं पार्श्वे स्थितैव शृणोति स्म; सेयं विगलद्धृदया विमला रोषारुणनेत्रा सती मध्ये समभिपत्य क्रूरम्-' रे मदनमूढ ? विमृश किञ्चित् ! किमिति कदर्थयसि पतिव्रतामिमाम् ? ' इति प्रोक्तवती।

क्रूरः। ( साश्चर्यम्। ) अहो ! किम् ? विमला किमियम् ? धन्यासि रे धन्यासि ? बुद्धिमतीव दृश्यसे ननु भृशम्। कदा नु संवृत्तासि त्वं पतिव्रता ?।

विमला। यदारभ्य जातं त्वया सह पाणिग्रहणं मे।

क्रूरः। जातं ते मया सह पाणिग्रहणं किन्तु त्वन्तु नासि ममानुगुणा भार्या। इयमेव सुन्दरी वर्तते मदनुरूपा पत्नी। एषा एव मम प्राणवल्लभा ?।

इति विमलां निगद्य क्रूरसिंहो यथैव कुमुदिनीमभ्यगमत्तथैवामुं निरुध्य धिक्कृत्य चाभ-यीद् विमला-' नृशंस ? सतीं संपीड्य नैव शुभं संभावितं ते ? क्रूरसिंह ? विमृश। अनवधिस्तव दुरितकर्मणाम्। हा हन्त ? कियन्तो हताः ? ? कियन्तोऽमी व्यभिचाराः ??? रे क्रूरसिंह ? परमोऽवधिरयं जातस्ते दुरितानामिति विमृशाद्यापि। दुष्परिणामो भविता तवान्ते इति विचिन्त्य सतीमिमां संपालय नारीमिति। '

क्रूरः। ( सक्रोधम्। ) पांसुले ? अलमलं प्रजल्प ! । नाहं शुश्रूषे तव भषणमिव भाषणम्।

विमला। न शुश्रूषसे चेन्मम कथनं बलादहं त्वां श्रावयिष्यामि।

क्रूर.। अप्यपसरसि न वा त्वमितः ?

विमला। नाहमपसरामि।

क्रूर। हा हन्त ? त्वमपीदृशी भविष्यसीति नाहमज्ञासिषम्। अन्यथा क्षणमेकमपि सुन्दर्याऽनया सह त्वां नैवास्थापयिष्यम् ? कुलटे ? अपयाहि त्वमितः। भव मे नयनान्त-रिता।

विमला। क्वयामि ? क्व याम्यहम् ? त्वं मामानीतवानसीति कुत्राधुना गच्छामि ?

---

१ पांसुला कुटिला व्यभिचारिणीतियावत्। २ भषणं श्वरवः।

अस्त्यह तवार्द्धाङ्गिनी ।

क्रूर । नासि त्व मे किमपि । गच्छ, यथासुख कुत्रापि ।

विमला । तन्मा परिणीय किमिति त्वमवञ्चय खलु ? ।

क्रूर । यथाभिरुचित मे । अपसरसि नवा त्वमधुना ? ।

विमला । नापसरामि । नैवापसराम्यहमित कदापि ? ।

क्रूर । चरणप्रहारैस्त्वा नि सारयिष्यामि तदा ? ।

विमला । भवतु । कुरु यदभिरुचितम् । सतीरक्षणार्थमह त्वत्पदप्रहारमपि पुष्पप्रहार मिव मस्ये खलु ? ? ।

क्रूर । एवम ? ( अन्यतो विलोक्य । ) अये ? क कोऽत्र भो ? ।

तत्क्षणमेव– ' आ प्रभो ? ' इति प्रोच्य बहिर्वर्तिनौ बलिनौ द्वौ सैनिकौ तत्राभिद्रुय समायातौ । ' निगडयत रज्ज्वा कुलटामिमाम् ? । ' इति ता निगडयितु तावादिशत्क्रूर । तत्कालमेव तन्निदेशवर्तिनौ भटौ निष्कलङ्कामिमा विमलामश्रृङ्खलयता रज्ज्वा । विमलहृदयाया विमलाया विलोचनाभ्या प्रावहदश्रुप्रवाह । तदपि किञ्चिदपि नाद्रवदस्य पाषाणमय हृदयम् । आदिष्टवानसौ दुष्ट सैनिकौ वराकामिमामबला कशया ताडयितुम् । हा हतभागिनि विमले ? कियन्नु कष्ट सह्यते त्वया ! तीव्र दण्डयिष्यति खलु त्वत्पीडयितार नरन्यायकारी प्रभु । नृशसस्य क्रूरसिंहस्य विलासानन्दोपहारीभूतायास्तापसाया विमलाया पृष्ठोपरि यमदूताकारौ भटौ कशया ताडयितुमारेभाते । विनैकमपि चीत्कारमिय मौनमुखी पतिव्रता विमला तीव्रकशाप्रहारान् सोढवती । न पारित कुमुदिन्या कष्टमिद द्रष्टु विमलाया । आत्मार्थमियमापतिता विपत्तावीदृश्यामिति विचिन्त्य धैर्येण तत्पुरस्तादुपगम्य कुमुदिनी कशाप्रहारान्निवार्य तौ भटौ प्रत्युवाच– ' नृशसौ ? किमर्थ निरपराधामिमा नारीं प्रहरथ ? ' इति ।

अथैव क्रूराभिमुखीभूय जगाद– ' नराधम ? दण्डय, ताडय, मारय वा मा यथेष्टम्, किन्तु विमलामिमामबलामनुकम्पस्व त्वम् ' इति ।

क्रूर । ( सकोपम् । ) अयि दुराग्रहिले बाले ? त्वा तु नैवाह विमुञ्चयम् । तवापी दृश्येत्र दुर्गतिर्भविष्यतीति पराङ्मुखाधुनाऽपि ।

कुमुदिनी । नपुसक ? उद्यतास्मि सोढुमह तव दण्डम् ? पर नैवान्ययथेयमारमविचार कदापि ?

क्रूर । ( सैनिकौ प्रति ) इमामपि निगडयित्वा बहिरानीय महीरुहशाखायामालम्बयतमिति स्वयमेवानुनेष्यति मामियम् ।

तदादेशसमकालमेव रज्ज्वा निबध्य कुमुदिनी बहिर्नीत्वा समीपवर्तिन कस्यचिन्महीरुहस्य शाखायामवालम्बयता तौ । विटपविटपावलम्बमाना कुमुदिनीय सकलमपि कष्ट सहमाना परमेश्वरस्मरण कर्तुमारभत । शाखाशाखायामालम्बितेयामिति निशम्य निगडिता

ऽपि विमला संगर्जन्ती समगादीत्–'रे आततायिन्? दयस्व किञ्चित्? किमर्थं सतीमिमां संपीडयसीति?'।

क्रूरः। तूष्णीमेधि। प्रजल्पसि पुनः किमु? (सैनिकौ प्रति) प्रहरतमिमाम्। पुनरिमां वराकीं विमलां कशया प्रहर्तुमारभेतां तौ। कशाघातमसहमानान्ते मूर्च्छिताऽभूदियमवला। तां ततः कुमुदिनीसमीपे नेतुमादिश्य स्वयमपि कुमुदिनीनिकटं ययौ। एतमवलोक्य निमीलितं निजनेत्रयुगलं कुमुदिन्या। तस्मिन्नेव क्षणे विचेतनां विमलामुत्क्षिप्य तत्रानीतवन्तौ भटौ। बहिः प्रवहता शीतलानिलेन क्षणाद्द्वित्रोपागतचेतना विमलेयं तरुशाखालम्बितां कुमुदिनीं विलोक्य तारस्वरमरोदीत्। रुदतीयं निवारिता भटाभ्याम्। साश्रुनेत्रा कुमुदिनीं विलोकयन्ती निषण्णा विमला। क्षणं मौनमाकलय्य पुनरुवाच कुमुदिनीं क्रूरः–'किम्? अद्यापि न परिवर्तितो निजविचारः किमु? कुमुदिनि? प्रतिपद्यस्व मे वचनम्। अन्यथोपपन्नं ते दारुणं मरणमिति।'

कुमुदिनी। चण्डाल? नाहं बिभेमि मृत्योः। उद्युक्ताऽस्मि मर्तुम्। अपि कियदपि मां त्रासय वा, पीडय वा, कर्तय वा, मारय वापि त्वम्; परं नैवाहं भविष्यामि पशुवृत्तेस्तवाधीना?।

क्रूरः। प्रचण्डानले दाहयिष्यामि त्वाम्।

कुमुदिनी। अपि दाहय मां दहने? उत्तारय वा कलेवरान्मम त्वचम्; आहोस्वित् मदङ्गानां राजिकानिभानि शकलानि वा कारय यथेष्टम्?। परं नैवाहमुरीकरिष्यामि कदाचिदपि त्वदायत्ततामिति दृढमवेहि।

क्रूरः। अहमत्युग्रान् दन्दह्यमानान् लोहशलाकादण्डैस्त्वदङ्गेषु प्रवेश्य शरीरात्तव पिशितं निष्कासयिष्यामि। अथ यदा त्वमातिदुःखेनाक्रन्दिष्यसि तदैवाहं मोदिष्ये। इत्थमतिदारुणमारं मारयिष्यामि त्वामित्यधुनापि मन्यस्व।

कुमुदिनी। दुरासद? पतिव्रता नार्यो निजप्राणेश्वरेण सहातिप्रसन्नमनसा प्रविशन्ति चितानलम्। अतस्त्वत्रासितशेभ्यो लोहकीलेभ्योऽपि न बिभेमि मनागपि! "यद्रुचितं भव।" इति तां निगद्य सैनिकानाबभाषे क्रूरसिंहः 'अयि वीराः? श्वः प्रातररुणोदयात् प्राग् दुराग्रहमहिलामिमां ललनां देव्यै बलिं दास्याम– इति तामिदानीं तरोरवतार्य देवीसन्निधौ नयत यूयम्। अद्यतनीं रजनीमियं दारुणं पीडनीया भवद्भिः। श्वः प्रभाते कृशानुतप्तैरायसदण्डैरस्याः शरीरान्मांसं निष्कास्याग्निकुण्डे स्वल्पशो हुत्वा देव्या उपहारीकर्तास्महे वयम्। अतस्तत्रोपगम्याग्निकुण्डमपि सज्जीक्रियताम्। त्वर्यतां त्वर्यताम्। न किञ्चिन्मात्रमपि प्रमादोऽत्र कार्यो युष्माभिः।' इति। अथ तरोरुत्तार्य कुमुदिनीं प्रचलितवन्तो निम्नोन्नतमार्गसैनिकाः। क्रूरस्य रोमहर्षणं भयङ्करं वचो निशम्य कुमुदिन्याश्चातिदुर्गतिमालोक्य भिया कम्पितुमारभत विमला। अस्याकुलेयमुत्थाय क्रूरसिंह–

*

चरणयोर्मस्तकं निधाय चोक्तवती 'क्षम्यतां प्राणेश ! क्षम्यतामियम् । परित्रायस्व कुमुदिनीम् । अनुगृह्यतामियं भवतेति ।'

क्रूर । ( चरणाभ्यां प्रहृत्य । ) रण्डे ! तूष्णीं भव । नायं समयो दयाशब्दप्रयोगस्य ।

विमला । प्राणनाथ ! परित्रायतामियं भवता । सुकुमारतया नालं सोढुमियं दारुणं भवदीयशासनम् । अनुकम्पनीया राजनन्दिनीयमित्येव याचे भवदन्तिकं तस्याः प्राणभिक्षाम् । [ इति निगद्य दीनवदना विमला पुनरग्रहीत् क्रूरचरणौ । ] तां दूरमपसार्य जगाद नृशंसोऽयम्– 'दुष्टे ! एषोऽहं तव भिक्षां प्रदद्यामभिहन्मि । तूष्णीमेधि त्वमिति ।'

नृसिंहस्येदं वचनमाकर्ण्य रोषारुणनेत्रा सञ्जातेव विमला । बन्धनदशायामपि घोरं संगर्ज्य व्याहृतवतीयम्– 'दुरात्मन् ! गच्छ, नाहमद्यारभ्य तव भार्या त्वमपि नासि मम पतिः । त्वदीयदुरितकर्मणां फलमवश्यमेव दास्यति ते परमेश्वरः । चाण्डाल ! आसन्नोऽयं विनाशस्ते इत्यवेहि । अद्यप्रभृति वैरिणीभूताऽस्मि तेऽहम् । यावज्जीवं त्वत्प्राणग्रहणकर्मणि व्यापृता भविष्यामीति ।' क्रूरसिंहस्तु 'कुलटे ? नाहं जीवन्तीं त्वां मुञ्चामि । कुमुदिन्या सह तवापि शरीरं देव्या उपहारं करोमि । अमितोऽद्य निशीथे नेष्यसे । तान् कुरु परमेशस्मरणम् । श्वो विभाते त्वमपि सुरलोकं प्रस्थातासे ।' इत्यभिधाय चतुरो वीरान् विमलोपरक्षणं कर्तुमादिश्य निशीथे तां देवीनिकटमानेतुञ्च निर्दिश्य ततो निष्क्रान्तः ।

कुमुदिनीवियोगेन नृशंसस्यास्य दारुणशासनरचनया चैव विचेतनीभूय विमला निपपात भूतले ॥

+ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य +
कृतौ ईशोपनिषत्काव्यभव्याग्रजे कुमुदिनीचन्द्रे द्वादशी कला ॥

---

# अथ त्रयोदशी कला

---

" न तच्चक्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ "

[ पञ्चतन्त्रके ]

" हा हा देवि ! स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ "

[ उत्तररामचरिते ]

१ विधुरः विह्वलः ।

* यदैव शूरसिंहः कुमुदिनीसमीपमुपेत्य तामभ्यर्थयाञ्चक्रे तदानीमेव रणवीरो निजसेनया साकं गुप्तगृहाभ्यर्णमाजगाम। प्राग् यत्र प्रविवेश चन्द्रसिंहस्तत्रैव स्थले रणवीरो निजसैनां सन्निवेशयितुमादिदेश सेनान्यम्। गुप्तगृहद्वाराग्रतो निवेशितानि निचोलितपटकुटीराणि सैनिकैः। रणवीरार्थञ्चोच्छ्रितो महानेको मञ्जुपटमण्डपः। सायंसमये आगमनासमं मानसिंहं सेनापतिमितरांश्च त्रीन् नायकान् सहादाय रणवीरो गुप्तगृहद्वारनिहितां शिलामुपगम्य तत्कीलयन्त्रं निपीड्यापसार्य चेमां शिलां प्राविशदभ्यन्तरे गुहायाः। पश्यतामेव नृणां दलं शनैरधोऽवतर्तुमारभे सोपानपरम्परया। पुरोगामिना नायकद्वयेन धृतमभूद्धस्तकरे प्रज्वलितं स्थूलदीपिकायुगलम्। तदीयप्रकाशे सम्यगवालोक्यत पन्थाः। सर्वे गुहातलमवतीर्य तिर्यग्वर्त्मना काष्ठपुत्रिकाधिष्ठितद्वारान्तिकमागम्य युक्त्या द्वारमपावृत्य चन्द्रप्रकाशविरहितमपि चन्द्रालोकैर्भासितं रिक्तप्राङ्गणमासेदुः। तत्र क्षणं विरम्य परितो दृष्टिं निक्षिप्य स्वामी देवीप्रतिमाग्रं समागतः। यन्त्रकीलेन देवीमूर्तिमुन्मुद्र्य स्वनायकांस्तदीयरहस्यं समवबोधयद् रणवीरः। तस्याः प्रतिमायाः विचित्ररचनां विज्ञाय विसिस्मियिरे नायकाः। अथ यथास्थितां मूर्तिं मुद्रितवानसौ।

अत्रान्तरे रणवीरस्य दृष्टिस्तत्र कियद्दूरवर्ति पर्यटतोरपरिचितपुरुषयोरुपरि परिपतिता। 'क्रूरसिंहभटाभ्यां भवितव्यमाभ्याम्' इत्यवधार्य रणवीरो निजनायकत्रयमादिदेश स्वसमीपमानेतुमेतौ। तदाज्ञामनुकालमेव त्रयोऽमी नायकास्तयोरभिमुखं गतवन्तः। इमानात्मसम्मुखमागच्छतो विलोक्य सम्भ्रान्तौ बभूवतुस्तौ। तयोरभ्यर्णमुपेतास्त्रयोऽमी नायकाः। एषामन्यतमस्तौ बभाषे- 'भ्रातरौ ! न भयं कुरुतम्। नायाता वयमाहन्तुं भवन्तौ। किन्तु स्वमहाराजान्तिकं नेतुं वा वयमागताः स्म' इति।

अतस्तयोः सधैर्यमन्यतरेण पृष्टम्- 'कतमस्य महाराजस्य पाश्र्वमावां नेतुमभिलषन्ति नौ भवन्तः ? क्व च सन्ति भवन्तः ?' इति।

नायकः। वयममरकण्टकाधिपतिमहाराजधीरणवीरसिंहस्यानुचराः स्मः इति तदाज्ञयैव वां तदुपकण्ठं नेतुं वाञ्छामः। मा भैष्टं युवां मनागपि ! अस्मन्महाराजः सुतरां दयालुर्विद्यते। आगम्यतामस्माभिः सह भवद्भ्याम्।

'यदभिरुचितं भवताम् ?' इत्यभिधाय भटाविमौ मौनवदनौ तैः समं रणवीरनिकटमागतौ। रणवीरस्य भव्याकृतिमवलोक्य तत्प्रभावधर्षिताविव तौ प्रणम्यामु सप्रश्रयमेकतः स्थितौ।

रणवीरः। भटौ ! मा भैष्टम्। नाहमिच्छामि मनागपि वां पीडयितुम्। केवलं क्रूरसिंहस्य तस्य सकाशाद् विमोच्य वां मन्मार्गमारोपयितुमभिलषामि। कथ्यताम्। कोऽभिलाषो वर्तते युवयोः ?।

भटौ। ( साश्चर्यम्। ) महाकृपालो ! क्रीतोपहृता दासाविमौ। तथ्यं प्रभोर्वचनम्। दारुणं प्रपञ्चं श्रीमन्तमाराम। भगवच्चिदंशमनुष्ठानुयुष्वतौ हि सदावाम।

---

१ अलीकं प्रलाप।

रणवीरः। समीचीनम्। तदद्य वामहं स्वसेनायां प्रवेशयामि; परं न विधेया कृतघ्नता कदापि। अन्यथा पशुमारं मारणीयमन्ते भवन्ताविति स्मरणीयमेतत्॥

भटौ। प्रभो! परमेश्वरं साक्षीकृत्य प्रतिजानीव आवाम्– 'नैव कदापि श्रीमतां कृत-घातितां करिष्याव' इति।

रणवीरः। वरम्! इदानीमहं प्रश्नद्वयं प्रष्टुमभिलषामि। अपि सत्यमुत्तरं दास्यते न वा?।

भटौ। आवामक्षरशो भूतार्थमेवात्रभवते निवेदयिष्याव इति प्रष्टव्यौ निःशङ्कमनुगतौ।

रणवीरः। कुत्रास्ति सम्प्रति युष्मदधिपतिः क्रूरसिंहः? असौ कियत्कालपूर्वमाहृतवानेकां राजतनयामिति कुत्रेयं निरुद्धा नृपनन्दिनीदानीमिति द्रुतं निवेदयतं मे युवाम्। तयोरन्यतरो भटः प्रोवाच प्राञ्जलिः– 'आम् ज्ञायते सकलं तद् वृत्तम्। राजेन्द्र! श्रूयताम्– इतः षण्मासपूर्वमस्मदीयसेनापतिर्विजयनगराधीश्वरस्य तनयां महाराजश्रीचन्द्रसिंहस्य च राजमहिषीं श्रीमतीमार्यां कुमुदिनीमपजहार। राजनन्दिनीयं निरुद्धाऽस्ति भग्नप्राये महति गिरिदुर्गे तद् गिरिदुर्गमितो बाह्यवर्त्मनाऽतिदूरं वर्तते। बहुदिनगन्तव्योऽयमध्वा। परं दुर्गमिदमभ्यन्तरीयसुरङ्गामार्गेणात्यल्पकालेनैव गन्तुं पार्यते। तत्रैव निरुद्धा आर्या कुमुदिनी। तत्रानीय राजतनयामिमां बहुशः प्रार्थयाञ्चक्रे क्रूरसिंहः। परं सुतरां न्यक्कृतोऽयं तया। नाभ्युपगतमनया तदीयमभ्यर्थनम्। अथ क्रूरस्तस्यै षाण्मासिकमवधिं ददौ। आर्याया कुमुदिन्याः परिचर्यार्थं निजभार्यां नियुक्तवानयम्। यामसौ पुराऽचीकमत प्रेम्णा परमिदानीं तदाननाम्बुजमपि न दिदृक्षते। विमलेति तस्या नामधेयम्। नूनं विमलान्तःकरणेयं विमला। अत्यल्पकालसमागमेनैव सेयमार्यां कुमुदिनीं स्वप्राणेभ्योऽप्यधिकं प्रेम्णा कामयते। तदर्थमेषा प्राणानपि विश्राणयितुमुद्यता विद्यते। तस्य दुर्गस्य परितोऽतिदुर्गमा ज्वलज्ज्वालाजालजटाला निखाताऽमुना क्रूरेण परिखातिगम्भीरा। षण्मासा अतीता अथ तदुदन्तघटनाया घटितायाः। अथार्यां कुमुदिनीमुपगम्य चतुर्विधं सानुनयं सभर्त्सनं समयागमयत् क्रूरसिंहः। परं न जातः कश्चिदपि प्रभावः कुमुदिनीमनसि तदीयवचसाम्। ततः क्रूरोऽयमतीवक्रुद्धः सन् बलादिमां धर्षयितुं यावत्तस्या अभिमुखमभिपतति तावदेव विमला मध्ये निपत्य बहुप्रकारं क्रूरसिंहमुपदिदेश। परमस्य क्रूरस्य कठोरे वज्रमयहृदये न जातो मनागपि प्रभावः। प्रत्युत विमलाया वचनैरधिकरोषारुणनयनः संवृत्तैष तां निगडयित्वा कशया ताडयितुमादिष्टवान्। सुचरित्रया विमलया तूष्णीमेव सेढेऽयं कशाप्रहारः। अथार्या कुमुदिनी निर्भर्त्सयितुमारेभे क्रूरं क्रूरसिंहम्। नाजीगणदयं किमपि तदीयतर्जनम्। ततो नृशंसेनामुना वृक्षशाखायामालम्बितेयमार्या।' इत्याख्याय क्षणं मौनमतिष्ठत्।

रणवीरः। (सरोषम्।) आः? कोऽयं बलात्कारः? रे कृतघातिन् क्रूर! महानयमत्याचारो विहितस्त्वया! आगतमिदानीं तव मरणम्!? (भटं प्रति) क्वास्ते सः?

---

१ सत्यम्। "[illegible]" इत्यमरः। २ कृतघ्नताम्। ३ सत्यम्।

भटः। 'आर्या कुमुदिनीं तदाशान्तरालम्बिनीं समदृशद्वयं दुरात्मा। परं नितान्तमपि नाङ्गीकृतमस्य कथनमत्रभवत्या। अन्ते दारुणं स्वविचारं प्रकटितवानयं क्रूरः। श्वः प्रभाते नृशंसोऽसौ रोमज्जननेन घोरकर्मणा श्रीमत्या देवीबलिदानं विधाता। कथं रीत्या विधीयते बलिदानं कीदृशञ्च घोरं कृत्यमिदमिति विदितवृत्तान्तया तया विमलया विमलया सहृदयया कुमुदिनीप्राणत्राणार्थमर्थितो दीनं दीनया क्रूरः क्रूरसिंहः किन्तु मनागपि नागता दयास्य निर्दये हृदये। हिता हि ता निष्कलङ्कामार्यां भार्यामपि श्रीमत्या कुमुदिन्या सहैव बलिं दास्यति देव्यै। अत्रैवागते परेऽत्रभवती राजकुमारी बलिदानार्थम्। विमलापि निशीथेऽत्रानेष्यते। येयं पुरतो दृश्यते मूर्तिस्तदग्रत एव बलिर्दास्यते इति वृत्तं प्रागेव किञ्चिदावामज्ञासिष्व। नियुक्तौ चावामत्र देवीपुरतः प्रहरिकार्ये।' इति समाख्याय तूष्णीमतिष्ठत्।

भटोदितं सकलमुदन्तं सावधानं निशम्य रणवीरः क्षणं विमृश्य मनसाऽऽलपत्— 'आर्ये ! अतीव कष्टमनुभूतमत्रभवत्या। तत्प्रतिकर्तुमयं सम्प्राप्तस्ते रणवीरः। रे नृशंस क्रूरसिंह ! सावधानो भवाधुना ? न न्यूनत्वमकार्षीः खलु त्वं न पीडयितुम्। समुपेयुषीयं तवान्तवेला साम्प्रतमिति जानीहि। पापिष्ठ ? अत्यल्पकालमधुना तिष्ठतु तव दुश्चेष्टितम्' इति।

इत्यालप्य रणवीरो निजनायकैः सह तौ भटौ समादाय गुहाया बहिराजगाम। निर्विघ्नमसुं बहिरागतमवलोक्यातितरामानन्द रत्नप्रभा। पप्रच्छ चास्य कुशलम्। अथ सकलं वृत्तमाचख्यौ रणवीरस्ताम्। कुमुदिन्या दुःखमाकर्ण्य बाष्पजलपूर्णे अभूतां नेत्रे रत्नप्रभायाः। तदीयमश्रुजलं निजवसनाञ्चलेन परिमृज्य तामाश्वासयामास रणवीरः। अथायं बहिरागम्य रिक्तभूतले निजसैनिकमण्डलमध्यवर्ती निषण्णः सह रत्नप्रभया। तत्रान्तरे सन्ध्याभ्रकपिशमविदूरे पार्थिवं रजः समुल्लिहानमालोक्यत रणवीरेण। कोऽपि बलमादायाभिपतति नूनमिति वितर्कितवानयम्। नृशंसः क्रूरसिंहो भवेदसौ कदाचिदिति समवधार्य स्ववरूथिनीं सन्नीभवितुमादिष्टवानयम्। क्षणादेव रणवीरसैन्यं सेनापतिना सममभिपतत सैन्यस्य साम्मुख्यं कर्तुं सज्जं समवातिष्ठत। अभिपतन्ती पृतना नेदीयसी संवृत्ता सम्प्रति। तदभ्यन्तरादेक सैन्धवारोहो—योऽसौ तदधिपतिरभूत्—स्वतुरङ्गमादवतीर्य रणवीरनिकटमागत्य तस्थौ। रणवीरं विलोक्यैवाकस्मादतिहर्षनादं विधाय तमालिलिङ्गायमश्वारोह। रणवीरोऽपि स्वबुद्धप्रधानवर्यं श्रीप्रतापसिंहं निरीक्ष्यैव मुमुदेतराम्। आसीदयं सादी स्थविरो मन्त्रिवरः श्रीप्रतापसिंह एव। अथ मन्त्रीश्वरो रणवीरं कुशलमापृच्छ्य स्वसेनां तत्रैव सन्निवेशयितुमादिशत्। रणवीरसेनया समं समगंस्त मन्त्रिसैन्यम्। सम्भूयामी मुमुदिरे सर्वेऽपि सैनिकाः। अनन्तरं

१ सन्ध्याभ्रवत् कपिशं ताम्रवर्णम्। २ रजो धूलिः। ३ समुद्गीर्णम्। ४ वरूथिनी सेना। ५ पृतना सेना। ६ अश्वारोह। ७ संगतम्। ८ एकीभूय।

मन्त्रिवरस्य स्वागतं विधाय समपृच्छदमुं रणवीरः 'आर्य ! कुतोऽकस्मादिहागमनं श्रीमतामिति ।'

प्रतापसिंहः । चन्द्रसिंहभ्रातुरन्वेषणार्थमहं सेनया समं निर्गतवानस्मि । समर्पितवानहं पुराणसचिवहस्ते विजयनगरराज्यधुरम् । बहुशो विचिन्वताऽपि मया नोपलेभे प्रवृत्तिरपि भ्रातुरिति निराशमनसा भवन्तं साक्षात्कर्तुममरकण्टकराजनगरं प्रयातम् । तत्रानुसन्दधता—'भ्रातृगवेषणाय निर्गतो भवानिति व्यज्ञायि मया । अथाहं भवन्मन्त्रिवरं साक्षात्कृतवान् । सत्कृतोऽहं सम्यगमुना । तत्र दिनद्वयमुषित्वा निष्क्रान्तोऽहं ततो मन्त्रिवरानुज्ञामादाय । पथि चागच्छता—'अत्र सन्निधावेव क्रूरसिंहस्य विद्यते गुप्तैका गुहा । तस्यामेव नृशंसोऽसौ निजानुचरैः सह निवसतीति' प्राप्ता मया प्रवृत्तिः । अतो विचिन्तितं मया—'यत्रायं दुरात्मा निवसति तत्रैव राजपुत्र्या कुमुदिन्याऽपि भवितव्यमिति ।'

इत्यवधार्याहं पापिष्ठममुं व्यापादयितुमना वर्त्मनाऽमुना यावत्प्रयामि तावदेव दूरतो भवत्सेनामिमामालोकयम् । सैन्यमिदं क्रूरसिंहस्यैव स्यादिति विमृश्य स्वसेनां सुसन्नतया सावधानमभिगन्तुमादिश्य त्वरितगत्या वयमिहाभ्यागच्छाम । निकटतरमागच्छद्भिरस्माभिर्भवानालोकि इति नास्माकं हृदि ममौ हर्षः । राजेन्द्र ! कथ्यतामिदानीं किंवृत्तान्तो भवान् ? अपि श्रीमतीं कुमुदिनीमन्वेष्टुं शक्तो न वा भवान् ? ।

अथ निवेदितसकलमुदन्तजातं प्रतापसिंहाय रणवीरेण । रणवीरचातुरीं विलोक्य सुतरामानन्द स्थविरो मन्त्रिवरः । अथोभावपि भोजनार्थं प्रविष्टौ पटमण्डपम् । भोजनाद्विनिवृत्य सर्वेऽपि सैनिका बहिः प्राङ्गणे समगच्छन्त । रणवीरप्रतापसिंहावपि कृताशनौ पटमण्डपाद् बहिरायातौ । इमौ निरीक्ष्य सकला अपि वीरा हर्षकिलकिलारवं वितन्वाना निजनिजस्थानानि भेजिरे । तत्रासनार्थमास्तीर्णायां मृदुलतूलिकायां प्रधानेन सममुपविष्टवान् रणवीरः । इयत्कालावधि नोपागताऽभून्नयनविषयमपि रत्नप्रभा मन्त्रिणः । रत्नप्रभाऽपि पुरुषवेषा तत्र निकषैव सावहिता शृणोति स्माखिलमुदन्तम् । तस्मिन्नन्तरे दृग्गोचरं प्राप्तेव मन्त्रिवरस्य रत्नप्रभा । रत्नप्रभामवलोक्यैव चकितीभूय मनसि विचिन्तितं चतुरमन्त्रिणा—'अये ! कोऽयं भवेत् ? कोऽप्ययं राजकुमार इवालोक्यते ? अहो ! कियन्मधुरमस्य दर्शनम् ? ' इति ।

इत्थं विचिन्त्य रणवीरमपृच्छन्मन्त्रिवरः—'रणवीरसिंह ! कोऽयमसौ सम्मुखं निषण्णो राजकुमारः ? कस्य नन्दनोऽयम् ? ' इति ।

प्रधानप्रश्नमिममाकर्ण्य स्मेरमुखो रणवीरो मुखं निरीक्षमाणो मनाक् किमपि प्रतिवचनमर्पयितुमगुञ्जे । प्रश्नानन्तरमिममालोक्य विचारे निमग्नो मन्त्रिवरः । परमन्तरे तु रत्नप्रभा प्रधानममात्यमुपगम्य स्वकण्ठोर्मिकामर्पयितुं निदधे । प्रस्तुतमीमांसां विलोक्य भूपो विस्मयसागरे निमग्नः प्रधानः । कोऽयं राजनन्दनो भवेदिति मनसैव विचारपदवीं निम—

हस्तारविन्दयुगलमुद्यम्य रत्नप्रभामाशीर्वचसा सम्भावितवान् । क्षणानन्तरं पृष्टं मन्त्रिणा—'कोऽसि त्वमिति ।'

रत्नप्रभा । अमरकण्टकाधीश्वरस्य महामहिमशालिनो महाराजश्रीरणजितसिंहनरेन्द्रस्य नन्दिनीत्वमभिवादयतेऽत्रभवन्तम् ।

प्रतापसिंहः । ( साश्चर्यम् । ) आ एवं किल ? तदीयनन्दिनी रत्नप्रभा किमु ? अहो ? त्वमपि मत्स्वामिना सममेव समायातासि किमु ? कथं नागच्छेः ? वीराग्रगण्यस्य पितुः पुत्र्यसि खलु । धन्याऽसि वत्से ? चिरायुषौ कुर्यादुभावपि भवन्तौ जगदीश्वरः ।' इत्याशिषामिभयोरेव शिरसि हस्तं विन्यस्य मन्त्रिसत्तमो नूतनौ तौ दम्पती पीयूषवर्षिणा चक्षुषा निरैक्षिष्ट । अथ हर्षोत्कलिकाकुलहृदयः पृष्टवान् रणवीरं मन्त्रिवर —' राजन् ? किमिदानीं कर्तुं निरणायि भवतेति ? ।'

रणवीरः । मन्त्रिवर्य ? सकलमहं सानुसन्धानं परीक्ष्यागतोऽस्मि । श्व प्रभाते आर्यायाः कुमुदिन्या बलिदानं विधास्यते । इदन्तु मे मनसि वर्तते—' श्रीमता सकलेनात्मबलेन समं गुप्तगृहद्वारमुपरुध्य स्थीयतां सावधानम् । गुप्तगृहाद् बहिरागच्छन्तो यथासम्भवं निगृह्यतामुन प्रातःकालं निहन्यतामसौ भवता । अहञ्चात्मसैनिकैः सार्द्धमभ्यन्तरे प्रविशामि ।' इति ।

अभ्यन्तरे किं कर्तुं निर्धारितमात्मनेति सकलामप्यायोजनां न्यवीविदन्मन्त्रिवराय रणवीरः । रणवीरायोजनामुपश्रुत्य सुतरां सन्तुष्टान्तरङ्गो मनस्येवामुं प्रशस्य तत्समक्षमेवाभितो गुप्तगृहं रुरोध मन्त्रीश्वरः । गुप्तगृहमभितः करकलितनिष्कोशकरवाला प्रहरिवीरमाला रक्षणं कर्तुमारेभे । अथ रणवीरः प्रतापसिंहानुमतिमादाय रत्नप्रभया स्वसैन्यं गृहीत्वा गुप्तगृहं प्राविशत् । अनुक्रमं शतद्वयं वीरभटा गुप्तगृहाभ्यन्तरे प्रविष्टाः । अधस्तादवतीर्यामी तिर्यग्वर्त्मना काष्ठपुत्रिकाधिष्ठितद्वारमपि प्रविष्टाः । तत्र पुरतो गच्छन्तोऽमी चन्द्रालोकरहितमपि सुप्रकाशमयं प्राङ्गणं प्राप्ताः । तदङ्गने सम्प्राप्तेषु सकलवीरेषु रणवीरस्तानात्मनिर्धारितमकथयत्— ' अयि विश्वास्यतमा वीरवराः ससैनिका नायकाः ? अद्यास्माभिरतिमात्रं शौर्यं दर्शनीयमस्ति । पापात्मनः पञ्जराद् विमोचनीयाऽस्माभिरार्या कुमुदिनी । तत्पश्यन्तु भवन्तः । भवतां केचन वीराः पुरोदृश्यमानस्यास्य पर्वतस्य कन्दरमन्दिरेषु, कतिपये चासु पार्श्ववर्तिनीषु कोष्ठशालासु निलीयन्ताम् । अहञ्चात्र सम्मुखवर्तिन्या देवीप्रतिमायां निलीये । दारुनिर्मिता मूर्तिरियमन्तः सान्तराला वर्तते । ततो यदाहं स्वभुशुण्डिकाया निःस्वनं कुर्याम् । तदानीमेव भवद्भिरखिलैः सद्य एव बहिर्निर्गम्य मदन्तिकमागन्तव्यम् । तदनु प्रातरूपमहं कथयिष्यामि युष्मान् । तदयि वीराः ? त्वरितं गत्वा निलीयन्तां भवन्तस्तत्र तत्र । यतः सम्प्राप्तोऽयमर्द्धरात्रकालोऽधुना मुहूर्तेन । स्वस्थानान्निर्गतो मनोविजानुचरैः सममिहागन्तुमसौ दुरात्मा शूरसिंहः ।' इति ।

महाराजनिदेशानुसारमखिलं बलं निलीनं यथोचितं गिरिगुहागृहेषु कोष्ठशालासु चानु-

क्रमम् । क्षणेनैव जनसम्मर्दपूर्णं प्राङ्गणमिदं प्रच्छन्ने वीरमण्डले निर्जनमजनि । केवलं तत्र रणवीरो रत्नप्रभा सेनापतिर्मानसिंहस्तौ च निगृहीतौ भटौ—इत्येवं षण्णराः स्थिताः । अथैमौ भटौ समगादीद् रणवीरः— ' भ्रातरौ ? आत्मानं बहिः नृसिंहकिङ्करत्वेन प्रकटयन्तौ भवन्तौ प्राग्वत्र प्रहरितामकुरुतां तत्रैव सज्जनं कुरुताम् । परं यदाहं संकेतयिष्यामि तदा तु भवद्ग्राम सदनुचराभ्यामिव पालनीयोऽस्मादिदेश. । ' इति ।

तत्कालमेव भटाविमौ रणवीरं प्रणम्य ततोऽपसृत्य स्वस्थानमासाद्य पूर्ववत् प्रहरितां कर्तुमारभेताम् । गतयोस्तयो रणवीरो मानसिंहं सेनापतिमगादीत्—' युवामपि कार्यमेकमर्पयितुमभिलषामि ' इति ।

' आदिश्येतामिमौ दासौ ? ' इति ताभ्याममवोचि ।

रणवीरः । भवन्तौ रत्नप्रभा चेति त्रयो जना यत्रैमौ प्रहरिणौ पर्यटतस्तद्वीयपृष्ठवर्तिनि दरीगृहे तदलक्षितास्मगमनाः प्रच्छन्नं निलीनास्तिष्ठन्तु ? कुर्वन्तु चात्मभुशुण्डिकां सुसज्जितामापूर्य गोलिकाभिः । कदाचिदेतौ प्रहरिणौ कपटजालमाचरेतान्निस्सद्य एव तौ भुशुण्डीगोलिकया हन्तव्यौ भवद्भ्याम् । गच्छन्तु, सम्प्रति भवन्तोऽपि साधयन्तु स्वकार्यम् ।

मानसिंहसेनापती रत्नप्रभया समं तत्र गत्वा पर्यटतोः प्रहरिणोः पृष्ठवर्तिनि दरीगृहे प्रच्छन्नं निलिल्याते । अथ सेनापतिमानसिंहौ निजनिजभुशुण्डीं सुसज्जितां विधाय भटौ तौ संधाय समस्थाताम् ।

स्वमनीषितानुकूल निष्पादिते सकलकर्मणि रणवीरो देवीमूर्तिनिकटे गतवान् । देवीप्रतिमां यन्त्रकीलेनापावृत्य द्विः कृत्वा प्रविश्य चान्तस्तिष्ठन्नेव यन्त्रकीलमुपपीड्य यथापूर्वं मुद्रितवान् । आत्मानं सम्यक्तयाऽभ्यन्तरे निविष्टमवलोक्य पुनर्यन्त्रकीलेन मूर्तिमुन्मुद्य रणवीरो बहिर्निर्गम्य पुनरेकवारं सर्वतः पर्यट्य परीक्षितवान् । अत्रान्तरे तत्र कस्यचित् पादध्वनिरिवाश्रूयतामुना । तत्क्षणमेव रणवीरो निजभुशुण्डीं नि सार्य गोलिकामापूर्य स्ववक्षसा तां परिकीलितवान् । अयाय नि.शब्दचरणं शनैर्देवीप्रतिमास्यर्णमुपगम्य त्वरया मूर्तिमिमामुद्घाट्य तदभ्यन्तरे निलीय— " किमिदानीं भवतीति" सूक्ष्मेणैकेन रन्ध्रेण निरीक्षाञ्चक्रे निपुणम् ।

* मासोऽयं श्रावण । कदाचित्कचिन्मेघमाला सझर्झररवं वर्षति । कार्हिचिद् प्रशमं प्राप्नोति वृष्टिः । अन्तरिक्षतलं जीमूतजालललितमालोक्यते । अभिनवसलिलपूर्णानि सरांसि कामपि शोभां पुष्यन्ति । झर्झररवबधिरितदिगन्तराः परःसहस्राः संसरन्ति पार्वतनिर्झरैधारा परितः पर्वतपरिसरारण्यस्थलीषु । जलधरपटलनिलीनोऽपि रविरयमार्तितामातपं तनुते । ईदृशे समये वियोगविरहविशिखमना उन्मत्त इवासौ चन्द्रसिंहो मन्दमन्दं प्रचलन्नेव कस्याञ्चन गिरिनिर्झरिनिर्झरिण्यास्तीरमुपाजगाम । तत्रागत्यासौ मुहूर्तं विश्रमितुं विचिन्त्य

१ धृतवान् । २ जीमूतो मेघः । ३ झोत समूहः । ४ पटलं समूहः । ५ नद्या ।

वासांस्यवतार्य शैवालिन्यो निर्मलसलिले स्नानं व्यधात्। येन क्लान्तिं किञ्चिच्चिरस्य तनुशान्तिसुखमयं लेभे। अथ पुनर्वस्त्राणि परिधाय कूलमध्यास्य व्यचिन्तयदसौ– 'उष्णता मनागियं स्थिमानसाऽस्त्वेव चेदहं पुनरतः प्रतिष्ठेय। अहह ? कियद्मार्गयमहं प्रियां कियन्ति च स्थानानि भ्रान्तानि मया। परमद्यावधि प्राणप्रिया मे कुमुदिनी नैवोपलब्धा। प्रेमप्रतिमायाः प्रनष्टाया ममास्याः षण्मासाः सम्पूर्णाः खल्वद्य ? ? षाण्मासिकोऽयं प्रियतमावियोगो मे प्रतिभाति कल्पकालविश्लेषैकल्पः। प्रतिपलं प्रबलं ज्वलतीव मे हृदयदुःखदावानलसन्ततिः। अहह ? किमियत्कालपर्यन्तं जीविता स्यान्नु मे कुमुदिनी ? हन्त ? अवगमयतु मां कोऽपि प्रियतमावस्थाम्; प्रशमयतु चेमं प्रबलवेदनानलमपि कश्चिन्मे। प्रिये कुमुदिनि ? क्वासि खलु ? एहि, एहि। त्वद्विरहानलदग्धहृदयदत्तकस्य तव प्राणप्रियचन्द्रस्य निकटमागत्य प्रेम्णाऽऽलिङ्गयास्य शमय दुःखमिति।'

अथ क्षणं जोषं स्थित्वा पुनरसौ वक्तुमारेभे– कुमुदिनि ? ममैवायं दोषस्तव नृशंसकरपञ्जरपतने। त्वयाऽहं सावधानीकृतोऽपि निद्राधीनोऽभूवम्। एतमवसरमुपलभ्या-, मुना नृशंसेन साधितं स्वसमीहितम्। अहह ? कीदृशी वैचित्रीयं भाग्यचक्रगतेः। ? परमात्मन् ? कुतो नु मादृशः पामरजनोऽधिगन्तुमीश्वरस्तावागम्यलीलाम् ? तदप्यायि प्रभो ? नरोऽप्यतां निकर्षोऽपलमिदानीमयं दीनबालकः। स्वल्पकालमपि नालमहं सोढुं स्वप्रियाविरहवेदनामिदानीम्। निजहृदयदयितां विनाऽहं निखिलं जगदिदमतिघोरतमःसान्द्रतममालोके। आनय, आनय। अयि दयालो जगदीश ? मदीयमनोमोहिनीं मत्प्रेमप्रतिमाप्रतिमामप्रतिमसुखैश्वर्यालोकलोचनां मदुपकण्ठमानय मृगलोचनाम्। मा खलु पीडयाधिकं दुःखिनं प्राणिनमेनम्। त्वमापन्नानां संकटार्तिहारीति किमिति तदाऽस्य विपन्नजनस्य संकटं निरस्यैनं निजदयिततमया समं न सङ्गमयसि ? ( विमृश्य ) अरेरे अत्याचारिन् क्रूरवैरिन् क्रूरसिंह ? कियानत्याचारो विधीयते त्वयाऽधुना मत्प्रियाया उपरीति नालमहमनुमातुमपि तमत्याचारम्। प्रभो ? तवास्यां सृष्टौ पुण्यशालिनः प्रणयिनो जनाः कष्टं सहन्ते; दुरितकारिणः पुनः सुखमुपभुञ्जते मानवा इति कीदृगयं न्यायः खलु ते ? इत्यभिधाय पुनः क्षणं शान्तिमाकलय्य गदितुमुपचक्रमे 'अपसरतु, अपसरतु। संसारोऽयमपसरतु मदीयनयनसरणेरतिदूरम्। नाहमभिलषामि सम्प्रति सुखलाभम्। संन्यस्तो भूत्वाऽहं विश्वतः स्वप्रियतमां विचेष्यामि। नैवोपलप्स्येत चेदियं तदाहं तुच्छं स्वजीवनमपि विगलयिष्यामि।' इति मनसैवालप्यायं चन्द्रो यत्रोपविष्टोऽभूत्तत्रैव भुवि व्यलुठत्। विलुठनसमकालमेवासौ निद्रापरवशः समवर्तत।

अथैकहोरानन्तरं पुनः प्रबुद्धवानयम्। तनिमानमाप्स्यत सम्प्रति तपनातपतापः। अतः समुत्थाय चन्द्रः कुमुदिनीगवेषणार्थं योगीन्द्रनिर्दिष्टवर्त्मनाऽग्रतः प्रतस्थे। प्रचण्डग्रे-

---

१ शैवालिनो निर्झरिणी नदी। २ तीरम्। ३ प्रलयकालवियोगतुल्यः। ४ प्राणपाषाणम्।
५. तनुताम्।

यासौ समासन्नसायसमये प्रचण्डानलदेदीप्यमानार्चि सद्धातपरिवृताया परिखाया समीपमुपाजगाम। समयेऽस्मिन् शूरसिंहो दुर्गाभ्यन्तरे कुमुदिनीबलिदानमंभार कुरुते स्म। चन्द्र परिखानिकटमुपगम्य नल्वपरिमित विस्तीर्णं पात्रमवलोकयन् परिखाया। परिखायामस्यां प्रचण्डं दिदीपे जातवेदा। चित्रभानोरमुष्य शिखासन्ततयोऽन्तरिक्ष चुचुम्बु। अतिशयज्वलनज्वालातापतया न प्रबभूव चन्द्रो गन्तु परिखासमीपदेशम्। विदूरे स्थितो ऽयं भाषितुमुपक्रान्तवान्- ' अयि प्रभो ? कथमहमिमा कृशानुविरोचिता परिखामुल्लङ्घितु प्रभवेयम् ? इदानीमेव स्फुटमज्ञायि मया-मरण विना नास्ति मे ऽसुखसाधनमिति। नाह प्राभवमत्र जन्मनि सुखस्वप्नमपि वीक्षितुम्, न चापि शक्ष्यामि तं पुनरवलोकयितुमिति मन्ये। तत्किमर्थमह प्राणिमि ? किमालोकनीया जीवतैव मयाऽसह्यपीडामनुभवन्ती कुमुदिनी ? केवलमात्मजीवनार्थमेव परिदेय किमु स्वप्रियतमाया प्रेमा ? हन्त ? यदेदं विज्ञास्यति मे कुमुदिनी - निजजीवनार्थं मदीयचन्द्रः स्वप्रियां शत्रुपाणिपञ्जरान्मोचयितु नाशक्नोदिति कियन्तु क्लिश्येत्तदासौ ? धिङ् माम्' अये! किमिति ममेयमद्य हृदयात्कुवति मिथ्याभावनेदृशी ? ( विमृश्य। ) नैव नैव। नाधुनामुना मे प्रयोजनमस्ति जीवनेन ? मृत्युरेव ममेदानीं सन्मित्र वरीवर्ति। परिखायामस्या पतत एवोत्क्रमिष्यन्ति मम प्राणा। न सम्भाव्यते हि जीवनमितो मे। प्रिये कुमुदिनि ? क्षम्यतामय त्वया मन्दभागधेयश्चन्द्र'। विस्मर्यतान्नाय नितान्त करुणात्।' इति।

पुन क्षण मौनमाकलय्य निजगाद- ' ससार ? नमस्करोम्यह भवन्तमपि। अयि परम दयालो परमात्मन् ? सकलभुवनवन्दनीय त्वा हृदाह वन्दे। हन्त ? क्षणादेवाय चन्द्र कथावशेष सवत्स्यति। ( विमृश्य। ) एहि, आत्मन् ? किमिति सम्प्रति विलम्बसे ? ( गगनाभिमुखमालोक्य। ) सर्वशक्तिमन् दयानिधे जगदीश्वर ? शरण्य त्वा क्षणानन्तरमेव शरणमागन्ताऽयं त्वदीयबाल- किन्तु मरणात्पूर्वमेका निशम्यता तदभ्यर्थना भगवता। सर्वान्तर्यामिन् प्रभो ? यदा यदा समुताविह वितरसि मे शरीर तदा तदा कुमुदिन्येव जननान्तरेऽपि मत्प्राणप्रियाऽर्द्धाङ्गिनी भवतु। कारुणिक पित ? त्वदृते न विद्यते सम्प्रति कोऽपि सान्त्वयिता मम कुमुदिन्या इति तामाश्वासयतु प्रभु। ( कुमुदिनीं स्मृत्वा। ) प्रिये ? त्वामपि न शक्तवानह सरक्षितुम्। प्रियबन्धो रणवीर ? त्वमपि न साक्षात्कृतो मयान्तकाले। जन्मदायक पित ? भवतो वैरमपि न शोधितममुना भवदात्मजेन। हन्त ? मन्दभाग्योऽस्मि, निर्दयोऽस्मि, कृतघ्नोऽस्म्यहमिति क्षन्तव्योऽह तातेन। अन्धकार ? त्वामेव सतत विलोकयामि विश्वत। हा हत! निवारयति मा मदीयकुमुदिनी परिखायामस्यां निपतनात्? ? अयि हृदयदयिततमे ? क्वाऽसि खलु ? नृशसोऽय त्वदुपरि कीदृश-वात्याचारं कुरुते ? आ.। भस्मीभवति मम हृदय विरहदहनेन। कुत्रेदानीं मया संगमिष्यसे

१ नल्व चतु शतहस्तमित परिमाणम्। ' नल्व किष्कुचतु शतम् " इत्यमर। २ अग्नि। ३ अग्नि।

स्वम् ? हाहा देवि ? मां परिणीय स्वमत्रैव दुःखिताऽसि । प्रिये कुमुदिनि ? तव प्रवृत्तिरपि नोपलब्धाऽद्यापि मयेति कथमहं शक्नुयां त्वां रक्षितुम् ? हृदयेश्वरि ? प्राणवल्लभ्रसि मे । क्षणमपि त्वां न विस्मरति मम हृदयम् । उपविशन्, संविशन्, विचरंश्चाहं त्वामेव केवलं विलोकयामि । त्वां विना न किमपि शक्नोम्यहं द्रष्टुम् । सर्वाणि मदिन्द्रियाणि विमूढानि त्वदृते । कुमुदिनि ? चिरकालायाधुनाऽहं वियुक्तो भवामि त्वत्तः । क्षमस्व माम् । पातु त्वामखिललोकपालकः सृष्टिचालकः प्रभुः ? ' इति ।

अथायं चन्द्रः ' विजयते जगदेकनियन्ता जगदीश्वरः ' इत्यभिधाय विलोचनाभ्यामश्रुजलजालं विमुञ्चन्नेव धावमानो यावत्परिखायामात्मानं निपातयितुं प्रवर्तते तावदेव प्रबलोऽतिभयङ्करः कर्णविदारको ध्वनिरेकः समुदपद्यत । तदनन्तरं ' विरम विरम । न कुरु साहसिकं कर्म । विमृश पूर्वम् ' इति कस्यापि वचनमिवाकर्ण्यत । तद्वचःश्रवणेनैव चमत्कृतोऽयमनुचलन् पदमेकमपि ततः ' कस्येदं वचनम् ? ' इति विज्ञातुमातुरतया यतोऽयं ध्वनिरायातस्तदभिमुखमालोकितवान् । तस्मिन्नेव क्षणे पुनरमी शब्दा अतिसमीपमस्मुनाऽऽकर्णिताः ।

तत्कालमेव परिचितचरो योगीन्द्रश्चन्द्रसविधे समेत्य तस्थौ । तमवलोक्यैव चन्द्रस्य शोको हर्षत्वेन परिणतः । योगीन्द्रमालोक्य दण्डवत् प्रणम्य वचसि चन्द्रः 'भगवन् ? योग्यकालमेव सन्निहितो भवान् । कथमियमुल्लङ्घनीया भयानकपरिखेति नावगम्यते मया । तन्निर्दिश्यतां मार्गो मे दुर्गेऽस्मिन् प्रवेष्टुमत्रभवता । निर्दिश्यतां प्रभो ? निर्दिश्यतां दुर्गप्रवेशमार्गो दुःखितावारमवाञ्छयास्मि । भगवन् ? करोतु मन्माहार्यं प्रभुरिति '।

योगीन्द्रः । राजकुमार ? किमर्थं निराशो भवसि ? त्वां दुःखाकुलमालोक्य विज्ञाय चात्र परिखायां निपत्य स्वमरणनिश्चयं प्रभुरसौ दयया पन्थानं ते दर्शयितुं मां प्रेरितवान् ।

चन्द्रः । ( साभिवादनम् । ) प्रभो ? दयालुरसि । अनुगृह्यतामयं स्वबालकः श्रीमता ।

योगीन्द्रः । चन्द्र ? पश्य-येयं तरुषण्डमण्डिता भूमिरालोक्यते' तत्रास्ति निहितैका महती शिला । तां तत्रार्थेऽनया यन्त्रकीलिकयाऽपसार्य सुरङ्गां द्रक्ष्यसि दुर्गाभ्यन्तरगामिनीम् । तया सुखेन दुर्गान्तः प्रवेक्ष्यसि ।

चन्द्रः । अतिवेलमुपकृतोऽयं बालो भगवता । दयालो ? सुरङ्गयाऽनया दुर्गप्रवेशानन्तरं प्राप्यते न वा मदीयकुमुदिनी ? ।

योगीन्द्रस्तु- ' वत्स ? मा भवाधीरः ? विश्वसिहि परमा मतिः । नायं प्रसङ्गस्तव दुर्गतौ । सुरङ्गामतिक्रम्य दुर्गं प्रविश त्वम् । तत्रैव लप्स्यते त्वया कुमुदिन्याः प्रवृत्तिः । गृहाणेमं दण्डम् । महदनेन भविता प्रयोजनं ते । यदा त्वं दुर्गं प्रविश्यानुपलभ्य कुमुदिनीमुदयाकुलो भवेस्तदानीमिमं दण्डमुपयुञ्जीथाः । त्वं दण्डेनामुना यदि प्रहरिष्यसि भूतलं तदा तत्क्षणमेव- यत्रास्ति कुमुदिनी तत्स्थानगामी पन्था विज्ञास्यते त्वया । ततस्तेन पथा गत्वा प्राप्स्यसि कुमुदिनीम् । परं दण्डोऽयं केवलमेकवारमहनि प्रयोक्तव्यस्त्वयेति सम्यग् विज्ञेयम् । द्विः प्रयोक्ष्यसे यदि त्वमिमं दिने तदा तदानीं नु साधयिष्यति त्वत्कार्यमयं परं तत्प्र-

णमेवासौ त्वत्तोऽनर्थाय न पुनर्लप्स्यते त्वया ।' इति चन्द्रं सूचयित्वा ततो निष्क्रान्ता । प्रयाते तस्मिन्नसौ चन्द्रो योगीन्द्रदत्तं दण्डमादाय तन्निर्दिष्टां तत्पण्डमध्यवर्तिनीं शिलामासाद्यापसार्य च तां यन्त्रकीलिकया सोपानवर्त्मनाऽवतीर्य सुरङ्गां प्रविष्टः । मुहूर्तान्तरमेवाथ तया गच्छन् दुर्गान्तः प्राविशत् ।

दुर्गाभ्यन्तरे गत्वा समन्ततो निजदृष्टिं प्रक्षिप्तवानयम् । परं नोपगतस्तस्येन्द्रियगोचरं तत्र कोऽपि जनः । 'निर्जनं भवेद् दुर्गमिदं किमु ?' इति च हृदय मनसि विचार, समुत्थाय । सायंसमयतया समप्राय दुर्गमिदमिदानीं भयानकं भासते स्म । यादृशमिदं भयावहं समदृश्यत तादृशमेव घोरं कृत्यमपि तस्मिन्नत्र समविष्यमाणमभूत् । ईदृशि घोरप्रसङ्गे दुर्गे विचरन्नत्र चन्द्रसिंहो जीर्णप्रायमेकं महालयमाससाद । तत्रागत्य निरीक्षमाणोऽसौ नावालोकयत् कमपि मानवम् । पुनरयं ततोऽग्रे गच्छन् संवृतं द्वारमेकं दृष्टवान् सद्य एव तरसा द्वारमिदमपावृत्य वेश्मान्तरं प्राविक्षत् । निकेतनस्यास्य कियन्ति द्वाराणि मोल्लङ्घ्य विशालमेकमजिरं प्राप चन्द्रः । अत्रान्तरे समाकर्णितमनुना चीत्कृतमेकमतिकरुणम् । 'अये ? किमिदम् ? कस्याय चीत्कारध्वनिः ?' इति व्याहृत्य विष्वगवलोकयामास चन्द्रः । अथ विदितमनेन-'स्वयं यत्र चत्वरे तिष्ठामि तदग्न्याशवर्तिनि प्राङ्गणे कोलाहलमिव वितन्वन्ति कतिपये मानवाः' इति । इत्याकलय्य चन्द्रस्तद्गृहनाभिमुखं गतः । तत्रोपगम्य विलोकितमनुना-'चतुर्भिर्भटैः कापि सुन्दरी वनिता बन्दीकृत्य कुत्रापि नेतुं सन्नह्यते' इति ।

दृष्ट्वेदमवलोक्य प्रवृद्धमन्युः समजायत चन्द्रः । क्रुधा समगादीदसौ भटानमून्-'किं रे लुण्ठकनराधमाः ? किमिदं विधीयते ? किमर्थमियं नारी निगडिता युष्माभिः ? कुत्रेमां नेतुमुद्यता यूयम् ?' इति ।

चन्द्रवचः श्रुत्वा सम्भ्रान्ता बभूवुर्भटाः । 'कोऽयं स्यादपरिचितः पुरुषः ? कथञ्चासौ दुर्गं प्रविष्टः ?' इत्यादि वितर्कं चक्रिरेऽमी भटाः । अन्ततस्तेषामन्यतमो भटः सम्मुखमुपगत्य ससाहसमेनमप्राक्षीत्-'अये ? कोऽसि त्वम् ? किन्ते प्रयोजनमस्मदीयकृत्ये ?' इति ।

चन्द्रः । अरेरे जाल्महतकाः ? विकरालः कालोऽहं युष्माकम् ? स्वजीवनमपेक्षध्वे यूयं यदि तदेमां प्रमदां परिमुच्य सद्य एवतोऽपसरत ??

भटाः । परं कोऽसि त्वम् ?

चन्द्रः । नृशंसाः ? स्यामहं कोऽपि ? नावश्यकं वो विज्ञातुं तत् किमपि । तदपि विज्ञातुमिष्यते चेत् 'साम्प्रतमहमस्या अबलायाः सहायकोऽस्मी'-ति विज्ञायताम् ।

तत्रैतदा वचसाऽतिमात्रं प्रकुपिताश्चत्वारोऽमी भटा इति ते कृपाणमाकृष्य चन्द्रसिंहमभ्यपतन् । साम्प्रतमेकमपि शस्त्रं नासीच्चन्द्रसन्निधौ, तदपि धैर्यं धृत्वा धीरोऽसौ सम

---

१ जाल्मः-असमीक्ष्यकारी । 'अह्नौ चतुरराजिते' इत्यमरः । २ विष्वक् सर्वतः ।

भिपततो भवान् योगीन्द्रदत्तदण्डेन निरुध्य गत्यन्तराभावाद् दण्डीममुपायुङ्क्त। तस्य दण्डस्य प्रहारेण धरणिः कम्पितुमारब्धा। क्षणादेवामी चत्वारो नराधमा धरणिधूलिमलिक्षन्। /

क्रोधातिशयेन चन्द्रस्य नेत्रे शोणितशोणशोभे बिभराम्बभूवतुः। साम्प्रतमसौ– 'जीवति न वेति कोऽपि भटः?' इति निश्चेतुमवलोकितवानितः। कमप्यनवलोक्य तत्र जीवन्तमयं निगृहीताया महिलाया अभ्यर्णं जगाम। विमुच्य बन्धनाद्विमेंयाञ्च विधाय तामपृच्छ-चन्द्रः 'सुन्दरि? कासि त्वम्? क इमे बभूवुर्नृशंसाः? कुत्र त्वामनयन्नमी?' इत्यखिलं निवेदय मे। न कोऽपि दाखदुर्धरां पीडयितुं मम रक्षायाम्। प्राणान्तेऽपि त्वां रक्षिष्यामि, मा भैषी स्वसमीपदृपि? धर्मभगिन्यसि मे। यदेव सद्वृत्तं, ते त्याविवेदय मे, तदखिलमिति?।

चन्द्रस्य शान्तिप्रदं वचनमुपश्रुत्य विमला मनागाकलय्य शान्तिमब्रवीदेनम्– 'भ्रातः? अस्मि निराश्रितैका अबलाऽहम्। महादुःखाकुलास्म्यहम्। इयदवधि किञ्चिदहमवमहं सुखिनी। परमिदानीमतिदुःखाम्बुधिनिमग्नमानसाऽस्मि।' इति।

चन्द्रः। भगिनि? अपि कथयिष्यसि कीदृग् दुःखमस्ति तव? यथासंभवमहं दुःखमदः समूलमुन्मूलयिष्यामि। भगिनि? किन्ते नाम?।

विमला। विमलेति ख्यातेयं हतभागिनी। परा काष्ठा खलु जाता मदुपरि घोरात्याचारविरचनायाम्। भ्रातः? होराचतुष्टयमेव केवलमस्य जगतोऽतिथिरहम्। [इति निगद्य रोदितुमुपक्रान्तवती विमला।]

चन्द्रः। (तामाश्वासयन्।) भगिनि? किमिदं ब्रवीषि? होराचतुष्टयमेवातिथिरासि त्वमिति कोऽभिप्रायोऽस्य? भगिनि? समाश्वसिहि। मा स्म रोदीः। न भयमिदानीम्। वीरवरस्य चन्द्रसिंहस्य रक्षायां कस्मादपि किमपि भयं नास्त्येव भवत्याः।

चन्द्रसिंहनामश्रवणेनैव चमत्कृत्योपरि निरीक्षितं विमलया। प्रमुदितान्तःकरणया चानयाऽकस्माद्– 'किम्? साक्षाच्चन्द्रसिंहः, किमु श्रीमान्' किं भवानेव वयस्याया मम कुमुदिन्याः प्राणवल्लभश्चन्द्रोऽस्ति?' इति व्याहृत्य चन्द्रमुखमालोकि निपुणम्।

माम्? स एवायं मन्दभागधेयश्चन्द्रः। भगिनि? दृष्टा त्वया प्राणप्रिया मे कुमुदिनीति प्रत्येमि खलु? सुभद्रे? अवगच्छसि चेद्विवेदय– कुत्रास्ति मम कुमुदिनीति? तामन्वेष्टुकामस्यैवाहमतुलं संकटं विपद्याश्च समायातोऽस्मि। कथय कथय सुशीले? क्वास्ति मे कुमुदिनी?' इत्यधीरतयाऽपृच्छच्चन्द्रः।

विमला। हा हन्त? भ्रातश्चन्द्रसिंह? विलम्बितं मनाग् भवता। येन समेयं दुर्दशा व्यधायि स एव नृशंसो मत्सखीं कुमुदिनीं मदन्तिकात् प्रसह्य नीतवान्। तां मोचयितुं प्रवृत्ताया ममोपरि नराधमेनामुना महानत्याचारो व्यरचि। दुरात्मनाऽमुना प्रियवयस्यायाः कुमुदिन्याः शरीरं देव्यै उपहारीकर्तुं निश्चितम्। तस्याः पूर्वमहं व्यापादनीयेति नृशंसा इमे मदास्वदोषाः प्रगृह्य मामुपहारीकर्तुं नयन्ति स्म।

चन्द्र । किमत्रासीन्मत्प्रियतमा किञ्चित्कालपूर्वम् ? हा दैव ? स्वमप्रत एव विष्टानि मम कियन्ति पदानि सदैव !! भगिनि ? नृशंसोऽयं शूरसिंह किं किमस्याचरितमकरोत् कुमुदिन्या उपरीति कथय माम् ।

अथ प्रागारमनो निखिलं वृत्त निवेद्य-कथमाहृता कुमुदिनी शूरेण ? कथंकारश्चासौ कुमुदिनीमभ्यर्थितवान्; तया चावमानित, कथमन्ते तामथ बलिं दातुं नीतवानित्यखिल वृत्तान्तमश्रावयच्चन्द्र विमला।

तन्निवेदितमखिलं वृत्तमाकर्ण्याथ पृष्टवानिमां चन्द्र 'विमले ? कुमुदिनीमसौ नृशंस केन पथा कस्मिंश्च स्थले नीतवान् ' ? इति ।

विमला। अज्ञास्यमहञ्चेत्तमध्वान तदा तु कयाऽपि युक्त्या तां रक्षितुं त नृशंस-महमन्वगमिष्यम् !!।

चन्द्रः। ( स्वगतम् ।) किं नोपलप्स्यते तदाय पन्था ? किं पुनरेकवार प्रयोक्तव्योऽयं दण्ड ? ( इति चिन्तां रूपयति । )

चिन्तावितानैकतानमानसमेनमवलोक्य निजगाद विमला-' भ्रात ? किमिदानीं विधेयम्? सञ्जातोऽयं निशीथसमय । प्रभातप्रायायां शर्वर्यां तु सत्या मे कुमुदिन्या बलिदान विधि.समाप्स्यते । हन्त । किमधुनाऽहं नैव सञ्जच्छेय तया ? ' इति निगद्य प्रारुदद् विमला।

चन्द्र । भगिनि ? धैर्यमाधेहि हृदि । नाधुनाऽधिककालमलमयं दुरात्मा स्थातुमवनितले । ( निभृतम् ) अतिमात्रमहमिदानीं किंकर्तव्यतामूढोऽस्मि । अपि सुरसमन्तर्हितो भवतु दण्डोऽयम् ? परमुपयोक्तव्य एवाय मया '

इति विचिन्त्यासौ क्रुधा हस्तमुद्यम्य दण्डमिमं निपातितवान् बलेन भूतले । दण्डाघातेन सम सकलमपि दुर्गं प्रचकम्पे । सर्वतो दुर्गाभ्यन्तरे समश्रूयत प्रतिध्वनिरस्य । तत्क्षणमेव महता निर्घोषेण साकं भग्नप्राय तन्महासदन मङ्क्ष्वाऽधो निपातितम् । चन्द्रो विमला चोभौ यत्रातिष्ठतां सा भूमिरपि प्रकम्पितुमारेभे । पश्यतोरेव तयोस्तत्स्थाने सञ्जात गभीरमेकं महा बिलम् । बिलमिदमवलोकयान्त पश्यता बिलेऽस्मिन्नवनतुमेका सोपानपङ्क्तिरालोकिता चन्द्रेण । अथ विचिन्तितवानयम्-' सुरङ्गया भाव्यमनया। गुप्तद्वारमप्येतस्या अस्मिन्नेव स्थले स्यात् । अमुनैव वर्त्मना नीता भवेदेतेन दुरात्मना मम कुमुदिनी ? ' इति ।

सुरङ्गावलोकनसमकालमेव योगीन्द्रप्रदत्तो दण्डोऽन्तर्दधे चन्द्रसकाशात् । एकमपि प्रहरण नावशिष्ट चन्द्रसन्निधौ । कुमुदिनीरक्षणनिमग्नमनस्कतयैव किमप्यपर शस्त्रमादातुं विस्मृत-वानसौ। महमैवोन्मत्तीभूयाय सुरङ्गां प्रवेष्टुं सोपानपरम्परयाऽवतर्तुमारभत । तमनु विमलाऽपि नीचैरवतरीतुमुपचक्रमे । शूरसिंहहननार्थं निजवसनान्तरेका तीक्ष्णतराच्छुरिका तिरोहिताऽभूद् विमलया । उभावपि सोपानपङ्क्तिमुल्लङ्घ्याधस्तलमासाद्य सुरङ्गायां चलितुमारेभाते । सुरङ्गाभ्यन्तरे समभूदन्धतमसमतिघोरमिति कोऽपि करपादि मुख वीक्षितुमक्षम एवाभवत् । तमपि विपुलं प्रयत्नेन गच्छतोरनयो सुरङ्गायां भिन्नदिग्गामिनौ द्वौ पन्थानौ समुपस्थितौ ।

किन्तु न विद्यमान्यां " द्विमुखोऽयं पन्था " इति ।

सन्धतमसमयादेकेन पथा चन्द्रसिंहोऽपरेण चान्येन विमला जगाम । विमलाऽऽगमान-मनुगच्छतीति चन्द्रोऽप्यागच्छत् । चन्द्रसिंहः स्वाग्रतो यातीति विमलाऽप्यागमत् । परं संतमसे नालोकितुमैतौ प्राभवतां परस्परम् । अन्ततस्तौ मिथो विच्छिद्य पृथक्पृथग्वर्त्मना जग्मतुः । अहो विलक्षणैव तवेदृशी विद्यते प्रभो ? लीला !! ।

* इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ रुक्मिणीहरण-नाटकानुगे कुमुदिनीचन्द्रे त्रयोदशी कला *

---

# अथ चतुर्दशी कला ।

---

" अध्यापनतो विनाशं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकपाते समरमुखे नृत्यति कबन्धः ॥" ( पञ्चतन्त्रे )
" गर्ज गर्ज क्षणं मूढ ।" ( चण्डी )
" स्वार्थात्मनां गुप्तरा प्रणयिक्रियेव ॥ " ( विक्रमोर्वशीये । )

* गाढान्धकारायां सुरङ्गायां यदा विमलाचन्द्रौ मिथो वियुज्य भिन्नमार्गमाश्रयतां तदाऽऽसीदर्द्धरात्रकाला रात्रिः । तत पूर्वं गुप्तगृहाभ्यन्तरे कोऽप्यन्य एवाजायत कार्यव्यापारः । निर्णीयसमयात्पूर्वमेवाऽऽनीय गुप्तगृहे कस्याञ्चित् कन्दरशालायां निरुद्धाऽभवन्निगडितहस्ता कुमुदिनी । तस्याः समन्ततो द्वादश नरपाशाशयाः प्रहरिणः सजन्नं विदधिरे । इतरे पञ्चदश धीरा व्यापृता बभूवुः स्वस्वकर्मणि । तदतिरिक्ता अपरेऽपि किङ्कराः साधारणकर्मणि नियुक्ता अभवन् । तेष्वेको बलिदानकृतेऽग्निकुण्डं पर्यमार्ट्, इतरोऽङ्गारशकटीं महतीमेकां प्रज्वाल्य तदभ्यन्तरे लोहशलाकादण्डानुत्तापयति स्म, अन्यो देवीविनिमां बाह्यतो विमला-मकार्षीत्; परश्च सर्वेषामग्रजातं संचस्कार । सोऽसौ पूजार्थविधानं कुरुते स्म, कामी-दमी देवीसूक्तं । कश्चिद् विप्र इवापथमदृशत । हृष्टपुष्टोऽसौ वपुषा समवर्तत । इत्थमाविना जनाः संलग्ना बभूवुः पृथक्पृथक्कर्मणि सावधानम् ।

कार्तिकीयं तमिस्रा श्रावणमासीयकृष्णपक्षचतुर्दश्या । सर्वत्रापि गुप्तगृहे शान्तिराविरासी-न्नश्नति । इयत्कालपरिचितमपि गुप्तगृहमिदं नीरवमासीच्छ्रितान्तम् । केवलं निशीथकालभवः

---

१ " प्रभवेज्ज्यो न्यायुष्मनमुरदंष्ट्रेऽस्मि ।" इत्यमरः । २ ' भ्रमरप्रविशदाङ्गरयाग्रपरि दृश्यन्दसि ' इत्यमर । ३ सपर्या पूजा । ४ चिह्न ।

सूक्ष्मझिल्लीरव समाकर्ण्यतास्मिन्। देवीमूर्तिनिकटे महानेको घृतदीपश्च प्रदीपितोऽभूत्। एवं कर्मलीनेष्वेवाखिलेषु समुपावर्तत विभातकाल । समयेऽस्मिन् स्तेन समभिवरान् दशपुरुषानादाय तत्रोपतस्थे क्रूरसिंह । तदानीन्तना नृणां द्वौ मानवौ महाभयानकरूपौ समदृश्येताम्। कृष्णनिचोलेनाच्छादित सकलमात्मशरीरमाभ्यामित्यनयो कृष्णवदनमतिविकरालमालोक्यत सम्प्रति ।

क्रूरसिंहस्तत्रोपगम्य तत्क्षणमेव निजाननुचरान्– ' अपि सुसज्जितमखिलम् ? ' इत्य प्राक्षीत्। ' आम्। सुसन्नद्धं सकलम्। ' इति तदभिमुखवर्तिना जनेनावोचि। अतीवक्रूररूप समालोक्यत साम्प्रतमथ क्रूरसिंह । आसीन्नग्नमस्य शीर्षम्। अतिरक्ते अभूतामसुष्य नेत्रे। बलिदानस्य सकल सम्भारमालोक्यासौ भृशमानन्द ।

अथादिष्टावनयं दुष्टो भटौ स्वनिकटमानेतु कुमुदिनीम् । कुण्डे कृपीटयोनिरपि प्रजज्वा[1]लतरामधुना । अङ्गारधानिकायामुत्तप्ता आयसशलाकादण्डा अपि शोणशोणा[3] समजायन्त। अत्रान्तरे कुमुदिनीमादाय तत्रोपस्थितौ भटौ। शान्ताकृतिरदृश्यत सम्प्रति कुमुदिनी । नेयमबिभेन्मृत्यो । केवलं निलीनमस्या मनो निजहृदयदयिते चन्द्रे। इत्थं शान्त्या वस्तुपीमिमा विलोक्य तदभिमुखीभूय समभाषत क्रूर – ' कुमुदिनि ? उद्यता भवेदानीं मरणाय । पश्य, कुण्डे देदीप्यमानो बृहद्भानुरथ त्वां परिरब्धुमातुर प्रतीयते । पश्य पश्य । इमा दहनतप्ता अरुणारुणा आयसशलाकास्तवाङ्गमालिङ्गितुं कियदाकुलीभवन्ति । पृच्छामि त्वामन्तिमकाल एवाहमिदानीम्– ' परिवर्तितो न वा निजविचारस्त्वयेति ? '।

' आततायिहतक ? किमिति मुहुर्मुहु पृच्छसि माम् ? भृशमातुराहं सञ्जातास्मि मृत्युना मान सङ्गमयितुम् ? ' इति दृढतयोक्त कुमुदिन्या।

अस्या ईदृशमुत्तरमाकर्ण्यातिकुपितो जातः क्रूरसिंहः। आदिष्टवाँश्चायं कुमुदिनीं बन्धनान्मोचयितुं भटानिति तैर्मोचितेयं बन्धनात्। अथ पुनरभिमुखीभूय बभाषे क्रूर ' महाराज ? कार्यतामनया स्वल्पया यथाविधि विधेयो विधिर्भवतेति ? '।

क्रूरसिंहनिदेशमुपश्रुत्य पूजक पूजासामग्रीरादाय कुमुदिनीसमीपमागतवान् । एष कुमुदिनीललाटमानर्च कुङ्कुमेन । कण्ठे चास्या रक्तकर्णिकारपुष्पमाल्यमासञ्जयामास। अथानया देवीमूर्तिपूजां कारयाञ्चकार । अथामिते पूजाविधौ कुमुदिनीमकथयदसौ– ' वनिते ? परमेश्वराभ्यर्थनं विधेयञ्चेद् विधेहि सम्प्रति । परतो देवीबलिदानं ते करिष्यामो वयमिति ? '।

पूजारेवंवचनमीदृशमाकर्ण्य परमात्मानमियं प्रार्थितवती– " हे सकलजगन्नियन्त सर्वान्तर्यामिन् परमात्मन् ? सर्वतो व्याप्तोऽसीति जानासि हृदयं सर्वेषाम्। अयि दीनबन्धो दयासिन्धो शरणं प्रपन्नास्मि तवाहमिदानीम्। शरणागतपालक देवाधिदेव ? पाहि पाहि निराश्रितामिमां निस्सहायिकाम् " इति। अथ चन्द्र स्मृत्वा विलपन्तीयं निजगाद–' नियचन्द्र ? शासीय

---

1 निःसरत्स्फुलिङ्गः। 2 अग्नि.। 3 अतीवरक्ताः। 4 आलिङ्गितुम्।

भवदीया चिरन्तनसमयार्थमिदानीं वियुक्ता भवति भवन । प्राणेश्वर ! प्रणमति श्रीमच्चरणारविन्दभ्रमरीव श्रीमन्तम् । सुखिन करोतु भवन्त भगवानखिलेश्वरः । ' इति निगद्य शान्तमनसा निजहृदयेशो हृदय स्थिरीकृत्य कुमुदिनी परमेशस्मरण कर्तुमारेभे ।

इत्थ ध्यानमग्नामालोक्य तामपृच्छन्नृनारि ' महिले ! अवसित न वा तवाभ्यर्थनमिति ?' सा च-' आम्, उद्यतास्मि सम्प्रति मरणायाहम् । ' इति समुदवारीत् । तत्क्षणमेव क्रूरसिंहो दूरस्थितौ नीलनिचोलधारिणौ दासौ सङ्केतेन स्वसमीपमाहूयाज्ञप्तवान् बलिं दातुमिमाम् । क्रूरनिर्देशसमकालमेवाभ्या बलिदातृभ्या तृभ्या सत्वहननागारगतायसशलाकाद्वन्द्वान् हस्तन्त्रिकाया बहिर्नि सार्धं तान् निजहस्ते धृत्वा कुमुदिनीनिकटमेत्यावोचि-' वनिते ! अपि निवेदनीय किमपि ते ? ' इति ।

" नैव । " इत्याल्पाय चक्षुषी निमील्य परमेश्वरस्मरणमिव कर्तुमारेभे । अस्या उत्तर मुपश्रुत्य बलिदातारौ तौ तप्तशलाकाधरौ स्वकरौ उत्थापितवन्तौ । तत. क्रूरस्तारमाक्रुश्य समभाषत-' कुमुदिनि ! हतभागिनि कुमुदिनि ! अधुना वियुच्यसे स्वमित सपत्ने !! ( बलिदातारौ प्रति । ) वीरौ ! निखनतमिदानीमिमे शलाके अस्या उरस्स्थले । ' इति ।

तत्कालमेव यावदेतौ नृशसौ स्वकरस्थे शलाके तस्या वक्षोऽभ्यर्णं नयनतावदेव तदीयश्रवणपथमुपेयिवानेक -' तिष्ठत रे पापिष्ठा ! तिष्ठत। अतिविलम्बोऽधुना मम कुमुदिनीमरणे । वा निहन्तुर्निशाचरस्य कवोष्णरुधिर पातुमयं वीर केसरी समुपस्थित । ' इति भयङ्कर कण्ठीरवरवसोदरो ध्वनि । इत्थ सिंहनाद कुर्वाणस्तदानीमेव सम्प्राप्तस्तत्र चन्द्रसिंह । नृशसयो कराभ्या ज्वाल्यमाने लोहशलाके भयेनाकस्मादवनितले निपेततु । उभावपि चमत्कृतौ-' किमिदमकस्मादापतितम् ! ' इति विमृशन्तौ काष्ठपुत्रिकाविव स्तब्धौ सद्यः आगन्तुकमेव दद्दशतु । दुरात्मा क्रूरसिंहस्तु पाषाणवत् स्तब्धो बभूव । नायापि निशात निष्कलङ्कया कुमुदिन्या ' स्वरक्षणार्थं पुरस्तेऽदृश्यमानामदायितवमश्चन्द्र ' इति । अत्रान्तरे तु धावमान समेत्य नेदीयान् मभूत्तश्चन्द्र । नेदिष्ठमिममागत सद्य एवाभिज्ञाय क्रूरोऽवदत्-' कस्त्वम् ? चन्द्र किमु ? त्वमपि योग्यकालमेव सम्प्राप्तवानसीति सुप्रभातमद्य मे । तथापि पश्यानमवेक्षते ममैव देवी सातुरम् । [ भटान् प्रति ] निगृह्णीतमेव पिशाचोऽपि ! ' इति ।

निग्रहीतुम्नादानमभिपतता भटगणस्योपरि सहसा सिंहनाद विधाय चन्द्र क्रूरसिंह निहन्तुमना सदाऽग्नौवैव निबद्धदृढमुष्टिक समभ्यद्रवत् । चन्द्रस्यानिद्ध रूप निरूप्य भयाकुलमना निजरक्षणार्थमाजुहाव सैनिकान् क्रूर । तदीयहस्तात्तिरनित्वा भूतले पपात । मृगयुर्मृगव्यामिव पापचन्द्र क्रूरमभ्यग्रहीत् । चन्द्रनिग्रहणागता भटास्तु-' अचिरादेवोपस्थानिमामापद विभाव्य निस्पृहा बभूवु । चन्द्रस्य शोणितशोणे नयने, प्रचण्ड रूपमपि निरूप्य निजसेनारतिसहायतार्थं गन्तु न पारितं तै साहसमग्न्यनियमुन् । चन्द्रसिंहक्रूरसिंहौ मिथोऽभिविमाद युयुधाते ।

अथाऽरे कोलाहलव्यतिकरेणानुनाऽऽकृष्ट मन कुमुदिन्या दृषि सैव समुन्मील्य लोचने

१ ' अग्निठी ' इति प्रसिद्धा मर्त्यानिरततमवदनम् । २ अर्द्धवसनम् ।

*

यावदवलोकयति तावदेव स्वजीवनाधारं मसारसारं शत्रुणा युध्यमानं निजमनोनन्दनं हृदयेश्वरम् द्राक्षीत् । नियुद्धे क्रान्तोऽतितरामन्ते क्रूरसिंह इति प्रातावसरश्चन्द्रस्तमुत्तोल्य भुवि न्यपातयत्। परमसौ दुरात्मा सहसोत्थाय चन्द्रं प्रहर्तुमारेभे । किन्तु निष्फलमन्ततो जातं तदीयं बलम् । चन्द्रोऽवसरमुपलभ्य बलेन मुष्ट्या प्राहार्षीत् क्रूरमस्तके इति मूर्च्छितो भूत्वाऽसौ महीतलमलङ्कृतवान् ।

अधोनिपतितमेनं चरणैराक्रम्य चन्द्र । शस्त्रं किमपि लभ्येत यदि मस्तकमस्य तर्हि कलेवरात् पृथक्कुर्यामिति मनीषया विष्वगालोकयामास चन्द्रसिंह । परं नागतं किमपि शस्त्रं तत्रैव पथम् । क्रूरसिंहकराद् विगलितं करवालं कालकुशलज्ञतया प्रागेव जगृहिरे तदीयभग । अनुपलब्धशस्त्रतया चन्द्रोऽयमतिक्रुधा स्वशिरसा तदुरस्स्थलमवमर्दयामास । अथास्य कण्ठं नखैर्विदारयितुमसौ विचिन्तितवान् । किन्तु तत्क्षणमेवोदियाय मनसि तदीये विवेक ‘ नहि । नहीत्थं हन्तव्योऽयम् । गले नखं दत्वा हननं दुर्बलजनविलसितं खलु । शस्त्रेणैव हनिष्याम्येनम् । परं निरशोऽस्मि । एकमपि शस्त्रं न विद्यते सम्प्रति मदन्तिके । ’ इति ।

स्वस्वामिनं विचाराकुलं विभाव्य तदुपकण्ठमुपेत्य जगाद कुमुदिनी “ प्राणेश्वर ? क्षम्यताम् ममधुना, मनागाकलयतु धैर्यं भवान् । यतः कलङ्कमिव तनुते मूर्च्छितजननिबर्हणं क्षत्रियपुत्रस्य । प्रबुद्धमेनं सद्य एव व्यापादयतु भवानि ” त्यभिधाय तत्रैव स्थितवती ।

चन्द्रो मुहुर्मुहुरवलोकयामास विचेतनं क्रूरसिंहम् । यथा यथा विलोकयति स्मायं क्रूरसिंहाननं तथा तथाधिकमस्य दिदीपे रोषानल । यथा तु शासनवक्षस्स्थलमधिरूढो रुद्ररूपधारी भीमसेनः स्वशिरस्तदुरसि निपातयति स्म तथैवायं चन्द्रोऽपि क्रूरवक्षसि प्रहरति स्म मूर्ध्ना । प्रबलेन शिरःप्रहारेण प्रावर्तत रुधिरधारा नृशंसस्य तुण्डात् ।

स्वसेनापतेरतीवदुर्दशां निरीक्ष्य समीक्ष्य चास्य वदनाद्विपतन्तीं रक्तधाराम्—‘ हन्त ! किमुपरतोऽयमस्मदीयसेनापति ? मा भैरम् । नेदं सम्भाव्यते ॥ आगच्छन्तु सर्वे वयं संभूयैनं रक्षामः ? ’ इति व्याहृत्य क्रूरसिंहसैनिकाश्चन्द्रमहणाय युगपत् सिंहनादं वितन्वाना एनम न्यपतन् । क्षणादेव क्रूरवक्षस्स्थलमधिरूढो निशाथश्चन्द्रस्तै प्रसह्य प्रजगृहे । तेषां करपञ्जरादस्मानं मोचयितुमतितरां प्रायतत चन्द्र परं निष्फलमभूदखिलं प्रयतनम् ।

सैनिकैरसौ शृङ्खलामयतरैः पिपासाकुलो निष्प्रहरणश्चन्द्रो निगृह्य निगडितकरचरणो व्यधायि । शर्मनियन्त्रितं चन्द्रमालोक्य रुरोद कुमुदिनी । रुदतीमिमां सुदतीमालोक्य जगाद चन्द्र ‘ कुमुदिनि ! किमिति रुदने त्वया ? अवश्यैव भाव्यमनिवार्यम् । रम्यमेव विलपते मानुषमन्वे । मदर्थेहि धैर्यं हरि । त्वदीयमश्रुजलपातं विलोक्य व्यथते मम हृदयम् । तथाप्याप्ता भूत्वा विलोकय प्रभुलीलाम् । त्वां रुदतीमालोक्य प्रसीदन्ति रिपुदलास्तु इमे ।’

१ बाहुयुद्धे । २ भिया । ३ कुपाणम् । ‘ कम्बरस्ये पदन कुण्डगा नंच एतद् गुञ्जम् ’ इत्यमरः । ४ हस्तनिबद्धम् ।

इति । इत्थमुपदिश्य यावदाश्वासयति कुमुदिनीं चन्द्रस्तावदेव सैनिकैः स्वसेनानीशिरसि शीतलं जलं निषिच्याथ क्रूरो विहितः सचेतनः । एष सहसोपलभ्य यावदालोकयति तावदथ चन्द्रं निगडितमालुलोके । ततो न ममौ क्रूरस्य हर्षो हृदि । हर्षकिलकिलारवं विधायाचचक्षे क्रूरो निजसैनिकान्– 'धन्याः स्थ मदीयवीराः ! निगृहीतोऽयमन्ते शत्रुर्भवद्भिः खलु ! धन्या मदीयविश्वासभाजनानुचराः ! नास्ति चिन्ता खलु किञ्चिदप्यधुना । पतितो जाले मृगेन्द्र इति तमपि सम्प्रति देव्यै बलिं वितरिष्यामो वयम् ।' इति ।

इत्युक्त्वा पुनरपि लोहशलाकादण्डानुष्णयितुमादिशदनुचरमेकं क्रूरः । उत्तप्यातिरक्तेषु तेषु शलाकादण्डेषु बलिदातारौ ताविव हस्ते गृहीत्वा चन्द्रनिकटमागमताम् । यथैवेमौ शलाकादण्डानिमान् सतर्षौ चन्द्रवक्षसि निखातुं प्रवृत्तौ तथैवाथ चन्द्रोऽकस्माद् घोरं सगर्वं तयोरन्यतरं चरणेन प्रहृत्य दूरं चिक्षेप । पदाघातेनाथ बलिदाता देदीप्यमानानले कृशानुकुण्डे निपत्य भयङ्करैर्ज्वालानिकरैः प्रज्वलितोऽभवत् । चन्द्रस्येदृशं विक्रममद्भुतं विलोक्यापरो बलिदाता तु भिया प्रकम्पितुमारब्ध । 'किमिदं जातमकस्मात् ?' इति क्षणममी व्यचिन्तयत् । अधुना तु यावदसौ विचिन्तयत्येव तावदेव चन्द्रसिंहस्तन्निकटमुपगत्य तमपि रंहसा चरणेनाग्निकुण्डे प्राक्षिपत् । पश्यतामेव सर्वेषामिमौ बलिदातारौ देवीबलिनेवाग्नि-कुण्डे निपत्य दग्ध्वा च भस्मीभूतौ । बलिदात्रोरित्थं विनाशं निरीक्ष्य सैनिकानपरानमी क्रूरो बहुविधं गालिदानपुरस्सरमाचुक्रोश । आदिशच्चायममून् दृढतरं निगडयितुं चन्द्र-करचरणम् । सक्रूरैः सैनिकैः सम्भूय सन्दानितो दृढतरं ज्याऽसौ चन्द्रः ।

अथ दुरात्मा क्रूरसिंहः खड्गमादाय चन्द्रनिकटमाययौ । 'सन्निहितमधुना स्वमरणम् । स्वरक्षणाशा च निष्फला साम्प्रतमि ति मत्वा सुतरां निराशोऽजनि चन्द्रः । परिक्रान्त-करणा निष्कलङ्का च कुमुदिनी मकरन्दं रोदितुं प्रक्रान्ता । अतिविलपन्तीमवलोक्यैनामा-श्वासयितुकामोऽब्रवीच्चन्द्रः – 'प्रिये कुमुदिनि ! किमिदमुपक्रान्तं त्वया ? काऽसि त्वमिति विस्मृतं ननु ? नैव शोभते रोदनमीदृशं वीरपुत्र्यास्तव । किमिति मृत्योर्बिभेषि त्वम् ? इति ।

कुमुदिनी । (बाष्पं विसृजन्ती ।) प्राणेश ! नाहं बिभेमि मरणात् । न चाप्यहं कृते रोदिमि । उद्यतैवास्म्यहं मरणाय । किन्तु श्रीमानस्या दास्याः कृते विकरालकाल[2]कवलता-मुपैतीति समधिकमहं दूये । अहह ! अतिमद्भमविध्वंसमागमिष्यच्चेदिहाग्रजवान् ॥

चन्द्रस्तु– 'प्रिये ! मा भैषीः । परिहाय त्वमिदानीं संसारमोहमायामन्त्रसिद्धेश्वर सच्चिदानन्दकन्दं परमात्मानं चिन्तय ।' इति तामुपदिश्य क्रूराभिमुखीभूय जगाद– 'रे नराधम ! किं विमृशसि ? पातयाधुना निजचन्द्रहासम् !' इति । 'भद्रम् ! वत्स ! भव सज्जः !' इति प्रोच्य क्रूरो देवीमूर्तिसम्मुखमवलोक्य व्याहृतवान्– 'अयि जगज्जननि ! महामायमहाशक्तिनो स्तनपि लघु ! बलिद्वयमेव यमनहमानयं बलिं ते दातुं किन्तु तस्यापि द्वाविमौ बलौ भूतौ जनौ । तदपि दयालुमातः ! प्रसीद त्वमङ्गीकुरुष्व

1 बलेन । 2 " कलौ दुर्गे महाकाल समये समुपस्थिते " । इति मेदिनी ।

दमुपहारयुगलम् ।' इति व्याहृत्यासौ कुमुदिनीचन्द्रौ निहन्तुमुदतोलयत् स्वखड्गम् । परं को नु खलु विभावयितुमीश परमेशस्यागम्यलीलाम् ?

'अरक्षितं तिष्ठति दैवरक्षितम्' । इति सत्यमुक्तम् । तत्क्षणमेव पृष्ठतः– 'तिष्ठ रे पापिष्ठ ! तिष्ठ ।' इति निगदन्ती दन्तीन्द्रमभिहन्तुमुद्यता केसरिणीव विकरालरूपा तत्राभिद्रुत्यागता कापि वनिता । तामभिपतन्तीमालोक्य– 'अये ! किमिदम् ?' इति निगद्य भिया स्तब्ध एव सञ्जात शूर । चकम्पिरे सर्वाण्यपि तदङ्गानि । हस्तौ शिथिलौ संवृत्तावस्य । विगलितश्चामुष्य करात् करवाल । वराकौ निरागसौ कुमुदिनीचन्द्रौ पुनरन्त कालाय संरक्षितौ बभूवतु ।

महिषासुरमर्दिनी चण्डीव कलितविकरालरूपा, विग्रहिणीव वीरता, मूर्तिमतीव रुद्रे, योषिदेका तत्राभिद्रवन्ती सञ्जाता । अभित कन्धरा दोदुल्यमानालकैरेशीमतिभया नक्त्वेपां रोषारुणनेत्रां स्वकरकमलकलितनिशिततरच्छुरिका रुद्ररूपां वनितामभिमुखमागच्छन्तीमवलोक्य शूर सत्वरमुरुकाङ्ग प्रकम्पितुमुपचक्रमे । वनितेयं नृसिंहसविधमागत्य स्थित्वा महत्या रुषा समभाषतैनम्– 'दुरात्मन् ! विमुञ्चैतौ निरपराधौ जनौ । इतरथा ऽपहरामि तवासूनहम् ।' इति ।

तस्या भाषणप्रकारेण तामभिज्ञो शूर । परमेतदीय रुद्ररूप निरूप्य भयाकुल सत्वर पृष्टवानिमां प्रमदां शनैः– 'प्रिय विमले ! किमिदम् ? कोऽयमाकेल्ट ? विमले ! को नु खलु तव विचार ?' इति ।

विमला । (सामर्षम् ।) विचार ? त्वां क्षत्रियकुलकलङ्कं दण्डयितुमेव विचारो मे ।

शूर । प्रिये विमले ! कथं क्षत्रियकुलकलङ्कं कथयसि ? अहं तु पतिरस्मि ते ।

विमला । अलमलमालापेन ! किमधुनापि वर्तते तव विचारो मत्प्रियतमो भवितुम् ? नैव नैव । नासि त्वं मम प्रियतम । अहमपि नास्मि ते प्रिया ।

शूर । विमले ! किमर्थमानीतवत्यसि त्वमिमां छुरिकामिह ? ।

विमला । मदक्षोविदारणं त्वां निहत्य तर्पयितुं मातरमिमां विश्वम्भराम् ! । शूरस्तु– 'अहो अहो ! प्रिये विमले ? छुरिकेयमतितीक्ष्णा निरीक्ष्यते ते ! ननु दर्शय निपुणाक्षि काम् ।' इत्यभिधाय शनै शनैर्विमलामविधे समुपसृत्य सहसा चातुर्येण तत्करात्छुरिकां स्वायत्तयामास ।

अथावादीदिदं विमलाम्– 'गृहाण, विदारयाधुनोरःस्थलमिदम् । विमले ! किमिति व्यथयसि माम् ? गच्छ, क्षमेऽहमपि ते तवापराधम् । त्वदूपजितमद्यैवेदानीमहं मानिष त्वां कामयिष्ये । प्रिये विमले ! किमनभिज्ञाऽसि मदीयप्रेम्णा ? ।' इति ।

विमला । अरे शठ ! कुतस्त्यानि प्रेमा ? कुतो नु परिचितुं नेमाताम् ? ।

शूर । किं न विद्यते मदुपकण्ठे स्नेह खलु ? ।

---

१ मूर्तिमती । २ शुं । ३ अरण्यवत् । ४ पेशा । ५ विश्वम्भरा पृथ्वी ।

विमला । नास्ति खलु ? भवेच्चेदिदं प्रेम तदविद्यमानमिव विद्यते । क्रूरसिंह ? नास्ति स्वर्गीयं तव प्रेम ? ? कलुषतापन्नैव नरीवर्ति केवलं तव प्रेमणि । क्रूरसिंह ? नाहमभिलषामि त्वया सममालपितुं किमप्यन्यत्, केवलमहं त्वाम्-- 'निर्दोषाविमौ दम्पती रक्ष' इत्यभ्यर्थये । ब्रूहि क्रूरसिंह ? किमिति तूष्णीं स्थितोऽसि ? देयो यदि देव्यै बलिस्त्वया तदा तदीयस्थाने समुद्यताऽस्म्यहम् । प्रमुदा देयो मम बलिर्देव्यै । परं विमुञ्चेमौ दम्पती । नाहं शक्नोमि तयोः कष्टमालोकितुम् । क्रूरसिंह ? दयस्वानयोः । उचितमेव स्यात्तव हृदि दयेति विभावयामि । ब्रूहि क्रूरसिंह ? ब्रूहि । किमिदानीं कर्तुं तयोर्निर्धार्यते त्वया ? निर्मोक्ष्यसि तौ त्वमिति मन्येऽहम् ।

क्रूरः । ( सरोषम् । ) शृणु, यदहं चिकीर्षामि । अयि विमूढे ! कुमुदिनीचन्द्रयोर्निषूदनान्न कोऽपि मां वारयितुं पारयति । तयो रुधिरपानाय चिरादहं भृशमातुरो भवामि ! !

विमला । ( सचकितम् । ) आः ? किमिदमाकर्णयामि ? अयि विश्वम्भरे ? समाविशय नृशंसमिमं निजोदरे । हे चित्रभानो ? विनाशय दुरात्मानमेनं सद्यः । रे दुरापसद ? दयालवोऽपि न वर्तन्ते त्वयि । हन्त ! अपकृत्यैवोपकारं प्रत्युपकरिष्यसि किमु त्वम् ? अपि व्यापादयिष्यसि त्वमात्मप्राणरक्षिणम् ? धिक् त्वां नराधमं नृशंसम् ! ! ।

क्रूरः । अलमलं प्रलप्य, बाले ? को नु खलु सम्बन्ध इदानीमावयोः ? नृशंसोऽस्म्यहम् । किं तवामुना ? किन्तु प्रयोजनं ते कर्तुमन्तरायं मम कर्मणि ? किन्तु तादृगुद्देश्यं तवात्र कृत्ये ? ।

विमला । उद्देश्यम् ? निराश्रितपालनमेवाद्यः सकलनृणां कर्तव्यमेव । नास्ति दयालेशोऽपि यदीयहृदये राक्षस एवासौ जगतीह ।

क्रूरः । हन्त ! विमले ? साम्प्रतमिमे तव शब्दाः कण्टका इव विदार्य मम हृदयं परपारं निर्यान्ति । तव तुण्डपुण्डरीकमण्डनेयं मृदुला रसना पाषाणखण्डवद्दृढतरा प्रतिभाति मे कठोरा । सद्य एवैनां वारय प्रजल्पन्तीमधुना ! ।

विमला । क्रूरसिंह ? यथा मम शब्दाः कण्टका इव प्रतिभान्ति ते तथैव तवेदं निर्घृणं नृशंसं हृदयमपि वज्रमिव कठोरं प्रतिभाति मे !

क्रूरः । विमले ? त्वमेका सुन्दरी ललनाऽसि खलु ! परं तवेदं वचनं कृत्यमालोचयतो मे पिशाचिनीव कापि लक्ष्यसे ।

विमला । नराधम ? नासि खलु त्वं मानवः परं दानवोऽसि कश्चित् ! !

क्रूरः । विमले ? लज्जस्व खलु भाषमाणा ! ! न कोपय मामधिकम् ! ! अन्यथा कुमुदिनीचन्द्राभ्यां सहैव त्वयापि मरणीयमेव ? मदसिना निकृत्तं स्यादुत्तमाङ्गं ते ।

विमला । अये किमत्र मां विभीषिकां दर्शयसि खलु ? मरणार्थमेवाहमिह समायाताऽस्मि । पापिष्ठ ! तवासिनाऽस्य स्वशिरश्छेदस्य कुतो न्वीदृशं सौभाग्यं प्राप्नुयामहम् ! क्रूरसिंह ? भक्तोऽसि परं भद्रं कुरुष्वैव भक्ताऽस्म्यहम् ।

---

१ पारवश्यता । २ निषूदनं मारणम् । ३ 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ।

क्रूरः । शृणु रे दुराग्रहिले ! महिले ! शृणु । नाहमिच्छामि त्वां निहन्तुम् । यतो ममातितरां प्रिया त्वमभूरेकदा । विमले ! विमृशाधुना । पतिरस्मि तवाहम् । त्वञ्चासि मम दयिता । गच्छ, इत परमहं विमलेन हृदा क्षमयिष्ये त्वाम् । विमले ! निजपतिवचनाङ्गीकरणं कर्तव्यमेवास्ति नारीणाम् ।

विमला । आपन्नार्तजनेषु करुणाप्रदर्शनमपि कर्तव्यमखिलनृणां खलु ! ।

क्रूरः । ( सकोपम् । ) विमले ! इयदुपदिश्यमानापि न मानयसि मे वचनम् ? ममार्द्धाङ्गिनी भूत्वा त्वं मदीयशत्रुजने कारुण्यं दर्शयसि ? ।

विमला । नैव नैव । नैव कर्हिचित् । प्रागहमासं तवार्द्धाङ्गिनी, किन्तु नास्म्यहम्, सा सम्प्रति । त्वं दयिष्यसे चेदिमौ तदा तु साम्प्रतमपि तवैवास्म्यहम्, तवैव च भविष्यामि । तद् दयया विमोचय तौ दुःखेभ्यः ।

क्रूरः । नेदं संयोगमवैति ! ! दुराग्रहिले विमले ? अङ्गीकुरु मे वचनम् । न चेन्मरणीयमेव त्वयाऽपि ।

विमला । नाहमुररीकरिष्यामि तव कथनम् ।

क्रूरः । ( सामर्षम् । ) बाले ! त्वमेव मां निहन्तुमागताऽभवः किमु ? ।

विमला । आम्, आम् ? अहमेव त्वामितो जगतोऽनन्तकालाय विसर्जयितुमागताऽभवम् । रे दुरात्मन् ! अपि विज्ञातं त्वया ? ।

क्रूरः । तवेदृशा वचसा ज्वलन्तीवाङ्गानि मे । रे ! त्वमीदृशी विश्वासघातिनी भविष्यसीति पूर्वमहं व्यज्ञास्यश्चेदधिककालमहं त्वां नाजीवयिष्यम् ।

विमला । अधर्मिन् ! मदीयशब्दैर्नूनं ज्वलेयुस्तवाङ्गानि, परन्तु तव क्रूरकर्मभिः सकलेयं वसुन्धरा प्रकम्पतेतराम् ।

क्रूरसिंहस्तु—'क्रुधाऽन्धीभूय—'एहि, अनुसर सुरलोकसरणिं तदा त्वम्' । इति निगद्य विमलां स्वकरवालेन प्रहर्तुमभिद्रवति यावत्तावदेव—'तिष्ठ, रे पापिष्ठ ! तिष्ठ ।' इति सिंहनादं प्रोच्य चन्द्रोऽग्रतोऽभिगच्छन्तं क्रूरं निरस्य क्रोधारुणनेत्राभ्यां तदभिमुखमालोकितवान् ।

अथ पुनरब्रवीद् विमला—' उपलक्षितं, दुरात्मन् ! यथाऽस्मि मरणायेति ।' अतः क्रूरो रज्ज्वा निगडयितुमादिष्टवान् भटान् । तत्क्षणमेव यमदूताकाराः किङ्करा विमलां रज्ज्वा निबध्य कुमुदिनीचन्द्रयोः सन्निधावस्थापयन् ।

निश्शेषं वैरशोधनार्थमेव हष्टनष्टोऽभवत्। हा ! केवलं वैरशुद्ध्यर्थमेव चन्द्रसिंहतुल्यो वीराग्रगण्यो राजन्यधुरन्धरो राजेन्द्रो बलिरूपेणाग्निकुण्डे होतुमात्मानं स्थितोऽस्ति। सम्प्रति क्रूरसिंहवैरानलहव्यद्रव्यभूतोऽजितदुर्गाधीश्वरयुवराजनन्दनो विजयनगराधिपतिरयं चन्द्रो बन्दीकृतस्तिष्ठति। यद्यपि तदीयशिरसि महाभयङ्करीदृशी विपत्तिगिरिमाला समापतिता तदपि तदीयं मुखमण्डलमतीव शान्तमदृश्यत। वीरधुरन्धरोऽयं राजकुमारः क्रूरस्य क्रूरसिंहस्यैतावतीं नीचतां निरीक्ष्यात्मानञ्च बन्दीकृतमवलोक्य निःश्वसिति स्म।

इत्थं गुप्तगृहे तदानीमलक्ष्यत शान्तिरभितः। चित्रलिखिता इवाखिला भवनस्थिरे सैनिकाः। एकोऽपि शब्दो न निरगमत्तेषां मुखेभ्यः।

अथ शान्तिभङ्गं विधाय कुर्वैवागादीत् क्रूरश्चन्द्रम्– 'चन्द्र ! अपि परिक्षीणं न वा तव बलमिदानीम् ? चिरकालादहं तव मरणदर्शनाभिलाषी। पूर्णोऽद्य भवितायमभिलाषो मे ! अहो ! रज्जुबन्धोऽयं कियतीमभिरैशां पुष्णाति ते सम्प्रति ?' इति निगद्य हसितवानयं नृशंसः। हसन्तमेनमालोक्य रुषाऽवदच्चन्द्रः 'नपुंसक ? किं हससि खलु ? पञ्जरानिरुद्धं पञ्चाननं विलोक्य शृगाला यदि हृष्येयुस्ततः किम् ? किन्तु क्षत्रियोऽसि चेत्त्वमेकवारं मां विमुच्य पश्य ततः कीदृशी त्वदुर्गतिर्भवतीति ?।

क्रूरः। पाणिपञ्जरपतितं त्यजेयञ्चेन्मृगव्यं को नु खलु तदा भवेन्मादृशो मूर्खः ?।

चन्द्रः। आ, एवं किमु ? तदा त्वमतिचतुरोऽसि ननु। मूढ ! यथा गजेन्द्रपृष्ठमधिरूढो पीयसो मनसि– 'अहो ! कीदृग् भाग्यं मे ? गजेन्द्रमारूढोऽस्मि।' इति हृष्यति तथैव रे षण्ढ ! त्वमपि मिथ्यागर्वमुद्वहसि।

क्रूरः। भ्रमति तव शिरसि मृत्युरिति भवान्नम्रीभवितुं नेच्छति किमु ते मनः ?।

चन्द्र-। किमहं तव पुरतो नम्रीभवामि ? नपुंसकस्याग्रे नम्रीभवेयं किमु ? नैव संभाव्यते खलु ? ? परिभ्रमति शिरसि मृत्युस्ततः किम् ?।

क्रूरः। किं न विभेषि त्वं मृत्योः ?।

चन्द्रः। वीरपुरुषा अनिशं मृत्युना सहैव क्रीडन्ति।

क्रूरः। तत्राधुना विलम्बस्तव मरणे। गण्यन्त इदानीं तव मरणकालकलाः। चन्द्र ! त्वया निजपत्न्यै किमपि निवेद्यमुतेयमालिङ्गनीया चेदेनामालिङ्ग त्वम्।

न ददौ किञ्चिदपि ध्यानं तदीयकथने चन्द्रः। साम्प्रतं ध्रुवमात्ममरणमिति विचिन्त्य कुमुदिनीं जगाद चन्द्रः– 'प्रिये ? मा विजहिहि धैर्यम्। यदा यदेव कष्टं वितरति नः परमेश्वरस्तन्मर्षणं प्रतिजनकर्तव्यमेवास्ति। कुमुदिनि ! विमुक्तो भवाम्यहमिदानीमतः संघर्षेः। परलोके स्थास्यामि त्वां प्रतीक्षमाणः; सत्वरमेष्यसि त्वं तत्र। [आकाशाभिमुखमालोक्य] प्रभो ? एषोऽहमस्मि प्रपन्नस्तव शरणम्। प्रियतमे ! त्वमपि सत्वरमागच्छ।' इति।

अथैव विमलाममापत– "मदीयदुःखदुःखिनि भगिनि ! व्रजाम्यहम्। हन्त ? त्वमपि पतिताऽस्मत्कृत एव विपत्पयोधौ। हा हन्त ! ! किं करोमि ! निगडितोऽस्मि, निरस्त्रोऽस्मि। नोचेदमुं नृशंसं खण्डशो व्यधास्यमहमिति"। अत्रान्तरे मध्य एव व्याजहार क्रूरसिंहः ' किम् ? कियान् विलम्बो विद्यते ?" इति।

चन्द्र । सन्नद्धोऽस्मि।

क्रूरः। किमपि निवेदनीयं ते ?।

चन्द्र । पापिष्ठ ? किमहं त्वां निवेदयेयम् ? त्वं कोऽपि राक्षसाधमोऽसीत्येव केवलं कथयामि त्वाम्।

क्रूर । तूष्णीमेधि रे अभिमानिन् ? यदहं ते शासनं करोमि तल्लघुतरमेवास्ति त्वन्निर्धारितशासनापेक्षया।

चन्द्र । नराधम ! व्यर्थमेवाधिकमालपनम्। नार्हसि खलु मया समं संभाषितुमपि त्वम्। सुतरां क्लीबोऽसि। दुष्टहतक ! हृष्यसि बन्दीकृत्य माम् ? चण्डाल ? सम्मुखयोद्धारो हि वीरपुरुषा गण्यन्ते। वञ्चयित्वा पृष्ठतो योद्धारो ननु नपुंसका भीरवश्चाकल्प्यन्ते।

क्रूर । ( विहस्य। ) मूढ ? मरणाद् बिभेषीति प्रत्येमि खलु ? ? अत एव त्वमियद्दुःखितो भवन् विभाष्यसे।

चन्द्रः। अबलास्त्वादृशा भीरवो जनाश्चैव बिभ्यति मरणात्। किमिदं मरणमिति जानीषे ननु ? देहान्तरगमनमेवात्मनो निजकर्मानुगुणं मरणमुच्यते।

क्रूरः। तत्र किञ्चिदपि न विषीदामि निजमृत्युना किमु ?।

चन्द्रः। नैव विषीदामि। परं युधि कस्यापि वीरवरस्य हस्तेन मरणापेक्षया त्वादृशस्य नपुंसकस्य हस्तेन मृत्युर्जायते मे, तथापि मदीयकुमुदिनीमरणात्पूर्वमेवायं मृत्युर्भवतीत्येवाहं तुष्ये खलु !!।

क्रूर । अद्यापि मरणवेलायामपि कुमुदिनीं स्मरसि किमु त्वम् ?

चन्द्र । पामर ? दृढं निविष्टाऽस्ति ममास्मिन् हृदये कुमुदिनी। ममैवेयम्। अहमपि तस्या एवाऽस्मि।

'नाथ। मदीयहृदयदयिततम ? भवदीयैवाऽस्म्यहम्। भवता सहोपरम्याहमायामि परलोकम्। ( क्रूरसिंहं प्रति। ) पापिष्ठ ? मदीयहृदयेश्वरात् पूर्वमेव मामिहलोकाद् विसर्जय। प्रणतास्मि ते पदयोः।' इत्यभिधाय मध्य एव क्रूरसिंहं प्रणनाम कुमुदिनी। तं प्रणमन्तीमेनां निवारयन्नगादीच्चन्द्रः 'कुमुदिनि ? विमूढे कुमुदिनि ! किमिदम् ? अमुष्य दुर्विदग्धस्य नमस्क्रियां विधाय नृशंसहतकमेनं कुक्कुरं किमर्थं प्रणमसि ? किमिदमन्तिमसमये विधीयते त्वया ? ' इति।

स्वप्रियतमस्य वचनमुपश्रुत्य समुत्थायाधोमुखी तस्थौ कुमुदिनी। अथ कुमुदिनीं प्रोवाच क्रूरः 'कुमुदिनि ! किमन्यदभिलष्यते त्वयेति ?।'

कुमुदिनी। परित्रायस्व मे प्राणेश्वर!

क्रूरः। स्वश्चेन्मदायत्ता भविष्यसि तदा प्रमत्रामि परित्रातुं तव स्वामिनम्।

चन्द्रः। (सभय एव।) तूष्णीं भव रे पिशाच? तव जिह्वामेव च्छेत्स्याम्यहम्। (कुमुदिनीं प्रति।) प्रिये? किमिदमभिधीयते त्वया? मा कुरु प्रार्थनामातताायिदुष्कृतस्य। एहि, परलोकप्रस्थानायाधुनावां सज्जीभवावः। (क्रूरं प्रति।) एहि चण्डाल? विधेहि पूर्णमधुनाऽस्मत्कृत्यमक्षमा त्वम्।

चन्द्रस्येदं वचनं निशम्य तत्क्षणमेव क्रूरसिंहस्तदभ्यर्णमागत्य तौ परमेश्वराभ्यर्पणं विधातुं निरदिक्षत्। अतः कुमुदिनीचन्द्रौ सच्चिदानन्दकन्दजगदीश्वरमध्यायताम्। अवसिते तयो. ध्यानाभ्याने क्रूरः कोशात्कृपाणमाकृष्य सक्ष्वेडं प्राङ्गादीत्- 'अद्याहमनयोर्बलिदानं विधाय देवीं प्रीणयामि। अद्यावमीयते मम वैरनिर्यातनम्। अद्य मदीयाः प्रारर्थिनः प्रतिष्ठन्ते परलोकम्। अद्य चामून् विहस्य प्रसीदतितरामयं क्रूरसिंहः। प्रसीद, अनुगृहाण जगदम्बे? गृहाण निजबलिं दीयमानममुना।' इत्युदीर्य यावत्क्रूरः प्रवर्तते महर्तुं तावदेव समजायत ध्वनिरेको महान्; तेन साकं देव्या मूर्तिरपि विचलन्तीवालोक्यत। चमत्कृत्य चकितस्यास्य क्रूरस्य पाणावेव चित्रार्पितारम्भ इवावस्थितः कृपाणः। भयाकुलचित्तः सद्य चक्षुषी विस्फार्य देवीप्रतिमाभिमुखं यावदालोकते तावदेव तदभ्यन्तरात्- 'क्रूरसिंह? नास्म्यहं प्रसन्ना बलिमिममुरीकर्तुम्।' इति समश्रूयत ध्वनिः।

ध्वनिममुमाकर्ण्य क्रूरसिंहो भयभ्रान्तमना बभूव। पप्रच्छ चायं साश्चर्यं विरचिताञ्जलिः 'अम्ब? किं निमित्तम्?' इति।

अथ पुनस्तदभ्यन्तराद् ध्वनिरायात -'क्रूरसिंह! भवीयमञ्जसाधुना भदीयजीवनरज्जुः। भतोऽहमभिरक्ष्यामि परित्रातुमिमान्। क्रूरसिंह? तेषां स्थाने त्वदीयमेव बलिमहमनुग्र स्थितोऽस्मि' इति।

इति श्रुत्वाऽसौ देवीप्रतिमां द्विःकृत्वा बहिर्निर्गत्य वीरवरो रणवीरस्तद्भवत एवोपास्थितवान्। अकस्मादमु मूर्तिमध्यात्विनिर्गतमवलोक्य दुरात्मा क्रूरसिंहः परिचित्य क्षुधाकुलनेत्रः महापोर्यःशाकुलव रणवीरमभ्यधत्त- 'अये! कोऽयं चमत्कारः? बद्धितोऽस्मि खलु?! रे रणवीर? कुतस्त्वमिह?' इति।

रणवीरः। तव कवोष्णं रुधिरं पातुम्, त्वद्गतासुं देव्यै बलिं दातुम्, निरपराधजनान् भ्रातृजायामपि परित्रातुमत्र समागतोऽस्मि।

क्रूरसिंहमुखाद् रणवीरनामधेयमुपश्रुत्य माधवचन्द्रयो यावदुपरि विलोकयति चन्द्रसिंहस्तावदेव पुरस्तात्स्थितं स्वानुजं रणवीरमद्राक्षीद्सौ। रणवीरमवलोक्यैवायं सहसा व्याहार्षीद्- 'वत्स? कुरु मां बन्धनमुक्तमन्धाय अस्तु कार्यमिदम्। अद्य एव नृशंसमेनं प्रबलरनादविदारयामि'। इति।

चन्द्रसिंहवाक्यश्रवणसमकालमेव रणवीरः त्वरन्तु बन्धनमुक्तं विधातुं तदभिमुखं

गन्तुं यावदुपक्रमते तावदेव सहसाऽग्रतोऽभिगत्य क्रूरेण गच्छन्नयं निरुद्धः । तत्क्षणमेव निजभुशुण्डीं क्रूराभिमुखं संधाय प्रोक्तवान् रणवीरः ' अलमलं क्रूर ! तस्स्थानादेकमपि पदं प्रचलिष्यसि चेदुत वा मनागपि प्रजल्पिष्यसि यदि तर्हि गोलिकेयं तवोरस्थलं प्रविश्य परपारं निर्गमिष्यतीति दृढमवेहि । ' इति समाश्वास्य तेन समं चित्रोद्दिष्टुरिवायं भुशुण्डीं तदभिमुखं धृत्वा स्थितवान् ।

' किमेवं कुरुते रणवीरः ? किमर्थञ्च मां बन्धनान्न मोचयत्ययमिति विचिन्तयामास चन्द्रः । स्वभ्रातुराशयमभिज्ञाय चतुरो रणवीरस्तमवादीत्– ' आर्य ! क्षणं धैर्यमाकलय । दुरात्माऽयमधुना स्वहस्तकालमेव जीवति । तदहममुं रमयामि कियत्कालम् । ' इति । रणवीरस्येदं वचः संश्रुत्य क्रुधा क्रूरसिंहः सैनिकानुच्चैराहूयाऽऽज्ञापयत्– ' अयि मदीयवीरवराः सहचरा ! सद्य एवाभिपत्य बालकमेनं निकृत्य खण्डशो विदधतु भवन्त । ' इति ।

सेनापतिनिर्देशसमकालमेव सकला सैनिका रणवीराभिमुखं निजनिस्त्रिंशानाकृष्याभ्यपतन् । तान् स्वाभिमुखमापततो निरीक्ष्य रणवीरः शान्त्या स्थित्वा तत् क्रूरसिंहस्य भूतपूर्वं किङ्करयुगलमधुनाऽपि बहिः प्रदर्शिततदनुचरभावविहितप्रहरिकार्यं परीक्षितुमनास्तदभिमुखं निरैक्षिष्ट । इमावपि कृतवेदिनौ प्रहरिभटौ स्वशरणदातुः श्रीरणवीरस्य साहाय्यार्थमभिद्रुत्य कृपाणमाकृष्य रणवीरमभितः संरक्षितुं स्थितौ । स्वानुचरौ रणवीररक्षणं कुर्वाणौ निर्वर्ण्य तिविस्मयस्तिमितमानसः क्रूरसिंहः– ' नूनं जातोऽत्र कोऽपि विश्वासघातः । ' इति विचिन्तयामास ।

अथ स्वयमेवासौ नृशंसो महता कोपेन स्वचन्द्रहासमाकृष्य रणवीरमभ्यपतदिति तदीयाः सैनिका अपि तत्सहायतार्थमभिधाव्य प्रहरिभटद्वयसहितं रणवीरं पर्यवेष्टयन् । इत्थमवलोक्यैव रणवीरो निजभुशुण्डीनिर्ह्रादमकार्षीत् । भुशुण्डीनिःस्वनसमक्षणमेव पूर्वत एव तिरोहिता रणवीरसैनिकाः स्वनायकसहिताः कन्दरमन्दिराणि परित्यज्य सद्य एव तत्रोऽपाजग्मुः । क्षणादेव तद् गुप्तगृहचत्वरस्थलं रणवीरस्य बलेन सकुलं समजायत । स्ववीरयोधानालोक्य रणवीरः क्रूरसिंहं प्रगृहीतुममूनादिदेश । तत्कालमेव चतुर्भिर्वीरभटैर्निजगृहे क्रूरसिंहः । निगडितश्चास्य करचरणं लोहशृङ्खलया । अवशिष्टास्तत्सैनिका अपि बन्दी कृताः ।

अनन्तरं रणवीरो निजबन्धुं बन्धनमुक्तं कर्तुं तदन्तिकं ययौ । अत्र प्रागेव पुरुषवेशधारिणी चतुरा रत्नप्रभा कुमुदिनीसमीपमागत्य तां बन्धनान्मोचयितुं प्रवृत्ता । ' कोऽयं सुन्दरो राजकुमारः स्यात् । ' इति मनसि विमृशन्ती कुमुदिनी रत्नप्रभां पृष्टवती–' बन्धो ! कोऽसि त्वम् ? ' इति ।

कुमुदिनीप्रश्नमाकर्ण्य तां मोचयन्ती सस्मितमुखाम्बुजा रत्नप्रभा– ' अत्रभवत्या निदेशवर्तिनी कनिष्ठभगिनीयममरकण्टकाधिपतिमहाराजस्य नन्दिनी रत्नप्रभा भगवतीमभिवादयते । ' इति समुदचारीत् ।

इत्यभिधाय रत्नप्रभा कुमुदिनीं बन्धनादुन्मोच्य तदीयचरणयोर्निपतितवती। तस्या वचनं निशम्य विसिस्मिये कुमुदिनी। एवा रत्नप्रभायाः कुशलं पृष्ट्वा हृदा चेमामालिङ्ग्य मुमोच प्रमोदाश्रुजलम्। अथ रणवीरश्चन्द्रसविधे गत्वाऽऽदौ विमलां विमोच्य पश्चात् स्वाग्रजन्मानं बन्धनान्मोचितवान्। यथैवं मुक्तोऽयं चन्द्रो बन्धनात् तथैवासौ स्वपार्श्वस्थितस्य कस्यचिद् भटस्य हस्तात् कृपाणमाच्छिद्याकस्माद् बुभुक्षितव्याघ्र इव क्रूरसिंहाभिमुखं निद्रुत्य चरणाभ्यां तं बलेन प्रजहार। चन्द्रपदप्रहारसमकालमेवायं पापिष्ठोऽवनितले निपत्य भिया कम्पितुमारेभे। भूतलपतितं तमवलोक्य चन्द्रस्तदुरस्स्थलमारुह्योपविष्टवान्। समयेऽस्मिन् भयङ्कराकृतिरयं व्यलोक्यत चन्द्रः। रणवीरः कुमुदिनी रत्नप्रभा सर्वेऽपि ससैनिका नायकास्तु स्तब्धीभूय चन्द्रसिंहं निरीक्षाञ्चक्रिरे। अत्रान्तरे चन्द्र क्रूरं स्वकरस्थ कृपाणमुत्तोल्य यावदसु प्रहर्तुं प्रवर्तते तावदेव महाभयानको ध्वनिरेकोऽजायत। तेन साकमेव ' विरम, राजकुमार ! विरम। जीवतु किञ्चित्कालमसौ नृशंसः ! ' इति गिरमुदीरयन्तौ द्वौ महात्मानौ योगीन्द्रौ तत्रागत्य स्थितौ। चन्द्रस्य चोद्यतं करवालधरं करमिमौ पृष्ठतो अगृह्णतु। योगीन्द्रौ विलोक्य चन्द्रः क्रूरसिंहवक्षसोऽवतीर्य महानुभावयोस्तयोश्चरणारविन्दयुगलमवन्दत। अथानुक्रमं रणवीरकुमुदिनीविमलारत्नप्रभाप्रमुखा सर्वेऽपि जना योगीन्द्रद्वयं प्रणेमुः। योगीन्द्रयुगलेन निजकरकमलमुद्यम्याऽऽशीर्भिः सभाविता अखिलाः।

अथ योगीन्द्रनिर्देशेन बन्दीकृतं क्रूरसिंहमादाय सकला अपि गुप्तगृहाद् बहिर्निरगच्छन्। चन्द्रसिंहो निजाल्पसैनिकान् गुप्तगृहमिदं विनाशयितुमादिशत्। तत्क्षणमेव सैनिका गुप्तगृहं शिलाशकलमृत्पिण्डखण्डचयैः पूरितवन्तः। इत्थं विनाशितं क्रूरसिंहस्य गुप्तगृहम्। गच्छता कालेन तत्रासीत् नावशिष्टम्। गुप्तगृहाद् बहिर्निःसृत्य चन्द्रसिंह स्वप्रधानेन भीमसप्रतापसिंहेन सङ्गतः। वर्षीयान् मन्त्रिवरः स्वनरेन्द्र चन्द्रसिंहमालोक्य सकण्ठाश्लेष प्रेमबाष्पजलमभिववर्ष। तदनु सर्वेऽपि मिथः सहस्य सानन्दवदनारविन्दा बन्दीकृतं क्रूरसिंहं सहादाय विजयनगराभिमुखं प्रतस्थिरे॥

+ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य
कृतौ वैदिकराष्ट्रकाव्यानुजे कुमुदिनीचन्द्रे चतुर्दशी कला +

# अथ पञ्चदशी कला

" यद्देवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ "        ( विक्रमोर्वशीये )

" सत्यमेव जयते नानृतम् । "        ( इत्युपनिषत् । )

" लभस्व राज्यश्रियमञ्जसा प्रजा भवन्तु भव्याभ्युदयप्रयोजना ।
यशस्सरित्तीरतरुत्सरा वरं हरन्तु तापं तव वैरिसम्भवम् ॥ "

( प्रकृतिसौन्दर्ये । )

आसीदद्य विजयनगरप्रासादस्यान्यतमस्मिन् विशाले रङ्गमहालये महती राजसभा भविश्री । अभूदद्य दुरात्मनो नृशंसस्य क्रूरसिंहस्यान्तिमो न्यायो भवितेति राजसभायां गन्तुं नगरवासिनो लब्धवर्णा प्रतिष्ठिता पुरुषाः समुद्यता भवितुमारेभिरे । प्राह्णेऽन्वेकादशवादन मनोहरोज्ज्वलनेपथ्यशालिन सामन्ताः सेनापतयो मण्डलेश्वरा नगरश्रेष्ठिनो विचक्षणाश्चान्येऽपि गुरुयशसो गृहमेधिनो महोदया अनुक्रमं राजसमितिं प्रविश्य यथायोग्यं निजार्थमुपयोजितान्यासनानि भेजिरे । प्रतीहारो राजसभाद्वारमुपस्थितानां भद्रमहोदयपुरुषाणां नामानि समुदीर्याभ्यागतनृणां समुदयाय सम्मानं ददौ । राजपरिषन्मध्यभागे द्वे विशाले मृगचर्मरुचिरे महार्हसिंहासने विलसत, तयोर्मध्येऽतिविशालमेकं प्रोन्नतं रत्नजटितं भद्रासनं शोभते स्म । इत्थमन्येषां सामन्तसेनानीप्रमुखाणां कृतेऽपि विविधमञ्चमण्डलमायोजितमभवत् । नरेन्द्रपरिषदि महिलामण्डलार्थमपि पृथगुपवेशनस्थले समायोजितानि रुचिरमणिमयानि कौशेयाम्बरनिर्मितानि मृदुलललितानि सुन्दरासन्दीवृन्दानि । माण्डलिकसेनानायकसुप्रतिष्ठाभाजनपुरुषपुङ्गवै राजपरिषदियमाविलकुलमापूर्णा बभूव ।

अद्यापि नोपवस्थ वसुमतीवासव । सर्वेऽपि सभ्याः सोत्कण्ठमानसा महीमण्डलाखण्डलं प्रतिपालयाञ्चक्रिरे । "विजयतां विजयनगराधीश्वर । चिरं जीवतु जगज्जीवनो विश्वम्भरेश्वर ।" इति जयघोषपुरस्सरमाशीर्वचोराशिसमाकर्णनसमकालमेव सभागतजना - उपतिष्ठते नरेन्द्रः साम्प्रतम् । ' इत्यवगम्य सावधानाः समवर्तन्त । विशेषाः समांसदामिदानीं द्वाराभिमुखीबभूव नयनचकोराङ्गनापङ्क्तिर्मेदिनीमेंदुलीय नरेन्द्रचन्द्रं पातुमनिमेषमेषा । अत्रान्तरे निजानुजस्य नृपचक्रवर्तिनो महाराजश्रीरणवीरसिंहस्य हस्तारविन्दमादाय महीमहेन्द्रो महाराजश्रीचन्द्रसिंहः सानन्दवदनेन्दीवरो राजसदनं समासदत् । तदनु

१ सुखाय । ' निर्वाणं निर्वृतिः सुखम् । ' २ यशःसरित्तीरे–कीर्तिनदीजले । ३ विचक्षणाः । ४ गृहस्थः । ५ राजसभाम् । ६ समुदाय । ७ सिंहासनम् । ८ महीमहेन्द्रः । ९ सभ्यानाम् । १० महीनन्दनम् । ११ राजसभागृहम् ।

निःशेषभुवनवन्दनीयौ प्रशान्तपावनीयमुखचन्द्रौ महनीयानुभावसान्द्रौ योगीन्द्रावपि नरेन्द्रसभामन्दिरं प्राविशताम् । महामनोरनयोरनन्तरममरकण्टकस्थविरमन्त्रिवरस्य श्रीमन्नगेन्द्रनाथस्य कराम्बुरुहं गृहीत्वा भव्याः प्रधानः श्रीरतापसिंहो नरसिंहसमालयं प्राविक्षत् । सर्वेषाममीषां पश्चादनुक्रमं कुमुदिनी रत्नप्रभा विमलाऽमरकण्टकनृद्राजमहिषी चन्द्रप्रभाऽपि नृपसंसदं प्रविष्टा। इत्थमखिले राजपुरुषमण्डले राजसभामुपसेदुषि सति सकलाः समासीना नरा निजासनादुत्थाय नरेन्द्रश्रीचन्द्रसिंहस्य जयमुद्घोषं प्रणेमुश्चाखिलाननून् । प्रविश्य राजसभां रचितांजलिचारणी समलञ्चक्रतुः सिंहासने उभावपि महानुभावौ योगीन्द्रौ । तन्मध्यवर्त्ति नृपासन नृपवरः श्रीचन्द्रसिंहो निजानुजेन मनुजपतिना श्रीरणधीरसिंहेन समं समलङ्कृतवान् । ततो मनागनिम्नवर्तिनि विष्टरे मन्त्रिपुङ्गवौ विरेजतुः । तस्मात् पृथगायोजितेषु सुन्दरमञ्चान्तरेषु सकलोऽपि ललनासमुदायो निजनिजमञ्चमलञ्चकार । सर्वतोऽपि राजपरिषदि विरराज शान्तिदेवी । इत्थमतीते होरैककाले महाराजश्रीचन्द्रसिंहः स्वमेतानायकयुगलाभिमुखमवलोक्य ' नायकौ ! स्वबन्धनात्स्वयं वन्दीकृतमादायोपानयतमिह । ' इति गिरमुदाजहार ।

" यथादिशति राजेन्द्रः । " इत्यभिधायोभावपि नायकौ नरेन्द्रं प्रणम्य निष्क्रम्य निर्गत्य ततः किञ्चत्समयानन्तरमेव लोहशृङ्खलानियन्त्रितकरचरणं नृशंसं क्रूरसिंहं राजसभायां समानीय स्थापितवन्तौ । राजसभामध्येऽवाङ्मुखस्तस्थौ क्रूरसिंहः । पापिष्ठं क्रूरसिंहमवलोक्यैव सकलैः सभ्यजनैस्तदुपरि निपातिता तिरस्कारमयी दृष्टिः । क्षणं मौनमाकलय्यायो महाराजश्रीचन्द्रसिंहो रोषारुणलोचनः क्रूरसिंहमभाषत– ' किं रे क्रूरसिंह ! कस्मिन् विचारे निमग्नोऽसि ? किमेवं शान्तो भूत्वा स्थितोऽसि शम् ? ' इति ।

क्रूरसिंहः । ( दीनमुखः सखेदं । ) राजेन्द्र ! नृशंसः पापात्मा निर्घृण कृतघ्नोऽविनीतश्चायं क्रूरसिंह सम्प्रति पश्चात्तापानलेन दग्ध्वा भस्मीभवति । असंख्यानि सन्ति मे दुरितानि । भगवन् ? नाहमिच्छामीदानीमिह मेदिनीमण्डले क्षणमपि जीवितुम् । तदनुकम्पाशी दयामभ्ययमन्नमा यमसदनं विसर्जनीयः प्रभुणा । भवादृशां धर्मधारिधुरन्धराणां धरणीधराधीश्वराणां हस्ताद् भवेन्मम यदि मरणं सुरलोकप्राप्ति तर्हि समुपेष्यामि अहम् ? ? चन्द्रसिंह ! सपरिवारं श्रीमन्तं चिरायुषं करोतु जगदीश्वर इति सभ्यस्वजनसुमङ्गलं शङ्करं प्रार्थयेऽहमाविरतम् ।

चन्द्रसिंहः । ( शान्तहृदा । ) क्रूरसिंह ! प्रागेवैवं शुभविचारस्तव हृदि यदि पदमकरिष्यत्तदा नेदृशी दुर्गतिरभविष्यत्तव ते ! ! ।

क्रूरसिंहः । तथ्यमभिधीयते नरेन्द्रेण । विनाशकाले विपरीतबुद्धिरिति किं न विज्ञायते

---

१ राजसभाम् । २ सभ्याः । ३ अञ्जलिं गृहीतवन्तौ । ४ आसने । ५ नारीजनः । ६ पृथ्वीपालेश्वराणाम् ।

प्रभुणा ? यदा हि परिणिनमिपति दशा तदानीमेव धिषणी जायते मलीमसा, विलीयते चाखिलाऽपि चातुरी । करएव तिष्ठति करगतं शस्त्रम् । राजन् ? न न तिष्ठति खलु कलुषकल्पः । सत्यमेव जयते नानृतम् ।' तदनुगृह्णाय भुवसो दुरात्मा क्षणमेकमपि साम्प्रतमर्मर्पणीय खलु जीवत्र भवता ।

चन्द्रसिंह । समीचीनम् ? इदानीमेव प्राप्स्यसि स्वमात्मकर्मणः फलम् । ( प्रधान प्रति । ) आर्यप्रतापसिंह ? निशाम्यतामयं तदीयं भाति शासनं बन्दीकृतो भवता, येन सन्नीभवेदसौ ।

महाराजनिदेशसमकालमेव प्रतापसिंहो दण्डनिदेशमिममनुवाच्य समश्रावयत्– " राज्यरिपो क्रूरसिंह ? चिरकालात्त्वमजितदुर्गस्य विजयनगरस्य चाधिपतिभिः सह विगृह्णन् वैरमाचरसि । अजितदुर्गाधिपतिमहाराजश्रीकेसरिसिंहः शरणागताभ्या युवाभ्या जनकतनयाभ्यामभय दत्वा निजाश्रये निदधे वाम् । तस्य महाराजस्यान्न बुभुजाते भवन्तौ । कृतज्ञतया परिज्ञरितु युवाभ्या दत्तमासीद् वचन महाराजाय । तद् वचनमपालयता त्वया यदीय अन्नमन्नं तस्यैव कृतघातिता व्यधायि । राज्ये राजनि समस्तरि त्वया विरचित बहुविध कपटजालम् । तेषा प्रतिफलत्वेन यत्ते शासन विधीयते तदल्पमेव वरीवर्ति । क्रूरसिंह ? शृणु निजापराधान्–

१– अजितदुर्गनगरश्रेष्ठिन पुत्रवधूहरणम् ।
२– अबलायास्तस्या उपरि बलात्कारप्रवर्तनम्, अत एव तस्या वनिताया निजात्मघातकरणम् । अथ प्रमदायास्तस्याः कलेवरं शकलीकृत्य तदीयहत्या गोपायितुमनसा भूमौ तस्याच्छादनम् ।
३– रणवीरसिंहापहरणम् , महाराजस्य मृत्युसम्पादनम् ।
४– राजनन्दिन्या कुमुदिन्या दुष्टवासनामयी दृष्टि , तस्याश्चाहरणम् ।
५– महाराजश्रीविजयसिंहस्य प्राणग्रहणकूटयन्त्रम् ।
६– राजकुमारश्रीचन्द्रसिंहस्य विश्वासघातं विधाय प्रग्रहणम् ।
७– महाराजश्रीविजयसिंहस्य प्राणविनाशनम् ।
८– कुमुदिनीहरणम्, तस्या उपरि अत्याचारकरणम्, तस्याश्च बलिं दातुं नयनम् ।
९– महाराजश्रीचन्द्रसिंहस्यापि बलिदानसम्भारः ।
१०– विमलहृदया स्वपत्नीं विमलामपि बलिमर्पयितुं तव विचारः ।

क्रूरसिंह ? इयन्ति तवागासि सन्ति । कतिवारं त्वामसन्महाराज पापकर्मणो निवार्यानिहत्य जीवन्तमेव विमुच्य दयाञ्चक्रे । अत एव तदीयदयाया दुरुपयोगो विहितस्त्वया ।

---

१ बुद्धि । २ मलिना । ३ नश्यति । ४ असह्य । ५ दण्ड । ६ कलह कुर्वन् । ७ कपट जालम् । ८ बन्दीकरणम् । ' प्रग्रहोपग्रहौ बन्द्याम् । ' इत्यमर । ९ ' आगोऽपराधो मन्तुश्च । ' इत्यमरः ।

क्रूरसिंह ? त्वया घोरं कपटजालं कृतमभूत्। अतिभयङ्कराश्च मन्तवो विहितास्त्वया। तद्दृष्टिशामेक्षम्याणामपराधानां शासनत्वेन केवलं गलेपाशदण्ड एवाज्ञाप्यते ते। क्रूरसिंह ? इतस्तृतीयेऽहनि मध्यन्दिने चन्द्रवतीतरङ्गिणीतीरभुवि गलपाशस्ते दास्यते। त्वदपराधानालोचमानैरतीवतीव्रहृत्स्यया संपीड्य व्यापादनीयस्त्वमस्माभिः किन्तु परमदयालुनाऽस्मन्महाराजेन तवेदृशी लघीयसी शिक्षाऽऽज्ञाप्यते। क्रूरसिंह ? महाराजस्य सभासदाञ्चान्येषां मतानुसारं निर्णीतोऽयं त्वदपराधानां गलपाशदण्डो विज्ञाप्यते ते। ' इति।

क्रूरसिंहस्य गले पाशदाननिर्णयमाकर्ण्य सर्वेऽपि सामाजिका हर्षकिलकिलारवं चक्रुः बभूवुश्चातितरामातुराः सकला अपि पौरजना नृशंसं क्रूरसिंहमेनमालोकितुं पाशे लम्बमानम्। दण्डविज्ञापनानन्तरं सर्वतोऽपि समायां शान्तिरासीत्। परमन्ते शान्तिभङ्गं विधाय नृशंसः क्रूरसिंहो दीनवदनः सन् व्याजहार-' आम्। योग्यमेव शासनं व्यधायि मे। शूलार्होऽहमासम्। तथापि मदुपरि समनुकम्प्याज्ञापितो मे गलपाशदण्डो महाराजेनेति बलवदुपकृतोऽस्मि नरेन्द्रेण। अथासौ चन्द्रसिंहाभिमुखोभूय निजगाद-' महाराज ? अस्ति प्रार्थनीयं मे किमपि श्रीमच्चरणान्तिके। इति।

चन्द्रसिंहः। कथय मुदा। श्रोष्यामि तवाखिलं कथनम्।

क्रूरसिंहः। गलपाशदानात्पूर्वमस्य नृशंसस्य तदीयदुष्कर्मणां क्षमा विधेया श्रीमता। क्षमिष्यते चेन्मामत्रभवान्; अहमतीवमुदा शान्तहृदा चोपरंस्यामि।

चन्द्रसिंहः। क्रूरसिंह ? प्रमुदाऽहं त्वां क्षमिष्ये। परमिदानीमहं त्वा नैव शक्नोमि क्षन्तुम्। केवलं मम प्रतिज्ञातमेवात्र कारणम्। यदा त्वं गलपाशदानस्थले पदं निधास्यसि तदानीमेवाहं सरलहृदा त्वां क्षमिष्ये।

क्रूरसिंहः। ( शिरो नमयन् ।) अतीवोपकृतोऽस्मि। ( रणवीरं प्रति। ) राजकुमारश्रीरणवीरसिंह ? अपि वितरिष्यसि मे क्षमाम् ?।

रणवीरः। क्रूरसिंह ? विमलान्तःकरणेनाहं त्वां क्षमे; दये चाहं त्वदुपरि। जगन्नियन्ता जगदीश्वरस्तवात्मने वितरतु शान्तिम्।

अनन्तरमसौ क्रूरसिंहः कुमुदिनीमालोक्य प्रोवाच-' भगिनि कुमुदिनि ? मम दुष्कर्माणि विस्मृत्य मां क्षमतां भगवती। ' इति।

कुमुदिनी। त्वत्कृतानि सकलदुरितकर्माणि विस्मृत्याहं शुभमिच्छामि ते। क्रूरसिंह ? भगिनीव तवात्मशान्त्यै परमात्मानमहमभ्यर्थये। भ्रातः क्रूरसिंह ? क्षान्तोऽसि मया त्वम्। ( अथायं रत्नप्रभायाः क्षमामयाचत। )

रत्नप्रभा। क्रूरसिंह ? क्षम्यसे त्वं मयाऽपि। स्मर परमेश्वरमधुना केवलम्। 'कतमाह भगिनी। तथैव करोम्यहमिदानीम् ? ' इति समुदीर्यासौ विमलानिकटमुपगम्य तामायाचत-' प्रिये विमले ? तवाप्यपराद्धं खलु मया। त्वत्स्वामी भूत्वा स्वामीवाहं तवैक-

१ गलपाशो भाषायां ' फांसी ' इति प्रसिद्धः।

मपि कर्तव्यं नान्वतिष्ठम्। हन्त ? विवाहग्रन्थिना निबध्य मया सममात्मानमतीवकष्टं प्रापितवत्यसि। सुखस्वप्नोऽपि नालोकि त्वया। अयि त्रिमलहृदये विमले ? ममागासि विस्मृत्य स्वीयमिमं कर्मचण्डालं क्षमस्व त्वं स्वामिनम्। हा हन्त ! ! अतुलं दुःखं दत्तं मया ते। प्रिये ? नूनं पतिव्रताऽसि त्वमिति नाहमवेदिषं प्राग् विमूढः। हन्त ! मोहमदिरापानमदमत्तेन मयाऽमृतं विसृज्य विषमुपभुक्तमिति परमात्मनस्तवापि चाहमपराधी संजातोऽस्मि। अयि पवित्रप्रणयिनि ? कुटिलोऽस्मि, नृशंसोऽस्मि, दुष्टोऽस्मीति सकलं विस्मृत्य त्वमिदानीं नराधममिमं क्षमस्व। ' इति निगद्य क्रूरसिंहो विमलां प्रणिपतितुं प्रवृत्तवान्। परं प्रणमन्तममुं वारयन्ती समाश्वास्य प्रोक्तवती विमला– 'प्रियतम ? परित्यज्यतामयमिदानीं संसारमोहो भवता। परमकारुणिकः परमेश्वरः पापकर्मणो भवन्तं तारयिष्यतीति तस्मिन्नेव समाधीयतामात्महृदयमिदानीं भवता। प्राणनाथ ? भवन्मरणानन्तरमियं दासी भवदीया विधाय सहगमनं परलोकमेष्यति। परत्रैवावां परमेश्वरभक्तिलीनौ सुखेन समं निवत्स्याव। अनवरतं जगदीश्वरसकाशे महाराजश्रीचन्द्रसिंहस्य विजयार्थमर्थयिष्यावहे। इति।

क्रूरसिंहः। ( साश्रुनेत्रः। ) धन्याऽसि पवित्रहृदये विमले ? धन्याऽसि त्वम्। सुन्दरि ? तव साहाय्येनैवाहं घोरपापकर्मणो निवर्तिष्ये। देवि ? उद्धृतं मम कुलं त्वया। धन्याऽसि त्वम्।

विमला। नाथ ? नास्मि साधुवादभाजनमहम्। धर्म एवायं नारीणां यदात्मप्राणेश्वरमामरणं मनोवाक्कायैः परिचर्य परमेश्वरसदृशं मन्येत भार्या। पतिरेव परमेश्वरः स्त्रीणाम्। समासतः सर्वस्वमेवासौ स्वामी वर्तते खलु योषिताम्। स्वप्राणेशस्वर्गवासानन्तरममुना सहगमनं विधेयं योषया। उतवाऽसाध्ये तस्मिन्ननया महिल्या यावज्जीवं वैधव्यधर्मं पालयित्वा सदाचरणेन संरक्षणीयं शीलमात्मनः। प्रियतम ? परिहीयतां तावदयमखिलो विचारो भवता। दुरितकर्मानुतापं कुर्वाणं विलोक्य भवन्तमहं प्रमुदिताऽस्मि। सम्प्रति स्मर्यतामीश्वरो भवता। कारुणिकस्य तस्यैव शरणं गम्यतां श्रीमता। दयालुरसौ दयानिधिर्भवन्तं पापकर्मणः परिपाल्य समुद्धरिष्यतीति स एव ध्यायतामनिशं दयितेन।

एतावदुदीर्य योगीन्द्रौ दर्शयित्वा कथितवती क्रूरसिंहं विमला– ' नाथ ? गम्यतामनयोर्महात्मनोरन्तिकम्। परिगृह्य चैतयोश्चरणारविन्दरजः पवित्रीक्रियतामात्मा श्रीमतेति। ' विमलोदितमाकर्ण्यैव द्रागेव महात्मनोरभ्यर्णं गत्वा तदीयचरणयोर्निपत्य प्रोवाच क्रूरसिंहः – ' परमपूज्यौ महानुभावौ महात्मानौ ? अभिवादयतेऽत्रभवन्तौ नृशंसोऽयं क्रूरसिंहः। क्षमां भिक्षतेऽसौ भगवच्चरणान्तिके। दयालुदेवौ ? क्षन्तव्योऽयमपराधी श्रीमद्भ्याम्। ' इति।

प्रथमो योगीन्द्रः। क्रूरसिंह ? क्षम्यसे त्वम्। ( विमृश्य। ) आम्। क्रूरसिंह ? अपि परिचिनोषि माम् ?।

क्रूरसिंहः। ( साश्चर्यम्। ) नैव भगवन् ?।

योगीन्द्रः । शृणु-येनापहृतं त्वत्पितृराज्यम्, यस्मै समर्पितवाँस्त्वमजितदुर्गाराज्यं द्रव्यमादाय विपुलम्, यस्य च महाराजश्रीकेसरिसिंहस्यात्मजौ निगृह्यानीयायत्तीकर्तुं त्वं प्रतिज्ञासीः; स एवायममरकण्टकस्य भूतपूर्वाधीश्वरो रणजितसिंहः स्वयमद्य योगिवेषेणोपस्थितोऽस्ति तव समक्षम् । [ इति समाख्याय योगिवेषो महाराजः स्वासनादवतीर्य मध्येसभं तस्थौ । ]
इदमाकर्ण्य सर्वेऽपि सभासदः स्तब्धाः समजायन्त । क्रूरसिंहस्तु सहसाऽऽश्चर्यचकितोऽभवत् ।

महाराजं श्रीरणजितसिंहं विलोक्यैव रणवीरो रत्नप्रभा चोभौ पितुरन्तिकमभिधाव्य प्रणम्य जानुभ्यां समुपाविशताम् । तयो मूर्द्धनि स्वहस्तं विन्यस्य महाराजो जामातरं दुहितरञ्च—' वत्सौ ! आयुष्मन्तौ भूयास्तामुभौ ।' इत्याशीर्वादं वितीर्य प्रेम्णाऽऽलिङ्गितवान् ।

चन्द्रसिंहोऽपि महाराजनिकटमागत्यामुमवन्दत । तं स्ववक्षसा समाश्लिष्य कुशलमपृच्छन्महाराजः । महाराजश्रीरणजितसिंहनरेन्द्रमाविर्भूतमाकर्ण्य तदीयप्राणवल्लभा चन्द्रप्रभा देवी तत्प्रधानवरो नरेन्द्रनाथश्चोभौ महाराजसविधं सत्वरमाजग्मतुः । मन्त्रिवर्यो नगेन्द्रनाथस्तु महाराजं निरीक्ष्यैव सहसा साष्टांगप्रणिपातं प्रणनाम । अथामात्यवरं निजकराभ्यामुत्थाप्य महाराजश्रीरणजितसिंहः स्नेहातिशयेन परिष्वज्यामुमाश्वासयामास । अनन्तरं महादेवी चन्द्रप्रभा पर्यश्रुमुखी नरेन्द्रचरणारविन्दयुगलं ववन्दे । सच एवैनामुत्थाप्य निजकरपल्लवेन तदीयमश्रुजलं परिमृज्य शान्तिप्रदेन वचसाऽब्रवीन्महाराजः- ' देवि ! किमिति विगलयसि विलोचनकमलयुगलादस्रजलजालम् ! ' इति ।

इयदवधि योऽसौ क्रूरसिंहो निमग्न आसीदात्मविचारपारावारे स इदानीं प्रबुध्य प्रणम्य च महाराजमात्मदुरितकर्मणां क्षमामयाचत ।

महाराजः प्रोवाच– ' क्षमतामयं परमदयालुर्दयासिन्धुरखिलबन्धुर्जगदीश्वरस्त्वदपराधान् । भद्रं भवतु ते !! ' इति ।

अथापरं योगीन्द्रं प्रणम्य सत्रपमभाषत क्रूरसिंहः– ' भगवन् ! श्रीमदुपकण्ठे क्षमाभिक्षुरेष भगवच्चरणकमलचञ्चरीकः किङ्करः । ' इति ।

योगीन्द्रः । जगदीशस्त्वां दर्शयिष्यति सन्मार्गम् । स एव क्षमिष्यते त्वाम्[1] । जगन्नियन्ता प्रभुरेवोद्धरिष्यति त्वाम् । क्रूरसिंह ? अप्यभिजानासि माम् ? ।

क्रूरसिंहः । ( साश्चर्यं तदभिमुखमालोक्य । ) नाभिजानामि दयालुदेव ! को न खलु भगवानिति नास्म्यलमवगन्तुम् ? ।

सर्वे सभास्तारा नरोऽपि–' कोऽयं नु भवेन्महात्मा ? ' इति विजिज्ञासमाना बहुविधं वितर्कयन्तो योगीन्द्राभिमुखमुपोपितैरिवानिमेषलोचनैरालोकयाञ्चक्रुराकुलहृदयाः । योगीन्द्रो निजासनादुत्तीर्य सभामध्यस्थलमुपगम्य शान्तमूर्तिस्तस्थौ । विश्वेऽपि पारिषद्या विस्मयस्मेरान-

१ सभ्या. ।

मारविन्दा योगीन्द्रमुखचन्द्रं व्यलोकन्त । किमिदानीमसौ विदधातीति श्रोतुमनसोऽखिला अवेक्षाञ्चक्रिरे । अथ महानुभावो मनस्विपुङ्गवो महात्मा योगीन्द्रः सकृन्मेदुरयाऽमृतजुषा दृशा विष्वगवलोक्य गम्भीरां गिरमाददे–' क्रूरसिंह ? सर्वेऽपि सभ्यमहोदयाः ? अथ कर्मविपाकबलेन कलुषात्मनः क्रूरसिंहस्य जातेयमीदृशी दशा । इदानीमयमात्मदुरितकर्मकृतेऽनुतप्यते । पश्चात्तापानलदन्दह्यमानहृदयतयाऽसौ साम्प्रतं निर्मलमानसः संवृत्तोऽस्ति । अतएवाहमधुना निजपूर्वाश्रममेनमभिज्ञापयामि । क्रूरसिंह ? शृणु । पश्य विलोचनयुगलीमुन्मील्य–यस्त्वां परिपाल्य पोषितवान्, तदुपकारप्रतिफलतया यश्च त्वया योगाभ्यासार्थं पुष्पभद्रामरिस्तीरोपान्तगतो बन्दीकृत्य वधाय मातङ्गहस्ते समर्पितः, स एवायमजितदुर्गाधिपतिर्महाराजकेसरिसिंहः स्वयमद्य तव पुरतः समुपस्थितोऽस्ति । ' इति ।

" किम् ? महाराजश्रीकेसरिसिंहः श्रीमानेव किमु साक्षात् ? " इति परितो गिरः समुदीर्णा निखिलसभागतजनमुखेभ्यः सहसैव ।

महाराजश्रीचन्द्रसिंहस्तु स्वपितृचरणाविरीक्ष्यैव सिंहासनात्सोत्फालमुत्तीर्य पितुरन्तिकमुपेत्य साष्टाङ्गं तच्चरणयोरपतत् । ' उत्तिष्ठ चन्द्र ? उत्तिष्ठ । ' इत्यभिधाय महाराजस्तं स्वहस्ताभ्यामुत्थापयामास किन्तु तदग्रतश्चन्द्रोऽयं विरचिताञ्जलिर्जानुभ्यां निषण्ण एव स्थितवान् । कनिष्ठराजकुमारो रणवीरस्तु कियत्कालपूर्वमेव तातचरणान्तिकमागत्य निबद्धहस्तयुगो जानुभ्यामुपविष्टोऽभवत् । महाराजश्रीकेसरिसिंहः स्वपुत्रयोर्मूर्द्धनि निजमेकैकं करं विन्यस्य–' वत्सौ ? सुखिनौ भूयास्ताम् । न परिहेया कर्हिचन सत्यदयाधर्मनीतयो भवद्भ्याम् । सच्चिदानन्दस्वरूपो निखिललोकनायकः प्रभुश्चिरञ्जीविनौ कुर्याद् भवन्तौ ? ' इत्याशीर्वचःपुष्पाणि ववर्ष ।

अथोभावपि राजकुमारौ निजजनकपार्श्वत उत्थितौ स्थितौ । स्थविरो मन्त्रिवरः प्रतापसिंहो महाराजसमीपं परिधाव्य प्रणम्य चाश्रुबिन्दुवृन्दं मुमोचाक्षिभ्याम् । महाराजस्तं हर्षोत्कलिकाकुलहृदा स्ववक्षसा समाश्लिष्य तदीयं वाष्पजलं परिमृज्य च परिसान्त्व्य चाल कुशलवृत्तमप्राक्षीत् । अनन्तरमखिला सामन्ताः सेनापतयः सभागताश्चान्येऽपि जनाः क्रमशः समुपगम्य महाराजं प्रणेमुः । अथ महाराजश्रीरणजितसिंहनरेन्द्रोऽग्रत उपस्थाय महाराजश्रीकेसरिसिंहं प्रणम्य प्रणिजगाद–' केसरिसिंह ? अस्म्यहमपराधी भवतः । राजन् ? आत्मना सममागत्य भवता नीतस्य अनुर्मम सफलितम् । न प्राभवमद्यावधि भवन्तमभिज्ञातुमहम् । ' इति ।

महाराजरणजितसिंहस्य वचनमीदृशं निशम्य महाराजस्तमात्ममहृदा दृढमालिङ्ग्य प्रावदत्–' रणजितसिंह ? गतोऽसौ कालः । इतोऽस्माकं नूतनं जातं जनुरिति प्रभुध्यानं कुर्वाणा वयं मोदेमहि । स्ववाल्कानमूनालोकमाना आनन्देम वयमिदानीम् । ' इति । ततः स्मितमुखाम्बुजो महाराजश्रीकेसरिसिंहो रत्नप्रभां कुमुदिनीञ्चात्मनिकटमाकार्य तयोः शिरसि करकमलं निधाय शुभमाशीर्वादं दत्तवान् ।

---

१ प्रकाशयति । २ विपाकः परिणामः । ३ मातङ्गश्चण्डालः ।

अथ विमलां स्वसमीपमाहूय तन्मस्तके हस्तं विनिधाय व्याजहार महाराजः ‘पुत्रि ! भाग्यशालिनी त्वमसि। त्वत्स्वामिनोऽयमिदानीं पुनर्भवः संवृत्तोऽस्ति। वत्से ? अस्य पापानुतापक्लेशानुनिर्मलस्यात्मना समं सहगमनं विधेहि। लोकान्तरेऽपि स्वदयितेन सह प्रभुगुणगणगानं कुर्वाणा सानन्दं सुखं निर्विशेस्त्वम्। पुत्रि ? कुर्यात्तव मङ्गलं सकलमङ्गलमूर्त्महेश्वरोऽयमनिशम्।’ इति।

सुचरित्रा विमला महाराजस्याशीर्वचनस्रजं शिरसा परिगृह्य ततः कियद्दूरं गत्वा स्थितवती। इयत्कालपर्यन्तं स्थित एवासौ क्रूरसिंहो निजपापकृत्यानुतापं वितन्वानोऽविरलगलदश्रुजलबिन्दुजालाञ्चितलोचनोऽवाङ्मुखोऽवर्तत। सोऽधुनाऽकस्मादभिधाव्य महाराजचरणारविन्दद्वन्द्वे निजमुत्तमाङ्गं निधाय तारस्वरमरुदत्। अथैनमुत्थापयन्महाराजः ‘उत्तिष्ठ, क्रूरसिंह ? उत्थितो भव। किमर्थं रुद्यते त्वया ?’ इति प्रोच्य तदीयपृष्ठे स्वहस्तं परिवर्तयामास। विलपन्नयं करौ सम्पुटीकृत्य समगादीत्– ‘भगवन् ? दुरात्मना मया सर्वेऽपि भवन्तो निपीडिताः सन्ति नितराम्; अगण्यानि मदपुण्यानि। हन्त ! किमिव भवेन्मम परमेश्वरन्यायालये ? अतीव संतप्यते मम हृदयं दुरितकर्मभिरेभिः।’ इति।

केसरिसिंह. । भद्रं भविता ते। क्रूरसिंह ? मा स्म शोची कृतानि। परमात्मध्यानमग्नो भव। क्षान्तानि तवाखिलानि दुष्कृतानि प्रभुणेति त्वमवेहि। तदिदानीमानन्दितहृदा सच्चिदानन्दकन्दप्रभुचिन्तनं विधेहि त्वम्।

क्रूरसिंहः। भगवन् ? मयैव नृशंसेन श्रीमन्मारणकपटजालं विरचितमभूत्। हन्त ! कथमहं तदानीं नोपरतोऽभवं दुरात्मा ! हे दयासिन्धो दीनबन्धो जगदीश्वर ? अतिमात्रमहं मन्ये भवदुपकारं यदत्रभवता महाराजस्य प्राणान् संरक्ष्याहमेकस्मादतिभयङ्करदुरितकर्मणः परित्रातः। महाराज ? कथममीषां मातङ्गानां हस्तात् परिमुक्तोऽत्रभवान् ? कुत्र चाथ संस्थितः ? इति विज्ञातुमिच्छामि।

केसरिसिंह । शृणु–क्रूरसिंह ? कथयामि तदुदन्तजातं ते। मारयितुं मां मातङ्गहस्ते समर्पितवति त्वयि जनैरमा अमी ततो मां भयङ्करमेकमरण्यं निन्युः। तत्रैकस्मिन्महीरुहतले मामुपवेश्य चण्डाला इमे मम वधं कर्तुं प्रवृत्ताः। परमन्यैव परमेश्वरेच्छाऽभवत्। तान् मनाग् विरन्तुं प्रोच्य– ‘प्रभाविताः स्युरिमे यदि मदुपदेशैरुपदिशामि तदाऽहमन्तिमकालमिमान् !’ इति समवधार्य तानहं बहुविधमुपादिशम्। परमेश्वरकृपया तेषामुचितं हृदि दयया। परिज्ञातैस्तैर्मद्दोषनिर्बर्हणविचारः। अथ जनकैरेतैः– ‘नागन्तव्यं श्रीमता कदाप्यत्र नगरे ?’ इति मत्त प्रतिश्रुतमादाय तच्छ्रगमेवाहं ततः प्रस्थापितः। प्रयातेषु तेषु काननाभिमुखमहं प्रस्थितः। अग्रतो गच्छन्नहं विन्ध्याटव्यामटव्यां नियतिर्वैलैकस्मिन्स्थले स्वपरमपूज्यगुरुणा श्रीयोगेन्द्रनाथेन समं समगंसि। परमपूजनीयान् गुरुचरणानवलोक्यै-

---

१ चण्डालाः। २ निबर्हणं मारणम्। ३ प्रतिज्ञानम्। ४ नियतिर्दैवम्। ५ मिलितः। सङ्गत- इति यावत्।

वाहमस्यानन्दसान्द्रहृदयस्तत्पदारविन्दद्वन्द्वे निपत्य वन्दनमकार्षम् । असौ मामभिज्ञाय– 'कथमिदमरण्यं सम्प्राप्तवानसि १' इत्यादिवृत्तान्तमपृच्छत् । सकलामात्मकथां तस्मै निवेद्य– 'नाधुना पुनर्जिगमिषामि संसारमहमित्यभिधाय तदाश्रमे सुखं न्यवात्सम् । मद्गुरुणा चिरकालात्यक्तोऽभवत्संसारमोहः । तेनातुलं मर्कटजालं विपद्य 'प्रभुस्मरणे मन समाधाय योगबलमुपलब्धमभूत् । निजपरमपूज्यगुरुचरणशुश्रूषालाभमुपलभ्याहं महता दर्पेण तत्रासु परिचरणमयसम् । किञ्चित्कालानन्तरं तस्मात् स-न्यस्ताश्रमदीक्षामुपगृह्य शनैः शनैः तत्कृपया योगबलेमुपलब्धवानहम् । तस्यैव योगबलस्य प्रभावेणैव स्वपुत्रप्रवृत्तिं तत्र निवसन्नेवाहं समुपलब्धवान् । तत्प्रतापेनैवाहमात्मजरक्षणं कर्तुं शक्तोऽभवम् ।

नृसिंह । भगवन् ? तत् किं स्वयमेव श्रीमान् रणवीरहननप्रवृत्तस्य ममासीत्तदानीमुपदिश्य सम्बोधयिता खलु ? ।

केसरिसिंह । नैव । रणवीरस्यायरक्षको गुरुवरो मे योगेन्द्रनाथोऽभूत् । मार्गयं स्वयोगबलेनास्मदीय भद्रं वितनुते स्म । पश्चादहं विज्ञापितस्तया सकलवार्तयाऽमुना । प्राप्तयोगबलमवगत्य मां संसारशुभकर्माणि कर्तुमादिश्यासौ हरद्वाराभिमुखं प्रतस्थे । प्रस्थिते तस्मिन्नहं तत्रैवारण्ये पर्णकुटीं विरच्य परमात्मध्यानमकरवम् । कदाचित्कर्हिचित् स्वपुत्रदशां निरीक्षिषि । अहमेवास्य मोचयिता बन्धनालयाद् रणवीरस्य । मयैव दर्शिता दुर्गाभ्यन्तरगामिनी सुरङ्गा चन्द्रसिंहाय । योगबलस्यैव चमत्कारोऽयं यदयं प्राप्तवान् गुप्तगृहगामिनीं सुरङ्गां तदा ।

नृसिंहः । ( साश्रु । ) प्रभो ? सुतरामनुकम्प्यायमत्रभवता पापकर्मणः प्रतिरुद्धः । जगदीश्वरः करोतु साहाय्यमनिशं भवन्मङ्गलकर्मणि । इदानीमहं शान्त्या मरणं प्रपत्स्ये । चिरकालादद्य शान्तमजनि मम हृदयम् ।

केसरिसिंह । क्रूरसिंह ? अपि जिजीविषसि त्वम् ? ।

क्रूरसिंहस्तु– 'नैव प्रभो ? नाधुनाऽभिलषामि क्षणभङ्गुरमिदं जीवनम् ।' इति व्याहृत्य योगीन्द्रपदारविन्दमवन्दत । 'जगदीश्वरस्त्वां क्षमतां त्वद्दुरितकर्मकृते ।' इति निगद्य महाराजः स्वपुत्रौ गृहीत्वा सिंहासने व्यराजत । महाराजश्रीरणजितसिंहोऽपि स्वासनं समलङ्कृतवान् । क्षणं शान्तं स्थित्वा चन्द्रसिंहः क्रूरसिंहं समपृच्छत्– 'क्रूरसिंह ? अपि निवेदनीयं किमपि ? ब्रूहि– यद् विवक्षसि त्वमिदानीम् । समुद्यतोऽस्मि तवाखिलकामनां पूरयितुमिति ।'

क्रूरसिंह । राजन् ? केवलं स्वपापकर्मणां क्षमां प्राप्तुमेव ममाभिलाषो महान् ।

चन्द्रसिंह । क्षान्तोऽसि सकलैस्त्वमस्माभिः । किमप्यपरं वाञ्छसि ? ।

क्रूरसिंह । सद्गमनाभिलाषो विद्यते मत्प्रियाया विमलायाः, तदस्मिन् कर्मणि सहायो भवतु श्रीमान् ।

---

१ सन्दपूर्णम् ।

चन्द्रसिंहः । धर्मभगिनी विद्यते मम विमला । तदहं विधास्यामि तदिच्छानुकूलं प्रबन्धमखिलम् । ब्रूहि ततः परम् ?

क्रूरसिंहः । स्वीयामखिलां सम्पत्तिमहमार्यायै कुमुदिन्यै समर्पयितुमभिलषामि । तदिमां स्वीकारयतु श्रीमानत्रभवता ।

चन्द्रसिंहः । तथा विधास्यति सा । ततोऽन्यत् ? ।

क्रूरसिंहः । महार्हमहामणिरत्नमौक्तिकादिभिरनल्पकमाहात्म्या सम्पत्तिरियमखिला गुप्तगृहदक्षिणपार्श्ववर्तिनो विशालवटतरोरधस्ताद्विहिताऽस्ति । ततो निःसार्य समानीय चार्यायै भगवत्यै कुमुदिन्यै दातव्या । महाराज ? आमीदियं मे कामना, सा च परिपूर्णा दयया देवेन । अतोऽहं शान्त्या संस्थास्ये ।

चन्द्रसिंहः । क्रूरसिंह ? त्वदिच्छानुसारं सम्पत्स्यते सकलम् । तत्सम्प्रति सर्वां वासनां विहाय प्रभुस्मरणं विधेहि, येन तवोद्धारो भवेत् । अप्यवशिष्टं किमपि ते कथनमधुना ? ।

क्रूरसिंहः । नैव प्रभो ? पूर्णा मम कामनाः । न विद्यते कोऽपि साम्प्रतमसंतोषो हृदि मे । सुखिनं करोतु सपरिवारं प्रभुं विभुरयं महान् ।

अथ किञ्चित्कालानन्तरमसौ क्रूरसिंहः कारालयं नीतः । तदनु महाराजश्रीचन्द्रसिंहः सभां विसर्जितुमादिदेश । सर्वेऽपि मन्या हर्षोत्कलिकया कदाचिन् महाराजश्रीकेसरिसिंहस्य कदाचिन महाराजश्रीरणजितसिंहस्य च जयमनुघुष्यन् । स्वस्वस्थानं प्रतस्थिरे सर्वेऽपि । महाराजश्रीचन्द्रसिंहः स्वजनकानुजादिसकलराजमण्डलपरिवारितो राजमहालयं प्रस्थितः । विशालेयं राजसभा निर्मक्षिका संवृत्ता । केवलमवशिष्टास्तत्र प्रहरा भटाः ।

❁ इति वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ ज्ञानेन्द्रचरिताभ्रते कुमुदिनीचन्द्रे पञ्चदशी कला । ❁

---

# अथ षोडशी कला ।

"यथायथादृशं येन कृतं कर्म शुभाशुभम् ।
तत्तावत्तादृशं तस्य फलमीशः प्रयच्छति ॥" ( नलचम्पूः )

"नहि सत्यात्परो धर्मो नानृतात्पातकं परम् ॥" ( स्मृतम् । )

"सत्येन पन्था विततो देवयानः ।" ( इत्युपनिषत् । )

* आसीदयं महाराजादानादिनं क्रूरसिंहस्येति मरणायासौ समुद्यतोऽभवत् । नाधुना वाञ्छति जीवितुं क्रूरसिंहः । नितान्तं विरक्तमस्य मनः संसारादसारादितः । चिन्तयति निरन्तर-

थिर समुद्रस्थादसौ। प्रस्खलन्तमिममवलोक्य सैनिकाः प्रावोचन्—'किं रे क्रूरसिंह! कथमिदानीमसि? अस्माकं महाराजस्य राजमहिष्याश्च बलिदानकाले त्वतुलं बलमवर्तत त्वयि। तत्कथमधुनैवं निर्बलीभूय प्रस्खलसि त्वमिति?'

एतद्वाक्शलीनां सैनिकानां वचनविशिखजालं शान्तहृदा सममहत क्रूरसिंहः। मरणायैवासौ कृतनिश्चयः सम्प्रति। तदणुमात्रमपि नाभवदस्य स्वशरीरचिन्ता। अमुना तु यावज्जीवं शरीरकष्टं विषह्य निजपापकर्मणां प्रायश्चित्तं विधातुं निश्चितं खलु!!

आसीदद्यापि मनाग् विलम्बो नियतकालस्य। ततः पूर्वं सैनिकैः कारागृहान्निःसारितश्चन्द्रवतीतीरं नेतुमयं क्रूरसिंहः। गलपाशदण्डितोऽयमिति विज्ञापयितुं तदीयहस्ते निबद्धैका रज्जुः। रज्जुरियमन्यतमेन सैनिकेन धृताऽऽसीत् स्वहस्ते। अपरे च सैनिकास्तदभितो विकोशकृपाणपाणयः समवातिष्ठन्त। क्षणमिव तत्र स्थित्वा सर्वे सैनिकाः क्रूरसिंहमादाय चन्द्रवतीतटं गन्तुं प्रवृत्ताः।

चन्द्रवतीतीरवर्तिन्यामेकस्यामुच्चभुवि द्वौ विशालौ पटमण्डपौ समुत्तम्भितौ बभूवतुः। तयोरेकः सुन्दरो मध्यपटमण्डपः सपरिवारमण्डलस्य महाराजस्य कृते विनिर्मितः; अपरश्च प्रधानप्रकृतिमण्डलार्थं विरचितोऽभूत्। तयोः पटमण्डपयोरनतिदूरेऽतिविशालमेकं समुच्छ्रितं नगरजनकृते महावितानं पटभवनम्। चन्द्रवतीसरित्तीरे विमलायाः पत्या सहगमनकृते चन्दनकाष्ठमयी समचतुष्कोणा महत्येका विरचिता चिता। सहगमनसमये सपामानुः[1] शब्दो न भवेत्कर्णगोचर इति बहुविधानि वाद्यानि समुपस्थापितानि तत्र। अल्पीयसैव कालेन पौरजनमण्डलानि तत्रोपेत्य पटभवने समुपतस्थिरे। अतिमात्रमाकुला आसन्नगरनिवासिनो निरीक्षितुं पाशे लम्बमानं क्रूरसिंहम्। अद्यापि नापनीता[2] बभूव हृदयपटलादमोघा महाराजश्रीविजयसिंहस्य मृत्युस्मृतिलेखा। 'स्वमहाराजं राजकुमारीञ्चातिवरां नृशंसोऽयं, निर्दोषिजनानप्यसौ दुरात्मा पशुमारं मारणीय' इति मिथः समालपन् सर्वेऽपि नागरिकाः।

अत्रान्तरेऽनीभिरालोकि सैनिकैरानीयमानः क्रूरसिंहः। अमुमवलोक्यैव सकलैस्तदभिमुखं निपातिता न्यक्कारमयी[3] नयनयुगली। क्रूरसिंहः शनैः शनैर्निक्षिपन् पदानि-अवनतवदनश्चचाल। सैनिकास्तमानीय नदीकूलमुपाजग्मुः। क्षणादेव महाराजचन्द्रसिंहोऽपि निजमण्डलेन समनुगतस्तत्र। एतमालोक्यैव पौराः 'विजयतां महाराजश्रीचन्द्रसिंहः!' इति सारं जयमायोष्य प्रणामं चक्रुः। अथ महाराजचन्द्रसिंहः स्वजनकेन महाराजश्रीरणजितसिंहेन च सार्धमात्मार्थं निर्मितं पटमण्डपं प्रविवेश। तदनु रत्नवीरः प्रधानद्वयेन समं पटमण्डपं प्रविश्य निजबन्धुनिकटमुपाविशत्। अनन्तरं शिबिकान्तरावेष्टिता विमला कुमुदिनी रत्नप्रभा च तत्र प्राप्ता। शिबिकावाहका महाराजपटमण्डपाभ्यन्तरं शिबिकामानीय स्थापितवन्त इति तत्स्थितोऽपि सुन्दर्यो बहिर्निर्गताः। कुमुदिनी रत्नप्रभा चोभे महाराजपटमण्डपं प्रविश्य स्वार्थमायोजितमासनं समलञ्चक्रुः।

---

१ सिन्दुरोचः। २ दूरीकृता। ३ तिरस्कारपूर्णा।

मयमिदानीं जगदाधार सच्चिदानन्दकन्दप्रभुम् । नास्ति सम्प्रति सोऽयं पूर्वीय क्रूरसिंह । अनुतापजलेन प्रक्षाल्य निजहृदयमसौ निर्मलो जात । दिनद्वयत परित्यक्तममुनाऽशनमिति तदीय स्नातममल कलेवरम् । अत्रान्तरे कारालये कोऽपि मनिशाधिवालयस्ततामुना । क्षणान न्तर पृष्ठतो दृष्टि निक्षिपन्नयं स्वप्रियनमां विमला महाराजश्रीचन्द्रसिंहेन साक स्वाभिमुखमा यान्तीमपश्यत् । दण्डविज्ञापनानन्तर क्रूरसिंहो बन्धनालये निर्बन्धन एव स्थापितोऽभूदित्यसौ विमलया सहायान्त महाराजमवलोक्यैव समुत्थाय शनै प्रत्युज्जगाम तमादातुम् । समुपगम्यैव महाराजमसौ सश्रय सादरमभिवन्द्यैकत स्थित्वा मृदुगिरा विमलामब्रवीत् ' विमले ? पवित्रविमले ? किमर्थं महाराजस्यात्मने कष्ट दत्तवत्यसि त्वमिह समानीयात्रभवन्तमिति ? '।

विमला । भव तमाश्वासयितु परिपूरयितुञ्चाखिलकामना भवतो महाराजमहमत्रानीतवती ।
क्रूरसिंह । प्रिये विमले ? दयालुना श्रीमता चन्द्रसिंहमहाराजेन पूरिता ममाखिला मनोरथा । नावशिष्ट सम्प्रति किमप्यभीष्ट मे ।

चन्द्रसिंह । क्रूरसिंह ? पूरयिष्यते तवाखिलमभिलषितम् । मा स्म चिन्तयस्त्वम् । अद्यापि किमप्यभिलषित तवावशिष्टञ्चेद् विज्ञापय मे । यदि जिजीविषसि त्वं तर्हि विमलान्त करणाया अस्या विमलाया कृते प्रभविष्यामि जीवनमपि दातुम् । अपि वाञ्छसि जीवितुम् ? ।

क्रूरसिंह । अत्युपकारमह मन्ये देवस्य । नायमिदानीमधिकं जीवितु वाञ्छति कृतघ्न । चेदहमिह जगति गलपाशकष्ट सोढ्वा पञ्चत्व यास्यामि तदा जगदीश्वरन्यायालयेऽद्वैदुरिताना मम क्षमा लप्स्यते । राजेन्द्र ? अधुनाह क्षणमेकमपि जगतीह न जिजीविषामि । अनुगृहीतोऽयं कृपालुनेति श्रीमदुपकार मन्यमानो निरन्तर वितरतु श्रेय श्रेणिं श्रीमते सकलेश्वरोऽयमिति प्रार्थयतेऽसौ भगवन्त परमात्मानम् । ( विमला प्रति । ) प्रिये विमले ? तवाप्यपराद्ध मयाऽतिमात्रम् ।

विमला । नास्ति समय सम्प्रति तद् विचिन्तयितुम् । साम्प्रतन्तु केवल सकलेश्वर स्मरतु भवान् । अहमपि श्रीमता सह सुरलोकमागन्तु सनद्धास्मि । निश्चिन्तो भवतु भवानधुना । अस्ति किमप्यन्यद् वक्तव्यमद्यापि ? ।

क्रूरसिंह । केवलमेकाऽस्मि समभ्यर्थना यद् गलपाशदानानन्तर कलेवर मम न स्पृशेन्मातङ्गो यदि वर स्यात्तर्हि ! !

चन्द्रसिंह । क्रूरसिंह ? निश्चिन्तो भव । न स्प्रक्ष्यति तव देह चण्डाल ।

' शान्तिरजनि ममेदानीमन्त करणे । इति निगद्य क्रूरसिंहश्चन्द्रसिंहचरणयोर्मस्तक न्यधत्त । अथ निष्क्रान्तौ महाराजेन सम विमला बन्धनालयात् ।

समासन्ने मध्याह्नकाले समागत्य सैनिका क्रूरसिंह प्रोचुः ' एहि, क्रूरसिंह ? संजातोऽयं समयस्त्वामिदानीं तरङ्गिणीतीरं नेतुम् । तदधुना बद्धपरिकरो भव तत्र गमनायेति । ' यद्यप्यनुमपि नागीच्छाम समर्थः क्रूरसिंह तथापि सैनिकवाग्वादानाकर्ण्य कथंकथमपि प्रस्खल

त्रिव समुद्रस्थादसौ । प्रस्खलन्तमिममवलोक्य सैनिकाः प्रावोचन्—' किं रे क्रूरसिंह ? कथमिदानीमसि ? अस्माकं महाराजस्य राजमहिष्याश्च बलिदानकाले त्वतुलं बलमवर्तत त्वयि । तत्कथमधुनैवं निर्बलीभूय प्रस्खलसि त्वमिति ? '

यमदूताकृतीनां सैनिकानां वचनविशिखजालं शान्तहृदा समसहत क्रूरसिंहः । मरणायैवासौ कृतनिश्चयः सम्प्रति । तदणुमात्रमपि नाभवदस्य स्वशरीरचिन्ता । अमुना तु यावज्जीवं शरीरकष्टं विषह्य निजपापकर्मणां प्रायश्चित्तं विधातुं निश्चितं खलु ! !

आसीदद्यापि मनाग् विलम्बो नियतकालस्य । ततः पूर्वं सैनिकैः कारागृहान्निःसारितश्चन्द्रवतीतीरं नेतुमयं क्रूरसिंहः । गलपाशदण्डितोऽयमिति विज्ञापयितुं तदीयहस्ते निबद्धैका रज्जुः । रज्जुरियमन्यतमेन सैनिकेन धृताऽऽसीत् स्वहस्ते । अपरे च सैनिकास्तदभितो विकोशकृपाणपाणयः समवातिष्ठन्त । क्षणमित्थं तत्र स्थित्वा सर्वे सैनिकाः क्रूरसिंहमादाय चन्द्रवतीतटं गन्तुं प्रवृत्ताः ।

चन्द्रवतीतीरवर्तिन्यामेकस्यामुत्तलभुवि द्वौ विशालौ पटमण्डपौ समुत्तम्भितौ बभूवतुः । तयोरेकः सुन्दरो भव्यपटमण्डपः सपरिवारमण्डलस्य महाराजस्य कृते विनिर्मितः; अपरश्च प्रधानप्रकृतिमण्डलार्थं विरचितोऽभूत् । तयोः पटमण्डपयोरनतिदूरेऽतिविशालमेकं समुन्नमितं नगरजनकृते महावितानं पटभवनम् । चन्द्रवतीसरित्तीरे विमलायाः पत्या सहगमनकृते चन्दनकाष्ठमयी समचतुष्कोणा महत्येका विरचिता चिता । सहगमनसमये सत्यामातुः शब्दो न भवेत्कर्णगोचर इति बहुविधानि वाद्यानि समुपस्थापितानि तत्र । अल्पीयसैव कालेन पौरजनमण्डलानि तत्रोपेत्य पटभवने समुपतस्थिरे । अतिमात्रमाकुला आसन्नगरनिवासिनो निरीक्षितुं पाशे लम्बमानं क्रूरसिंहम् । अद्यापि नापनीता बभूव हृदयपटलादमीषां महाराजश्रीविजयसिंहस्य मृत्युस्मृतिलेखा । ' स्वमहाराजं राजकुमारीञ्चातितरां नृशंसोऽयं निपीडितवानित्यसौ दुरात्मा पशुमारं मारणीय' इति मिथः समालपन् सर्वेऽपि नागरिकाः ।

अत्रान्तरेऽमीभिरालोकि सैनिकैरानीयमानः क्रूरसिंहः । अमुमवलोक्यैव सकलैस्तदभिमुखं निपातिता न्यक्कारमयी नयनयुगली । क्रूरसिंहः शनैः शनैर्निक्षिपन् पदानि—अवनतवदनश्चाभूत । सैनिकास्तमानीय नदीकूलमुपाजग्मुः । क्षणादेव महाराजचन्द्रसिंहोऽपि निजमण्डलेन सममुपगतस्तत्र । एनमालोक्यैव पौराः ' विजयतां महाराजश्रीचन्द्रसिंहः । ' इति तारं जयमाघोष्य प्रणामं चक्रुः । अथ महाराजचन्द्रसिंहः स्वजनकेन महाराजश्रीरणजितसिंहेन च साकमास्मार्थं निर्मितं पटमण्डपं प्रविवेश । तदनु रणवीरः प्रधानद्वयेन समं पटमण्डपं प्रविश्य निजबन्धुनिकटमुपविष्टवान् । अनन्तरं शिबिकान्तराधिष्ठिता विमला कुमुदिनी रत्नप्रभा च तत्र प्राप्ता । शिबिकावाहका महाराजपटमण्डपाभ्यर्णे शिबिकामानीय स्थापितवन्त इति तत्स्तिस्रोऽपि सुन्दर्यो बहिर्निर्गताः । कुमुदिनी रत्नप्रभा चोभे महाराजपटमण्डपं प्रविश्य स्वार्थमायोजितमासनं समलञ्चक्रतुः ।

---

१ निजानुरोधः । २ दूरीकृता । ३ तिरस्कारपूर्णा ।

सती विमला साम्प्रतं समलङ्कृतवती निजाङ्गं पुष्पाभरणैः। तदीया मेचकमेचकाः कुञ्चितकुञ्चिता विमुक्ता बभूवुः प्रलम्बाः केशपाशाः। कुङ्कुमाङ्कितमभूदस्या ललाटम्। विमलान्तःकरणेयं विमला कलहमगलत्या कल्लोलिनीकूलस्थायिनः क्रूरसिंहस्योपकण्ठमुपेत्य तदीयकरनिबद्धरज्जुं मोचयितुं सैनिकान् कथितवती। तत्कालमेव क्रूरसिंहकरसंकीलितं रज्जुखण्डमपनीतं सैनिकैः। अथ विमला क्रूरसिंहकलेवरसम्पर्कं कृत्वा कोमलगिराऽमुं शान्तिबहुलमुपदिदेश। तस्याः करपल्लवस्पर्शसमकालमेवासौ क्रूरसिंहस्तत्करकमलं निजकलेवरादपनीय स्वहस्तेन तत्पाणिपद्मजमादाय निजगाद–' विमले ? मदीयपवित्रविमले ? किमिति कलङ्कयसि किल्बिषकारिणो मम कलेवरसम्पर्केण स्वकं निष्कलङ्कं कमनीयकोमलकरकिसलयम् ? ' इति।

विमला। नाथ ? पवित्रोऽसि भवान्। सम्प्रति सकलं विचारं परिहाय ध्यायतामेकाग्रमनसा जगदेकदेवो हृदयदयितेन।

क्रूरसिंह। आम्। तथैव करोमि साम्प्रतमहम्। प्रिये विमले ? त्वदङ्गस्पर्शेन गात्रं मे पवित्रमजनि। इदानीमहं सच्चिदानन्दकन्दपरब्रह्मणि मनः समादधामि। तदानन्दघनमुपासितुमुद्यतोऽस्मि सम्प्रति। परत्र तव पन्थानं प्रतीक्षमाणोऽहं स्थास्यामि।
( इति समुदीर्यासौ परमेश्वरमध्यायदेकाग्रमनसा )

दीनारकोटिपरिपूरिताः पेटकाः पोट्टलिकाश्चापूर्णा निराश्रितजनेभ्यो दातुं समानीता बभूवन्। तेभ्यः प्रगृह्य निराश्रयानाथजनाय वितीर्णवती विमला। इत्थं वितरन्त्या तस्याः पुरावर्तत मध्याह्नसमयः। नभोऽन्तिकमुपेयिवान् भगवान् भास्करमणिः। सर्वत्र शान्तिदेवी दिदीपे। निपतत्काले सेनापतिः समादिष्टवान् सैनिकान् बन्दीकृतस्य गलपाशदानाय। ध्यानमग्नं क्रूरसिंहं प्रापयन् सैनिकाः। महाराजस्य पटमण्डपपुरत एव गलपाशदानस्थलं निश्चितमभूत्। समयेऽस्मिन् कापि मानसीमनसि क्रूरसिंहस्य अपदोषदुःखमोहमयी भावना। केवलमयं मुहुर्मुहुः प्रभुस्मरणं कुर्वन् आ यत्– 'अयि दयालुदेव ! क्षन्तव्यतामयं तुच्छदुरितसंकारी नराधमः। मातस्त्वमसि त्वदुत्कृष्टतरं नेह जन्मनि। अत एवापमय गलपाशदण्डो मे जायते। दण्डनीयोऽहं निजनमोदयेनैव दण्डन। प्रभो ! स्वपवित्रप्रायसभायां क्षमां वितीर्य मेदं निजचरणारविन्दभक्तिरसास्वादमये दुर्लभे प्रदाय पादुष्कृतवामपत्नीकप्रवर्धये सविनयमहं प्रार्थये। ' इति।

अथ सैनिकौ क्रूरसिंहं गलपाशदानदारुस्तम्भसकाशमानिन्यतुः । चन्द्रवतीधुनीरोधसि वृहदेकं काष्ठचतुष्कं स्थापितमभूत् । तदभितो द्वौ निखातौ दारुस्तम्भौ, तयोरुपरि तिर्यङ् निहितो दारुस्तम्भः । तिर्यग्दारुणि तस्मिन् रज्जुबन्धनार्थमायोजितं लोहकटकद्वयम् । अमुष्मिन् काष्ठचतुष्के हतभाग्यः क्रूरसिंहः समारोपितो भटाभ्याम् । अथास्य कण्ठे मेदुरा सूक्ष्मदृढतरा रज्जुरामुक्ता । सन्नद्धं सकलं कर्म । केवलमवशिष्टमधोवर्ति चतुष्कमपनेतुमधुना । तदपनयननिर्देशमधिगन्तुं प्रधानाभिमुखं ददृशतुः सैनिकौ । तयोर्हृद्गतमभिज्ञाय स्वासनादुत्थाय प्रधानः क्रूरसिंहं प्रोवाच- 'क्रूरसिंह ! त्वमधुना संसारादितो विमुक्तो भवसि चिरन्तनसमयाय । याचस्व याचनीयं यदि ते किमपि । त्वदीयमखिलमभिलषितं पूरयितुमुद्यतोऽस्ति राजेन्द्रः । ' इति ।

क्रूरसिंहः । ( प्राञ्जलिः । ) क्षणभङ्गुरस्यास्य जगतो नाभिलषामि वस्तु किमपि । परमद्यापि नाहं क्षान्तो देवेनेति तावत्येवाशिष्टा मम कामना ।

तदीयवाक्यश्रवणसमकालमेव महाराजश्रीचन्द्रसिंहः पटमण्डपाद् बहिर्निर्गम्य तमुपेत्य समभाषत- 'क्रूरसिंह ! अधुना मित्रभूतस्तव पुरावैरी चन्द्रसिंहोऽयं त्वत्सकलदुष्कर्माणि क्षमते । सम्प्रति त्वयि नावशिष्यते मनागपि द्वेषो मे । तवात्मशान्त्यै परमात्मानमहमभ्यर्थये । क्रूरसिंह ! कथय, किमप्यन्यदभिवाञ्छसि त्वमिदानीम् ! ' इति ।

'नैव प्रभो ! शान्त्याहमिदानीं मरणं प्रपत्स्ये ! ! ' इति निगद्य क्रूरसिंहः कुमुदिनीरत्नप्रभौ महाराजद्वयसहितं रणवीरञ्चाहूयात्मनिकटे प्रणम्य चाखिलान् सकृद्वीक्ष्य परितो नेत्रे निमील्योच्चस्वरेण परमेश्वरस्मरणं कर्तुमारेभे । अथ तदधोवर्तिचतुष्कमपनेतुमादिदेश सैनिकौ मन्त्रिवरः । तत्कालमेव सैनिकौ तत् काष्ठचतुष्कमाकृष्य क्रूरसिंहस्य कण्ठलग्नं पाशं पुनरेकदा परीक्षाञ्चक्राते । चन्द्रसिंहः कुमुदिनी रणवीरो रत्नप्रभा विमला महाराज्ञौ तथैवान्येऽपि सकला जना वधस्तम्भाभिमुखं पृष्ठं विधायावतस्थिरे । 'क्रूरसिंह ! स्मर परमेश्वरम् । ' इत्यभिधाय सैनिकाभ्यामपनीतं तदधोवर्ति चतुष्कम् । तत्क्षणमेव- 'ओ३म्' 'ओ३म्'... इति पदमुच्चारयन् क्रूरसिंहो लम्बितवान् पाशे । कण्ठोऽस्य प्रतिरुद्धः । चक्षुषी च बहिरागते । तेन समं स्फुटमाकर्ण्यमानं प्रणवपदमपि सहसाऽभूदवस्फुटम् ... 'ओ... ३-म', इति । दुरात्मनः क्रूरसिंहस्यात्मा पार्थिवं वपुरिदं परिहाय प्रभुचरणशरणं प्रपद्य ।

प्रनष्टः क्रूरसिंहस्यामर आत्मा इहलोकात् । न विद्यन्ते सम्प्रति प्राणा अस्य वपुषीति विभाव्य तदीयं शवं नीचैरवतारितम् । चन्द्रसिंहप्रमुखानां सर्वेषां नयनाभ्यां बाष्पजलधारा प्रावहत् । अथ क्रूरसिंहशवं शैवलिनीकूले नीतम् । सती विमला शान्त्याऽवलम्बत सम्प्रति । पश्चाच्च कुमुदिनीरत्नप्रभे समुपाविष्टाम् । सर्वमपि राजमण्डलं क्रूरसिंहशवेन सार्धं स्रोतस्विनीतटमुपागमत् । तत्रोपेत्य क्रूरसिंहकुणपं स्नपयित्वा सुन्दरवासांसि परिधाप्य

---

१ नदीतीरे । २ भुवि रोपितौ । ३ स्निग्धा । ४ आरोपितः । ५ ओङ्कारः । 'ओङ्कारप्रणवौ समौ ।' इत्यमरः । ६ कृत्स्नं शवम् ।

चितायां सवेशयामास नरेन्द्र । सती विमलाऽपि नद्यां सस्नाय चितां प्रदक्षिणीकृत्य समारुह्य चैमां स्वप्राणनाथमस्तकं निजोत्सङ्गे विनिधाय निषण्णवती । सकला अपि जना सतीं विमलां प्रणेमुः । सर्वेभ्य आशीर्वाद दत्तवती सती देवी । अथ महाराजौ प्रणनाम सती विमला । ताभ्यां सजलदृशा सगद्गदगिरा च-' वत्से ? स्वामिना सह चिरकाल स्वर्गसुख मुपभुङ्क्ष्व । भद्रमस्तु ते ? ' इति समुदीरितेनाशीर्वचसा सम्भावितेयम् ।

अथ विमला कुमुदिनीं रत्नप्रभाञ्चात्मसमीपमाहूतवती । पर्यश्रुमुख्यौ द्वे अपि राजकुमार्यौ विमलानिकटमाजग्मतुः । ताभ्यामिय साश्रो मङ्गलजनकमाशीर्वचन दत्वा चक्षुषी निमील्य महेश्वरस्मरण कृतवती । अत्रान्तरे रणवीरहस्तमादाय चन्द्रसिंहो विमलासकाशमागम्य तामवदत्- ' प्रिये भगिनि ? इमौ चन्द्ररणवीरौ त्वां प्रणमत' । अपराद्धं किञ्चिदाभ्यां ते, क्षन्तव्यौ त्वयैतौ भ्रातरौ ! ! ' इति । चन्द्रसिंहवचन निशम्य नेत्रे समुन्मील्य विमलाऽनयोर्भ्रातृवरयो शिरसि स्वकरसरोरुहं विन्यस्य— ' भ्रातरौ ? सुखिनौ विदधातु भवन्तौ विधाताय सर्वदा । नैवापराद्ध भवद्भ्यां किमपि मे । अयि वत्सलभ्रातरौ ! भवन्निमित्तमेव किमपि सुखमुपलब्धं मया । वत्स रणवीर ? अमर भूयात्तव यश ! विपत्तावपि न विचलितव्यं त्वया सत्यधर्मात् । भ्रातरौ ? भद्र भूयाद् भवतो ! ! ' इति समगादीत् ।

' तथास्तु भगिनि ? तव वचन शिरसा वहाम । किमादिश्यते सम्प्रति भवत्या ? ' इति पृष्टेव चन्द्रेण- ' प्रज्वाल्यतामिदानीं यथाविधि ज्वलनेन चिता ! ' इति निगदितवती । कनीयसा रणवीरेण साश्रुणा प्रज्वालिता यथाविधि चिताऽग्निना । परित प्रज्वलिता चिता । वाद्यकैर्वादितानि विविधानि वाद्यानि तदा, यत कस्याऽपि कर्णगोचरो न स्यात्सत्या मातु शब्दः । सतीमरणसमयोद्भव शब्दोऽतिमात्रममङ्गलो विभाव्यते । विमलान्त करणाया पतिदेवताया विमलाया' कलेवर शिरीषकुसुमपेशल प्रबले कृशानुकीलकुले प्रज्वलितम भूत् । वृहद्भानो प्रचण्डा ज्वालावली चितां प्रदक्षिणीकृत्य विमलाविमलकान्तयो काय मालिङ्गन्ती दिदीपेतराम् । धूम्यो धूमकेतोर्विजयकेतुमालेव नीलनीला नील विष्णुपद प्रपेदे ।

इत्थं क्षणेनैवार्थयाज्ञोऽय स्वाश्रयीभूताविमौ भूतौ पञ्चभूतता नीतवान् । विमलाविमलाकान्तयो कान्त वपुर्भस्मावशेष समभवत । चितायाः पुरत केवल भस्मास्थिजाल पुञ्जीकृतमवशिष्टम् । तदवलोक्य शोकातुरहृदया, प्रस्थिता पुर पौरजना । भस्मास्थीनि तदीयानि चन्द्रयतीजले निक्षिप्तानि सतीदेवीसारकत्वेन तत्रैकमनाथायममन्दिर निर्मापयामास दिशन्मान्निसत्तमं नरेन्द्रश्रीचन्द्रसिंह ।

इत्यमजितदुर्गेराजपरिवारवैरी भयङ्करकर्मकारी धीरवीरः साहसिकप्रवीरद्वयसमय विहितानुतापः पापः शूरसिंह सस्तेरिव दाश्वकालायान्तरित ] ] कवलितवदना विकराळेन कालेन'पूरकर्माऽसौ तत्कालमेव कवलित, कृतः ॥

---

१ ज्वालयामास । २ अग्निज्वालासमूहैः । ३ धूमस तति । ४ अग्नेः । ५ आकाशम् । ६ आश्रयाश अग्निः । ७ राशीकृतम् ।

समाप्तेयं साम्प्रतं विश्वविस्मयकरी त्रिविधरसलहरीभराधरीकृतसुधामाधुरीविहितरसिकजनमनोरुचिमयी रुचिरा कथा। अनया समं घोरकर्मणः क्रूरसिंहस्य तदीयप्रचण्डप्राणनिवासस्थलानामप्यन्तो जातः। तदीया अनुचराः कान्दिशीका दिशो भेजिरे। केचन कन्दरिकन्दरदुर्गमदुर्गेषु विद्रुताः, इतरे च नरेन्द्रश्रीचन्द्रसिंहगुल्मेषु प्रविष्टाः। क्रूरसिंहमरणानन्तरमुभावपि महाराजौ कियन्ति दिनानि विजयनगरे स्थित्वा स्वपुत्रेभ्य आशीर्वादं वितीर्य गन्तुमुद्यतौ स्वाश्रमपदम्। ताभ्यां समं स्थविरमन्त्रिवरौ श्रीप्रतापसिंहनरेन्द्रनाथौ श्रीरणजितसिंहनरेन्द्रवल्लभादेवी चन्द्रप्रभा चामी गन्तुं समुद्यता अभूवन्।

अन्येद्युः प्रातरमी महाराजौ स्वमण्डलेन साकं मर्यादाशीर्भिः सम्भाव्य निर्जागपदाभिलापुकौ काननाभिमुखं प्रस्थितौ। तान् प्रस्थापयितुं चन्द्ररणवीरौ कियद्दूरं गत्वा तदीयनिदेशमादृत्य पुनः परावृत्तौ। अथ रणवीरः कतिपयदिनं निजबन्धुनिकटमुषित्वा भ्रातृभ्रातृजाययोरग्रे घटितां दुःखदायिनीं घटनामुपवर्ण्य क्रूरसिंहस्य च हृदयभेदकं मरणं विभाव्य खिद्यते स्म। एवं कतिचिद्दिनानि भ्रातृमनोऽनुमुपित्वा स्वराजनगरगमनाय भ्रातरमथमनुमतिमपर्ययाञ्चक्रे। चन्द्रसिंहो निजानुजं यथोचितमुपदिश्य राजधर्मं अवलम्ब्य स्वराज्यं प्रस्थातुमादिष्टवान्। अथ भ्रातरं भ्रातृजायाञ्चाभिवन्द्य रत्नप्रभामादाय सैन्येन समं स्वराजधानीं प्रतस्थे रणवीरः। कतिपयैरहोभिः प्रतिष्ठमानोऽयं स्वराजधानीमुपगम्य सुखेन राज्यं शशास। चन्द्रसिंहोऽपि विजयनगरे निवसन् निजपितृराज्यस्योपार्जितदुर्गस्य सम्यक् प्रबन्धं कुर्वाणः कुमुदिन्या समं सानन्दं दिनानि गमयन् प्रकृतिमण्डलञ्च रञ्जयन्नतिचिरं प्रजाः पालयाञ्चकार॥

प्रियपाठकप्रवराः सुहृद्वराः! अत्रासितेयं मनोहरा रुचिकरा कथा। इदमेव स्मरणीयं समासतः केवलं—‘सत्यमेव जयते नानृतम्॥’ इति सुहृदयैः सुहृन्महोदयैरभ्युदयमीप्सुभिरनिशम्। यश्चास्मिन्नैकरसानिर्झरमनोहरे राजहंसमिथुनप्रणयकेलिरुचिरे शीतोष्णपवनवात्यासुखोद्वेगकरे दुष्टव्याघ्रव्यतिकरे कथाकान्तारेऽमुना प्रणयिना समनतिचिरं विहृत्य पल्लवदनुकम्पमानैः परिश्रमस्याप्यमा पद्मसुरभीतोऽश्रमवद्भिरिति सचेतसां क्षमामिक्षुरेष कथाकाननपथिकानामग्रसरतो पथप्रदर्शकः प्रकृतिसौन्दर्यदर्शनरसिकः कविताकामुकः॥

* इति श्रीमदार्यवर्यश्रीजगज्जीवनदयाम्बुनिधिचन्द्रस्य भगवतीसरस्वतीमनोनन्दनवननन्दनमन्दारमहीरुहस्य पण्डितसत्यव्रतामजस्य कविताचन्द्रप्रभामनोवल्लभस्य वृन्दावनगुरुकुलाधिगतविद्यारत्नस्य पण्डितमेधाव्रतकविरत्नस्य कृतौ रसिकजनेत्रचकोरचन्द्रे कुमुदिनीचन्द्रे षोडशी कला॥ ❁

॥ परिपूर्णकलोऽयं कुमुदिनीचन्द्रः॥

---

१ शरीरभरः प्रकृत्यातिशयः। २ प्रथा विस्तारः। ३ गुल्मं स्कन्धं शिबिरमिति यावत्। ४ कथयित्वा। ५ प्रधानवर्गम्।

# श्रीरामचन्द्रनुतिः ।

गीतमिदं पद्यतरङ्गिणीत एवोद्धृतम् ।

गीतिका–नमामि साभ्युदयं नृचन्द्रं दशरथनृपहृदयम् ॥ ध्रुवपदम् ॥

तुङ्गक्षितिभृन्मस्तकश्रृङ्गे, विनिहितशुभचरणम् । सदयं
विनिहितशुभचरणम् ॥ नमामि० – ॥ १ ॥

रक्षोध्वान्तहरं क्षमाम्बरतो, द्विजगणवरशरणं शरण्यं द्विज०– ॥ नमा० ॥ २ ॥

पूर्णकलं विमलं सुमनोज्ञं,–सकलभुवनभरणं रसेन्द्रं सक०– ॥ नमा० ॥ ३ ॥

चञ्चद्बुद्धिसुचारुचन्द्रिक–कुमुदाकररमणं वरेण्यं कुमु०– ॥ न० ॥ ४ ॥

सत्वसिन्धुहृन्नन्दननन्दनं–विबुधहृदयहरणं बुधेन्द्रं विबुध०– ॥ न० ॥ ५ ॥

आशासञ्चितनिजकरनिकरं–जनकदुहितृरमणं सचित्रं जनक०– ॥ न० ॥ ६ ॥

मुनिमखभञ्जनपुण्यजनानां–जनितविकलहृदयं सुबालं जनि०– ॥ न० ॥ ७ ॥

चन्द्रमौलिधनुषो भङ्गं यो–विदधेऽतुलमतुलम् सलीलं विदधे– ॥ न० ॥ ८ ॥

विफलीकृतभृगुनन्दनपरशुं–प्रमुदितनृपतिबलं बलीन्द्रं प्र०– ॥ न० ॥ ९ ॥

राज्यग्रहवनवासनिदेशे–सममुखरुचिरुचिरं सुधीरं सम०– ॥ न० ॥ १० ॥

तातादेशकरं दशमधं–विपिनगमनमुखरं प्रवीरं विपिन०– ॥ न० ॥ ११ ॥

भरतश्रीग्रहणार्पितमपि तं–जनकवचननिरतं सुतेन्द्रं जनक०– ॥ न० ॥ १२ ॥

भ्रातृस्नेहनिदर्शनममलं–रघुकुलनृपतिलकं गुणीन्द्रं रघु०– ॥ न० ॥ १३ ॥

रक्षःकुञ्जरपुञ्जनिकुञ्जे–हरिमिव करिदलनं नृसिंहं हरि०– ॥ न० ॥ १४ ॥

लङ्केश्वरभुजदर्पमर्दनं–तदनुजरचितदयं दयालुं तदनुज० ॥ न०– ॥ १५ ॥

कृतसुग्रीवप्रणयपणं तं–कृतहरिसुतनिधनं सचापं कृत० ॥ न०– ॥ १६ ॥

मुनिजनमानसमोदनहंसं–त्रिभुवनभयकरणं रणान्ते त्रि० ॥ न०– ॥ १७ ॥

निरतं नैजप्रकृतिरञ्जने–प्रकृतिसुभगमनिशं नृपालं प्र० ॥ न०– ॥ १८ ॥

नानाशास्त्रकलागमकुशलं–विजितकरणविमलं शमीन्द्रं वि० ॥ न० ॥ १९ ॥

जगदानन्दकरं मनुजेन्द्रं–त्रिदशदमलयशसं भवान्तं त्रि० ॥ न० ॥ २० ॥

( वृन्दावनगुरुकुलीयद्वितीयकविसम्मेलने पण्डितमेधाव्रत-
कविरत्नकृता समस्यापूर्तिः । )

*यं योगीन्द्रकदम्बकं प्रभवति द्रष्टुं दृशा दिव्यया*
गायन्ती मधुरं गिरा यममलं श्रान्ता परं भारती ।
यस्यानन्तगुणालयस्य नितरां पारे गिरां वर्णनं
कोऽहं गातुमलं प्रभुं हितमतो मन्ये विरामं परम् ॥ १ ॥

प्रालेयैस्तुहिनीकृता नवरसा नष्टाऽपि सालङ्क्रिया
शीतेनातितरां विकम्पितपदा नोज्जृम्भते शारदा ।
म्लानं मेऽपि मुखारविन्दममुना हा हन्त ! कान्ते ? कथं
त्वामुज्जीवयितुं यतेय तदितो मन्ये विरामं वरम् ॥ २ ॥

सालङ्कारपदा सुवर्णरुचिरा भावान्तरङ्गोज्ज्वला
मुक्ताहारगुणप्रिया रसवती विद्वन्मनोहारिणी ।
सालङ्कामयमानमप्यसमयं तं चेद्विद्रावणं
वैदेहीव सुवाङ् न सूक्तिषु पटुर्मन्ये विरामं वरम् ॥ ३ ॥

त्यक्त्वा सुन्दरि ! तं वनेचरमिमं लङ्केन्द्रमङ्गीकुरु
श्रीलस्त्वामतुलेन वैभवसुखेनानन्दयिष्यत्यसौ ।
आलप्यालमिदं प्रतिश्रुतमये मुग्धाः शृणुध्व वच-
स्त्रैलोक्येन्द्रमपीह नास्ति तृणकं मन्ये विरामं वरम् ॥ ४ ॥

गन्तव्यं न मुनीन्द्र ? तत्र भवता श्रीगोधपुर्यामित-
स्तत्रत्या भवताममङ्गलमलं सज्जा विधातुं जनाः ।
कर्तुं कर्तमिमं मदीयमपि चेद् देहं दहेयुर्जना-
नैवाहं निगमोपदेशकरणान्मन्ये विरामं वरम् ॥ ५ ॥

मूर्त्यर्चामनिषिध्य चेदुपदिशेत्स्वच्छन्दमानन्ददं
स्वामिन् ! राज्यमिदं समर्प्य भवते शिष्यो भवेयं तव ।
राजन् ! राज्यमिदं कियत्तव पुनः स्वर्गोऽपि लभ्येत चेद्
देवाज्ञापरिपालनाद्यदि तदा मन्ये विरामं वरम् ॥ ६ ॥

मन्दं चन्दनशैलजानिललसल्लास्ये लतापल्लवे
माकन्दावलिमञ्जरीरसनया मञ्जुप्रियालापिनि ।
कुञ्जे कूजति पञ्चमं पिककुले गुञ्जन्मिलिन्दाकुले
कर्णाँस्तुदतोऽपि वायस ! गिरो मन्ये विरामं वरम् ॥ ७ ॥

पूर्वं हंसरवैर्विमुग्धहृदयो रम्भावनं प्राविश-
प्रोल्लङ्घ्याथ नदीं गतो गिरिवरं काश्मीरजालंकृतम् ।
चन्द्रं चुम्बसि चायुषाऽमृतमिति क्रुध्येऽङ्क[1]- के पृष्ठभाक्
चाञ्चल्यान्नु कुरङ्ग ? ते द्रुतमितो मन्ये विरामं वरम् ॥ ८ ॥

हेमन्तेऽपि पयोधराम्बरतले किं साम्प्रतं ते स्थितिः ।
कष्टं वर्द्धयसि प्रवासिन इतः कामं गृहस्थायिन- ॥
तन्मुञ्चाम्बरमञ्जसा कुरु मुदं कृष्णान्तरम्यप्रृते ?
याञ्चाङ्गीकरणान्न ते प्रणयिनां मन्ये विरामं वरम् ॥ ९ ॥

तन्द्रां मुञ्च गजेन्द्र ! किन्न विदितो लोकोत्तर संगर'
पिण्डार्थं हरिणेन्द्रयोरविचल शैलेन्द्रकुञ्जान्तरे ।
स्वातन्त्र्योपगमाय तेऽप्यवसर शीघ्रं यतस्वाधुना
स्वार्थोपार्जनकर्मणो हि तव नो मन्ये विरामं परम् ॥ १० ॥

# विज्ञापन ।